न ह्येवंविधं भुवनाद्भुतमतिशयमन्तरेण युगपदनेकसत्त्वोपकारः शक्यः कर्तुम् ।

अथ प्रेक्षावत्प्रवृत्त्यङ्गं प्रयोजनं वक्तुं तत्प्रस्तावनामाह—

**शब्दानुशासनेऽस्माभिः साध्व्यो वाचो विवेचिताः ।**
**तासामिदानीं काव्यत्वं यथावदनुशिष्यते ॥ २ ॥**

शब्दानुशासने **सिद्धहेमचन्द्राभिधाने** विवेचिताः—असाध्वीभ्यो वाग्भ्यः पृथक्कृताः । इदानीं शब्दानुशासनानन्तरं[1] तासां वाचां काव्यत्वं काव्यीभावो यथावत्तात्त्विकेन रूपेणानुशिष्यते । वाचां हि साधुत्वे निश्चिते सुकरः काव्योपदेशः । अनेन **शब्दानुशासनकाव्यानुशासनयोरे**ककर्तृकत्वं चाह । अत एव हि प्रायोगिकमन्यैरिव नारप्स्यते, **शब्दानुशासने**नैव चरितार्थत्वात् ।

शास्त्रप्रयोजनमुक्त्वा अभिधेयप्रयोजनमाह—

**काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च ॥ ३ ॥**

लोकोत्तरं कविकर्म काव्यम् । यदाह—

(3) प्रज्ञा नववोल्लेखशालिनी प्रतिभा मता ।
तदनुप्राणनाजीवद्वर्णनानिपुणः कविः ॥
तस्य कर्म स्मृतं काव्यम् ॥ [ काव्यकौतुके ]

सद्योरसास्वादजन्मा निरस्तवेद्यान्तरा ब्रह्मास्वादसदृशी[2] प्रीतिरानन्दः । इदं सर्वप्रयोजनोपनिषद्भूतं कविसहृदययोः काव्यप्रयोजनम् ।

---

**सर्वप्रयोजनोपनिषद्भूतमिति ।** यशोव्युत्पत्तिफलत्वेऽपि पर्यन्ते सर्वत्रानन्दस्यैव साध्यत्वात् । तथा हि कवेस्तावत्कीर्त्यापि प्रीतिरेव संपाद्या । यदाह—(1) "कीर्तिं स्वर्गफलामाहु." [ वामन १·१ ] इत्यादि । श्रोतॄणां व्युत्पत्तिर्यद्यप्यस्ति तथापि तत्र प्रीतिरेव प्रधानम् । अन्यथा प्रभुसंमितेभ्यो वेदादिभ्यो मित्रसंमितेभ्यश्चेतिहासादिभ्यः कोऽस्य [3]काव्यरूपस्य व्युत्पत्तिहेतो-

---

1. I, L °नुशासनादन्तरम्. 2. P ब्रह्मास्वादसदृशी. 3. A कायरूपस्य, C काव्यरूपयस्य.

यशस्तु कवेरेव। यत इयति संसारे चिरातीता अप्यद्ययावत् **कालिदासादयः** सहृदयैः स्तूयन्ते कवयः । प्रभुतुल्येभ्यः शब्दप्रधानेभ्यो वेदागमादिशास्त्रेभ्यो मित्रसंमितेभ्योऽर्थप्रधानेभ्यः पुराणप्रकरणादिभ्यश्च शब्दार्थयोर्गुणभावे रसप्राधान्ये च विलक्षणं काव्यं कान्तेव सरसतापादनेन संमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदिशतीति सहृदयानां प्रयोजनम । तथा चोक्तं **हृदयदर्पणे** ।

जायासंमितत्वलक्षणो विशेष इति । चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं[1] मुख्यफलमिति ॥

**कविसहृदययोरिति** । यः काव्यं कुरुते स कविः । यस्य तु काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता[2] सहृदयसंवादभाक् स सहृदयः । काव्यकर्तृत्वलक्षणपूर्वावस्थापेक्षया कविशब्दनिर्देशः । यतः कवेरपि भावकावस्थायामेव रसास्वादः संपद्यते । पृथगेव हि कवित्वाद्भावकत्वम् । यदाह[3]—(2) "सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते ॥" [ लोचन पृ. १ ] इति ॥

**यशस्तु इति** । यदाह—

(३) अमरसदनादिभ्यो भूता न कीर्तिरनश्वरा
भवति यदसौ संत्रद्धापि प्रणश्यति तत्क्षये ।
तदलममलं कर्तुं काव्यं यतेत समाहितो
जगति सकले **व्यासा**दीनां विलोक्य परं यशः ॥ [ रुद्रट १·२२ ]

**कवेरेवेति** । न तु सहृदयस्य ।

**प्रभुतुल्येभ्य इति** । कर्तव्यमिदमित्याज्ञामात्रपरमार्थेभ्यः ।

**मित्रसंमितेभ्य इति** । अस्येदं वृत्तममुष्मात् कर्मण इत्येवं युक्तियुक्तकर्मफलसम्बन्ध[4]प्रकटनकारिभ्यः ।

**उपदिशतीति** । अप्रयासेन शिक्षयति । व्युत्पत्तिं करोतीति यावत् ।

1. A, B पार्यन्तिकमुख्य०. 2 C, E वर्णनायतन्मयी० Scribes very often do not put the top curve on long ई. 3. A, B यथाह:. 4 A सम्बन्धप्रकटन०.

(4) शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥ इति ॥ [भट्टनायक]

धनमनैकान्तिकं व्यवहारकौशलं शास्त्रेभ्योऽप्यनर्थनिवारणं प्रकारान्तरेणापीति न काव्यप्रयोजनतयास्माभिरुक्तम् ।

प्रयोजनमुक्त्वा काव्यस्य कारणमाह—

**प्रतिभास्य हेतुः ॥ ४ ॥**

अयमभिप्राय.—ये शास्त्रेतिहासेभ्योऽलब्धव्युत्पत्तयोऽथवावश्यव्युत्पाद्याः प्रजार्थसम्पादनयोग्यताक्रान्ता राजपुत्रप्रायास्तेषां जायासंमितत्वेन परमप्रीतिकारिणः काव्यान् हृदयानुप्रवेशमुखेन चतुर्वर्गोपायव्युत्पत्तिराधेया । हृदयानुप्रवेशश्च रसास्वादमय एव । स च रसश्चतुर्वर्गोपायव्युत्पत्तिनान्तरीयकविभावादिसंयोगप्रसादोपनत त्येवं रसोचितविभावाद्युपनिबन्धे रसास्वादवैवश्यमेव स्वरसभाविन्यां व्युत्पत्तौ प्रयोजकमिति प्रीतिरेव व्युत्पत्ते. प्रयोजिकेत्यर्थः । ननु—

वयं बाल्ये डिम्भांस्तरुणिमनि यूनः परिणतौ
अपीच्छामो वृद्धान्परिणयविधिस्तु स्थितिरियम् ।
त्वयारब्धं जन्म क्षपयितुममार्गेण किमिदं
न नो गोत्रे पुत्रि ! क्वचिदपि सतीलाञ्छनमभूत् ॥ १ ॥

[विज्जाकायाः—सदुक्तिकर्णामृते]

इत्यादि काव्यमसदुपदेशकं दृश्यते । व्युत्पत्तिरपि च तस्मात्तादृग्विषया संभाव्यते । ततश्च तदनुपदेश्यमित्यायातम् । सत्यम् । अस्त्ययमुपदेशः, किन्तु निषेध्यत्वेन न विधेयत्वेन । य एवंविधा विधयः परस्त्रीषु पुंसां संभवन्ति तानवबुध्य परिहरेदिति कवीनां भावः ॥

एवमानन्दयशश्चतुर्वर्गोपायव्युत्पत्तीनां काव्यप्रयोजनतामसाधारणीं प्रतिपाद्य यत् कैश्चित् "श्रीहर्षादेर्धावकादीनामिव धनं राजादिगतोचिताचारपरिज्ञानमादित्यादेर्मयूरादीनामिवानर्थनिवारणं च" [काव्यप्रकाश उ. १] प्रयोजनत्रयमुपन्यस्तं, तत्प्रतिक्षिपति—

**धनमनैकान्तिकमिति** । नहि काव्याद् धनं भवत्येवेत्यनैकान्तिकत्वमित्यर्थ. ।

तथा चाह—

1. काव्यधी०—according to (K P S-P-I) 2. The first folio of D is missing. The second begins from यै. 3. D यासंस्मितत्वेन. 4. D सुहृदयात् नु. The reading may be सुहृदयानु. 5. A, B °नुप्रवेशरसा०. 6. A इत्येव. 7. A डिम्भ्यास्त०, B डिम्भ्यस्त०. 8. D drops मस्त्यय. 9. °नैकान्तिकमि०.

प्रतिभा नवनवोल्लेखशालिनी प्रज्ञा। अस्य काव्यस्येदं प्रधानं कारणम्। व्युत्पत्त्यभ्यासौ तु प्रतिभाया एव संस्कारकाविति वक्ष्यते। सा च सहजौपाधिकी चेति द्विधा। तत्र सहजामाह—

**सावरणक्षयोपशममात्रात् सहजा ॥ ५ ॥**

सवितुरिव प्रकाशस्वभावस्यात्मनोऽभ्रपटलमिव ज्ञानावरणीयाद्यावरणम्, तस्योदितस्य क्षयेऽनुदितस्योपशमे च यः प्रकाशाविर्भावः सा सहजा प्रतिभा। मात्रग्रहणं मन्त्रादिकारणनिषेधार्थम्। सहजप्रतिभाबलाद्धि **गणभृतः**[1] सद्यो द्वादशाङ्गीमासूत्रयन्ति स्म।

द्वितीयामाह—

**मन्त्रादेरौपाधिकी ॥ ६ ॥**

मन्त्रदेवतानुग्रहादिप्रभवौपाधिकी प्रतिभा। इयमप्यावरणक्षयोपशमनिमित्ता, एवं दृष्टोपाधिनिबन्धनत्वात्त्वौपाधिकीत्युच्यते।

सा चेयं द्विविधापि प्रतिभा—

**व्युत्पत्त्यभ्यासाभ्यां संस्कार्या ॥ ७ ॥**

व्युत्पत्त्यभ्यासौ वक्ष्यमाणौ। ताभ्यां संस्करणीया। अत एव न तौ काव्यस्य साक्षात्कारणं प्रतिभोपकारिणौ तु भवतः। दृश्येते हि प्रतिभाहीनस्य विफलौ व्युत्पत्त्यभ्यासौ।

(4) उपशमफलाद्[2] विद्याबीजात् फलं धनमिच्छतो
भवति विफलो यद्यायासस्तदत्र किमद्भुतम्।
न नियतफलाः कर्तुं भावाः फलान्तरमीशते
जनयति खलु व्रीहेर्बीजं न जातु यवाङ्कुरम्॥

इति ॥ [शान्तिशतकम् १·१२]

**शास्त्रेभ्य इति**। चाणक्यादिप्रणीतेभ्यः।

**प्रकारान्तरेणापीति**। मन्त्रानुष्ठानादिना।

1. I, L गुणभृतः. 2. A, B उपशमकलात्.

व्युत्पत्तिं व्यनक्ति—

**लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिः ॥ ८ ॥**

लोके स्थावरजङ्गमात्मके लोकवृत्ते च, शास्त्रेषु शब्दच्छन्दोनुशासनाभिधानकोशश्रुतिस्मृतिपुराणेतिहासागमतर्कनाट्यार्थकामयोगादिग्रन्थेषु,

---

**लोके इति।** इह लोकशब्देन स्थावरजङ्गमात्मको लोकः। तद्व्यवहारश्चाभिधीयत इत्यर्थः। स च देशकालादिभेदादनेकप्रकारः प्रकृतिव्यत्ययाख्ये रसदोषे (पृ. १७२) प्रपञ्चयिष्यते।

**शब्देत्यादि।** शब्दानुशासनं व्याकरणं ततो हि शब्दशुद्धिः। तन्नैपुणं यथा—

द्विगुरपि सद्वन्द्वोऽहं गृहे च मे सततमव्ययीभावः।
तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥ २ ॥

[ भट्टमुक्तिकलशस्य ]

**छन्दोनुशासनं** छन्दोविचितिः। काव्याभ्यासाद् वृत्तपरिज्ञानेऽपि हि मात्रावृत्तादौ तत एव निश्चयः। तन्नैपुणं यथा—

उष्णिहीव संसृतौ स्याद् ध्रुवं रजो गुरुः।
नो भवेद्यदि क्षितौ श्रीजिनेन्द्रशासनम् ॥ ३ ॥

[छ. शा. अ. २ सू. ४८]

**अभिधानकोशो** नाममाला। ततो हि पदार्थनिश्चयः। अपूर्वाभिधानलाभार्थत्वं त्वयुक्तम्, अभिधानकोशस्याप्रयुक्तस्याप्रयोज्यत्वात्। यदि तर्हि प्रयुक्तं[1] प्रयुज्यते किमिति पदस्य संदिग्धार्थत्वमाशङ्कितम्, तत्र, सामान्येनाप्यर्थगतिः संभवति। यथा नीवीशब्देन जघनवस्त्रग्रन्थिरुच्यत इति कस्यचिन्निश्चयः, स्त्रियाः पुरुषस्य वेति संशयः।

नीविराग्रन्थनं नार्या जघनस्थस्य वाससः ॥

[वामन १·३·५–६, पृ. ८]

इति नाममालाप्रतीकमपदिश्यते। इति।

अपौरुषेयं वचः श्रुतिः। यथा—

उर्वशी हाप्सराः पुरूरवसमैडं चकमे ॥ ४ ॥

[ शतपथ-ब्राह्मण का. ११ अ. ५ ब्रा. १ ]

तन्नैपुणं यथा—

चन्द्राद् बुधः समभवद् भगवान् नरेन्द्र-
माद्यं पुरूरवसमैलमसावसूत।

---

1. D प्रयुक्तम्

तं चाप्सराः स्मरवती चकमे किमन्य-
दत्रोर्वशी स्मितवशीकृतशक्रचेताः ॥ ५ ॥ [ ]

श्रुत्यर्थस्मरणं[1] **स्मृतिः**। यथा—

बह्वर्थेष्वभियुक्तेन सर्वत्र व्यपलापिना[2] ।
संभावितैकदेशेन देयं यदभियुज्यते ॥ ६ ॥ [ ]

तन्नैपुणं यथा—

हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।
संभावितैकदेशेन देयं यदभियुज्यते ॥ ७ ॥
[ विक्रमोर्वशीय ४·१७ ]

वेदाख्यानोपनिबन्धनप्राय **पुराणम्** । यथा[3]—
[4]हिरण्यकशिपुर्दैत्यो यां यां स्मित्वाप्युदैक्षत ।
भयभ्रान्तैः सुरैश्चक्रे तस्यै तस्यै दिशे[5] नमः ॥ ८ ॥
[ अग्निपुराणे ]

तन्नैपुणं यथा—

स संचरिष्णुर्भुवनत्रयेऽपि यां
यदृच्छयाशिश्रियदाश्रयः श्रियाम् ।
अकारि तस्यै मुकुटोपलस्खल-
त्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः ॥ ९ ॥ [ शिशुपालवध १·४६ ]

[6]पुराणप्रतिभेद एव **इतिहासः**। यथा[7]—
न स संकुचितः[9] पन्था येन वाली हतो गतः ।
समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ १० ॥
[ रामायण ४·३४·१८ ]

तन्नैपुणं यथा—

---

1. D & E °स्मरणात् 2 A व्यपलोपिना. 3. D drops यथा. 4. A, B, C हिरण्यकसिपुः 5. A दिशो. 6. D, E drop यथा. 7. A, B, C स बल्व. 8. A पुराणे. 9. A, B, C सकुचितः.

मंद[1] नवैश्वर्यलवेन लम्भितं[2] विसृज्य पूर्वः समयो विमृश्यताम् ।
जगज्जिघत्सातुरकण्ठपद्धतिर्न वालिनैवाहिततृप्तिरन्तकः ॥ ११ ॥
[जानकीहरण १२·३६]

आप्तवचनम्-**आगमः** । तत्र शैवागमनैपुणं[3] यथा—

घोरघोरतरातीतब्रह्मविद्याकलातिगः ।
परापर[4]पदव्यापी पायाद्वः परमेश्वरः ॥ १२ ॥
[ ]

**बौद्धागमनैपुणं** यथा—

कलिकलुषकृता[5]नि यानि लोके
मयि निपतन्तु विमुच्यतां स लोकः ।
मम हि सुचरितेन सर्वसत्त्वाः
परमसुखेन[6] सुखावतीं प्रयान्तु ॥ १३ ॥ [ ]

एवमागमान्तरेष्वपि ।

**तर्कः** षट्प्रकारः । **तत्रार्हतो** यथा—
शरीरपरिमाण आत्मा । अन्यथा शरीराफल्यमात्माफल्यं वा ।

तन्नै[7]पुणं यथा—

शरीरमात्रमात्मानं ये विदन्ति[8] जयन्ति ये ।
तच्चुम्बनेऽपि यज्जातः[9] सर्वाङ्गपुलकोऽस्य मे ॥ १४ ॥
**बौद्धीयो** यथा—विवक्षापूर्वा हि शब्दास्तामेव विवक्षां सूचयेयुः ।
[ ]

तन्नै[10]पुणं यथा—

भवतु विदितं शब्दा वक्तुर्विवक्षितसूचकाः
स्मरवति यतः कान्ते कान्तां बलात्परिचुम्बति ।
न न न मम मा मा मां स्प्राक्षीर्निषेधपरं वचो
भवति शिथिले मानग्रन्थौ तदेव विधायकम् ॥ १५ ॥ [ ]

1. A मदं. 2. लम्बितं. 3. D °गमे नै°. 4. D परापरपदव्यापी.
5. A, B °क्षतानि तानि. 6. A परमसुखोघनो. 7. A, B, C नैपुण्यं.
8. A °त्मानयोर्वदन्ति. 9. A, B य ज्ञातः सर्वांगः. 10. A, B, C नैपुण्यं.

**लौकायतिको** यथा—भूतेभ्यश्चैतन्यं मदशक्तिवत् ।

तन्नैपुणं[1] यथा[2]—

बहुविधमिह साक्षिचिन्तकाः प्रवदन्त्यन्यमितः कलेवरात् ।
अपि च सुदति[3] ते सचिन्तकाः[4] प्रलयं यान्ति सहैव चिन्तया ॥ १६ ॥
[ ]

**माङ्ख्यीयो** यथा—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १७ ॥
[भगवद्गीता २·१६]

तन्नैपुणं[5] यथा—

य एते यज्वानः प्रथितमहसो येऽप्यवनिपा
मृगाक्ष्यो याश्चैताः कृतमपरसंसारकथया ।
अमी ये दृश्यन्ते फलकुसुमनम्राश्च तरवो
जगत्येवंरूपा विलसति मृदेषा भगवती ॥ १८ ॥
[

**न्यायवैशेषिकीयो** यथा—

स किंसामग्रीक ईश्वरः करोति[7] पूर्वपक्षः निरतिशयैश्वर्यस्य कर्तृत्वमिति सिद्धान्तः ।

तन्नैपुणं[8] यथा—

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥ १९ ॥
[शिवमहिम्नस्तोत्र ५]

**नाट्यशास्त्रनैपुणं**[9] यथा—

आतन्वत् सरसां स्वरूपरचनामानन्दबिन्दूदयं
भावग्राहि शुभप्रवेशकगुणं गम्भीरगर्भस्थिति ।

1. A, B, C, णं. 2. E. drops यथा. 3. A स आस्मा सु°. B, C स सुदति. D, E सुदतिहिते च चिन्तकाः 4. A ववितंकाः. 5. E दृष्टान्त°. 6. A, B, C नैपुण्यं. 7 A, B करोति. 8. A, B, C नैपुण्यं. 9. A, B, C, E नैपुण्यं.

उच्चैर्वृत्ति सपुष्करव्यतिकरं संसारविष्कम्भकं
भिन्द्याद् वो **भरतस्य** भाषितमिव ध्वान्तं पयो यामुनम् ॥२०॥

[भट्टश्रीशिवस्वामिनः]

**अर्थ**शास्त्रनैपुणं[1] यथा **मुद्राराक्षस**नाटके।

**कामशास्त्र**नैपुणं[2] यथा—

अधरे बिन्दुः कण्ठे मणिमाला कुचयुगे शशप्लुतकम्।
तव सूचयन्ति सुन्दरि कुसुमायुधशास्त्रपण्डितं[3] रमणम् ॥ २१ ॥

[कुट्टनीमत ४०३]

**योगशास्त्र**नैपुणं[4] यथा—

पृथुशास्त्रकथाकन्थारोमन्थेन वृथात्र किम्।
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम् ॥ २२ ॥

[चित्रभारतनाटके]

**आदिग्रहणादायुर्वेदशास्त्र**नैपुणं[5] यथा—

अङ्गे चन्दनपङ्कपङ्कजबिसच्छेदावलीनां मुहुः
तापः शाप इवैष शोषणपटुः कम्पः सखीकम्पनः।
श्वासासंवृतसारहाररुचयः संभिन्नचीनांशुका
जातः प्राणनिदानवेदनमहारम्भः स तस्या ज्वरः ॥ २३ ॥

[पद्मकादम्बर्याम्]

**ज्योतिःशास्त्र**नैपुणं[10] यथा—

यामालोकयतां कलाः कलयतां छायां समान्विन्वता
क्लेशः केवलमङ्गुलीगणयतां मौहूर्तिकानामयम्।
धन्या सा रजनी तदेव सुदिनं पुण्यः स एव क्षणो
यत्राज्ञातचरः प्रियानयनयोः सीमानमेति प्रियः ॥ २४ ॥

[विद्यानन्दस्य]

**गजलक्षण**नैपुणं[11] यथा—

कर्णाभ्यर्णविकीर्णचामरमरुद्विस्तीर्णनिःश्वासवान्
शङ्खच्छत्रविराजिराज्यविभवद्वेषी निलीनेक्षणः।

---

1 D, E शास्त्रे नैपुणे. 2. A, B, C ण्यं. 3. A, B, C ण्य. 4. A, B °तरतणम्. 5. A, B, C ण्यं. 6. A, B, C, D रन्तरं. 7. A, B, C, E ण्यं. 8. A, B °तारहार°. 9. A, B झातः. A, B often confuse ज and झ. 10. A, B, C, E ण्यं. 11. A, B, C, E ण्यं.

स्मृत्वा राघवकुञ्जरः प्रियतमामेकाकिनीं कानने
संत्यक्तां चिरमुक्तभोगकवलं क्लेशोष्मणा शुष्यति ॥ २५ ॥

[कनकजानकयाम्]

**तुरगशास्त्र**नैपुणं[1] यथा—

आवर्तशोभः पृथुसत्त्वराशिः
फेनावदातः पवनोरुवेगः ।
गम्भीरघोषोऽद्रिविमर्दखेदात्
अश्वाकृतिं कर्तुमिवोद्यतोऽब्धिः ॥ २६ ॥

[अमृतनगककाव्यं]

**रत्नपरीक्षा**नैपुणं[2] यथा—

द्वौ वज्रवर्णौ जगतीपतीनां सद्भिः प्रदिष्टौ न तु सार्वजन्यौ ।
यः स्याज्जपाविद्रुमभङ्गशोणो यो वा हरिद्रारससंनिकाशः ॥ २७ ॥

[ ]

**धातुवाद**नैपुणं[3] यथा—

नवदलितहरिद्राग्रन्थिगौरे शरीरे
स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः ।
बलवति सति यस्मिन् सार्धमावर्त्य हेम्ना
रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि ॥ २८ ॥

[विद्धशालभञ्जिका ३·१७]

**द्यूत**नैपुणं[5] यथा—

यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं नेयौ रजनिदिवसौ लोलयन् द्वाविवाक्षौ
कालः काल्या सह बहुकलैः क्रीडति प्राणिशारैः ॥ २९ ॥

[चन्द्रकस्य]

**इन्द्रजाल**नैपुणं[7] यथा—

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।

1. A, B, C, E ण्य. 2. A, B, C, E ण्यं. 3. A, B, C, E ण्यं.
4. A, B नवदलित°. 5. A, B, C, E ण्यं. 6. A °कलं. 7. A, B, C, E ण्य.

काव्येषु महाकविप्रणीतेषु निपुणत्वं तत्त्ववेदित्वं व्युत्पत्तिः। लोकादिनिपुणतासंस्कृतप्रतिभो हि तदनतिक्रमेण काव्यमुपनिबध्नाति। अभ्यासं व्याचष्टे—

**काव्यविच्छिक्षया पुनः पुनः प्रवृत्तिरभ्यासः ॥ ९ ॥**

काव्यं कर्तुं जानन्ति विचारयन्ति वा ये ते काव्यविदः कविसहृदयाः। वेत्तेर्विन्तेश्चाोवृत्त्या रूपम्। तेषां शिक्षया वक्ष्यमाणलक्षणया

एषोऽप्यैरावणस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥ ३० ॥
[ रत्नावली ४·११ ]

**चित्रनैपुण्यं** यथा—

अतथ्यान्यपि तथ्यानि दर्शयन्ति विचक्षणाः।
समनिम्नोन्नतानीव चित्रकर्मविदो जनाः ॥ ३१ ॥
[ व्यासस्य ]

**धनुर्वेदनैपुण्यं** यथा—

आर्यस्याल्पघनौघलाघववती संधानसंबन्धिनी
स्थाणुस्थानकसौष्ठवप्रणयिनी चित्रक्रियालङ्कृतिः।
निःस्पन्देन मयातिविस्मयमयी सत्यं स्थितप्रत्यया
संहारे खरदूषणत्रिशिरसामेषैव दृष्टा स्थितिः ॥ ३२ ॥
[ कनकजानक्याम् ]

एवमन्यदपि।

**लोकादिनिपुणतासंस्कृतप्रतिभो हीति।**

यदाह—

(5) न स शब्दो न तद्वाच्यं न स न्यायो न सा कला।
जायते यन्न काव्याङ्गमहो भारो गुरुः कवेः ॥　　[ भामह ५·४ ]

इति।

---

1. P विन्तेश्चा. 2. E नृत्यन्तो. 3. A, B, C, E ण्यं. 4. A, B, C, E ण्यं. 5. D. भार्याशास्त्र°. 6. C. स्थितः प्र°.

काव्य एव पौनःपुन्येन प्रवृत्तिरभ्यासः। अभ्याससंस्कृता हि प्रतिभा काव्यामृतकामधेनुर्भवति। यदाहुः—

(5) "अभ्यासो हि कर्मसु कौशलमावहति। न हि सकृन्निपतितमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति" इति।

[वामन १-३]

शिक्षयेत्युक्तमिति शिक्षां लक्षयति—

**सतोऽप्यनिबन्धोऽसतोऽपि निबन्धो नियमश्छायाद्युपजीवनाद्यश्च शिक्षाः ॥ १० ॥**

सतोऽपि जातिद्रव्यगुणक्रियादेरनिबन्धनम्। असतोऽपि जात्यादेरेव निबन्धनम्। नियमोऽतिप्रसक्तस्य जात्यादेरेकत्रावधारणम्। छायायाः

**छायाया** इति। छाया अर्थादर्थस्य। तदुपजीवनं क्वचित्प्रतिबिम्बतुल्यतया। यथा—

ते पान्तु वः पशुपतेरलिनीलभासः कण्ठप्रदेशघटिताः फणिनः स्फुरन्तः।
चन्द्रामृताम्बुकणसेकसुखप्ररूढैर्यैरङ्कुरैरिव विराजति कालकूटः ॥ ३३ ॥

[ ]

यथा च—

जयन्ति नीलकण्ठस्य नीलाः कण्ठे महाहयः।
गलद्गङ्गाम्बुसंसिक्तकालकूटाङ्कुरा इव ॥ ३४ ॥

[ ]

यदाह—

(6) अर्थः स एव सर्वो वाक्यान्तरविरचना परं यत्र।
तदपरमार्थविभेदं काव्यं प्रतिबिम्बकल्पं स्यात् ॥

[काव्यमीमांसा अ. १२]

क्वचिदालेख्यप्रख्यतया। तत्रैवार्थे यथा—

जयन्ति धवलव्यालाः शम्भोर्जूटावलम्बिनः।
गलद्गङ्गाम्बुसंसिक्तचन्द्रकन्दाङ्कुरा इव ॥ ३५ ॥

यदाह— [ ]

1. C छायां अर्था°.

(7) क्रियतापि यत्र संस्कारकर्मणा वस्तु भिन्नवद्भाति ।
तत् कथितमर्थचतुरैरालेख्यप्रख्यमिति काव्यम् । [काव्यमीमांसा अ. १२]

क्वचित्तुल्यदेहितुल्यतया । यथा—

अवीनादौ कृत्वा भवति तुरगो यावदवधिः
पशुर्धन्यस्तावत्प्रतिवसति यो जीवति सुखम् ।
अमीषां निर्माणं किमपि तदभूद् दग्धकरिणां
वनं वा क्षोणीभृद्भवनमथवा येन शरणम् ॥ ३६ ॥
[　　　　]

अत्रार्थे—

प्रतिगृहमुपलानामेक एव प्रकारो
मुहुरुपकरणत्वाद्दर्पिताः पूजिताश्च ।
स्फुरति हतमणीनां किं तु तद्धाम येन
क्षितिपतिभवने वा स्वाकरे वा निवासः ॥ ३७ ॥
[　　　　]

यदाह—

(8) विषयस्य[2] यत्र भेदेऽप्यभेदबुद्धिर्नितान्तसादृश्यात् ।
तत्तुल्यदेहितुल्यं[3] काव्यं बध्नन्ति सुधियोऽपि ॥ [काव्यमीमांसा अ. १२]

क्वचित्परपुरप्रवेशप्रतिमतया । यथा—

यस्यारातिनितम्बिनीभिरभितो वीक्ष्याम्बरं प्रावृषि
स्फूर्जद्गर्जितनिर्जिताम्बुधिरवस्फाराभ्रवृन्दाकुलम् ।
उत्सृष्टप्रसभाभिषेणनभयस्पष्टप्रमोदाश्रुभिः[4]
किञ्चित्कुञ्चितलोचनाभिरसकृद् घ्राताः कदम्बानिलाः ॥ ३८ ॥
[　　　　]

अत्रार्थे—

आच्छिद्य प्रियतः कदम्बकुसुमं यस्यारिदारैर्नवं
यात्राभङ्गविधायिनो जलमुचां कालस्य चिह्नं महत् ।
हृष्यद्भिः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं
सीमन्ते निहितं कथञ्चन ततः कर्णावतंसीकृतम् ॥ ३९ ॥
[　　　　]

---

1. C °दर्पिताः. 2. A, B विषमस्य. 3. D तत्तुल्यं दे°. 4. A, B उन्मृष्ट°.

प्रतिबिम्बकल्पतया, आलेख्यप्रख्यतया, तुल्यदेहितुल्यतया, परपुरप्रवेशप्रतिमतया चोपजीवनम् । आदिशब्दात् पदपादादीनां च काव्यान्तराद् यथौचित्यमुपजीवनम् । पुनरादिपदात् समस्यापूरणाद्याः शिक्षाः ।

---

यदाह—

(9) मूलैक्यं यत्र भवेत्परिकरबन्धस्तु दूरतोऽनेकः ।
तत्परपुरप्रवेशप्रतिमं काव्यं सुकविभाव्यम् ॥ [काव्यमीमांसा अ. १२]

यथोत्तरं चामीषां चतुर्णामपि प्राधान्यम् ।

**पदोपजीवनं** यथा—

दूराकृष्टशिलीमुखव्यतिकराज्जो किं किरातानिमा-
नाराद्व्याधृतपीतलोहितमुखान् किं वा पलाशानपि ।
पान्थाः केसरिण न पश्यत पुरोऽप्येनं वसन्तं वने
मूढा रक्षत जीवितानि शरणं यात प्रियां[1] देवताम् ॥ ४० ॥
[ ]

यथा च—

मा गाः पान्थ प्रियां मुक्त्वा दूराकृष्टशिलीमुखम् ।
स्थितं पन्थानमाभून्य किं किरात न पश्यसि ॥ ४१ ॥
[ ]

**पादोपजीवनं** यथा—

गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा
द्वित्राण्येव पदानि तिष्ठतु भवान् पश्यामि यावन्मुखम् ।
संसारे घटिका[2]प्रवाहविगलद्धारा समे जीविते
को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः ॥ ४२ ॥
[ अमरुशतक १०३ ]

यथा च—

हंहो स्निग्धसखे विवेकबहुभिः प्राप्तोऽसि पुण्यैर्मया
गन्तव्य कतिचिद्दिनानि भवता नास्मत्सकाशात् क्वचित् ।
त्वत्सङ्गेन करोमि जन्ममरणोच्छेदं गृहीतत्वरः
को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः ॥ ४३ ॥
[ कविकण्ठाभरणे ]

---

1 A, C प्रिया देवता. 2. A, B षटिका.

पादद्वयोपजीवनं यथा—

तत्तावदेव शशिनः स्फुरितं महीयो
यावन्न तिग्मरुचिमण्डलमभ्युदेति ।
अभ्युद्गतेऽतुहिनधामनिधौ तु तस्मिन्
इन्दोः सिताभ्रशकलस्य च को विशेषः ॥ ४४ ॥

[ ]

यथा च—

तत्तावदेव शशिनः स्फुरितं महीयो
यावन्न किंचिदपि गौरतरा हसन्ति ।
ताभिः पुनर्विहसिताननपङ्कजाभिः
इन्दोः सिताभ्रशकलस्य च को विशेषः ॥ ४५ ॥

[प्रकाशदत्तस्य]

पादत्रयोपजीवनं यथा—

अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ।
न्यासापह्नवने चैव दिव्या संभवति क्रिया ॥ ४६ ॥

[ ]

यथा चोत्तरार्धे—

तन्वङ्गी यदि लभ्येत दिव्या संभवति क्रिया ॥ ४७ ॥

[ ]

पादचतुष्टयोपजीवने तु परिपूर्णं चौर्यमेवेति न तन्निर्दिश्यते ।

**आदि**ग्रहणात् पदैकदेशोपजीवनम् । यथा—

नाश्चर्यं यदनार्यास्तावस्तप्रीतिरियं मयि ।
मांसोपयोगं कुर्वीत कथं क्षुद्रहितो जनः ॥ ४८ ॥

[ ]

यथा च—

कोपान्मानिनि किं स्फुरत्यतितरां शोभाधरस्तेऽधरः
किं वा चुम्बनकारणाद्दयित नो वायोर्विकारादयम् ।
तत्त्वं सुभ्रु सुगन्धिमाहितरसं स्निग्धं भजस्वादरात्
मुग्धे मांसरसं ब्रुवन्निति तया गाढं समालिङ्गितः ॥ ४९ ॥

[ ]

1. A omits पादद्वयो°. 2. A, B, C गौरितरा. The reading in the text is adapted from K, M.

उक्त्युपजीवनं यथा—

ऊरुद्वन्द्वं सरसकदलीकाण्डसब्रह्मचारी ॥ ५० ॥

[ ]

इति ।

यथा च—

ऊरुद्वयं कदलकन्दलयोः सवंशं
श्रोणिः शिलाफलकसोदरसंनिवेशा ।
वक्षः स्तनद्वितयताडितकुम्भशोभं
सब्रह्मचारि शशिनश्च मुखं मृगाक्ष्याः ॥ ५१ ॥

[ ]

(10) "उक्तयो ह्यर्थान्तरसंक्रान्ता न प्रत्यभिज्ञायन्ते स्वदन्ते च ।"

[काव्यमीमांसा अ. ११]

(11) "नान्वक्षमुपदेश्यमेव न भवति । यदित्थं कथयन्ति—

पुंसः कालातिपातेन चौर्यमन्यद्विशीर्यते ।
अपि पुत्रेषु पौत्रेषु वाक्चौर्यं न विशीर्यते ॥

[ ]

इत्याशङ्क्याह—**यथौचित्यमिति** । अयमप्रसिद्धः प्रसिद्धिमानहम्, अयमप्रतिष्ठः प्रतिष्ठावानहम्, अप्रक्रान्तमिदमस्य संविधानकं प्रक्रान्तं मम, गुडूचीवचनोऽयं मृद्वीकावचनोऽहम्, अनाहतभाषाविशेषोऽयमादृतभाषाविशेषोऽहम्, प्रशान्तज्ञातृकमिदं देशान्तरकर्तृकमिदम्, उत्सन्ननिबन्धनमूलमिदं म्लेच्छितकोपनिबद्धमिदमित्येवमादिभिः कारणैः शब्दहरणेऽर्थहरणे चाभिरमेत इति—**अवन्तिसुन्दरी** ।

[काव्यमीमांसा अ. ११ पृ. ५७]

आहुश्च—

(12) नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः ।
स नन्दति विना वाच्यं यो जानाति निगूहितुम् ॥
उत्पादकः कविः कश्चित्कश्चित्तु परिवर्तकः ।
आच्छादकस्तथा चान्यस्तथा संवर्धकोऽपरः ॥
शब्दार्थोक्तिषु यः पश्येदिह किंचन नूतनं
उल्लिखेत् किंचन प्राच्यं मन्यतां स महाकविः ॥ [काव्यमीमांसा अ. ११]

**समस्यापूरणाद्या** इति । तत्र पादसमस्या यथा—

1. A omits शोभं 2. E drops अर्थहरणे. 3. C संवर्धको°.

'मृगात्सिंहः पलायते' इति,
'समुद्राद्धूलिरुत्थिता' इति चैतौ

चतुर्थौ पादौ । यथाक्रममन्यत्पादत्रयं यथा—

मंदमन्थरमातङ्गकुम्भपाटनलम्पटः ।
दैवे पराङ्मुखे कष्टम् [ मृगात्सिंहः पलायते ] ॥ ५२ ॥
सीतासमागमोत्कण्ठाकर्णान्ताकृष्टधन्वनः ।
राघवस्य शराङ्गारैः [ समुद्राद्धूलिरुत्थिता ] ॥ ५३ ॥ इति
[ ]

पादद्वयसमस्या यथा—'चव्यचित्रकनागरैः', 'लङ्कायां रावणो हतः' इति द्वितीयचतुर्थौ पादौ । प्रथमतृतीयौ तु—

मुमूर्षो किं तवाद्यापि [ चव्यचित्रकनागरैः ] ।
स्मर नारायणं येन [ लङ्कायां रावणो हतः ] ॥ ५४ ॥ इति
[ ]

किमपि किमिह दृष्टं स्थानमस्ति श्रुतं वा
व्रजति दिनकरोऽयं यत्र नास्तं कदाचित् ।
भ्रमति विहगसार्थान्नित्यमापृच्छमानो
रजनिविरहभीतश्चक्रवाको वराकः ॥ ५५ ॥
[ ]

यथा च—

जयति सितविलोलव्यालयज्ञोपवीती
घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः ।
अविदितमृगचिह्नामिन्दुलेखां दधानः
परिणतशितिकण्ठश्यामकण्ठः पिनाकी ॥ ५६ ॥
[ ]

यथा च—

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।

1. C मदनत्परमा०.

उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिललितानां ही विचित्रो विपाकः ॥ ५७ ॥

[शिशुपालवध ११·६४]

इति वृत्तत्रयात्प्रथमद्वितीयचतुर्थपादत्रयसमस्यायास्तृतीयपादेन पूरणं यथा—

किमपि किमिह दृष्टं स्थानमस्ति श्रुतं वा
घनकपिलजटान्तर्भ्रान्तगङ्गाजलौघः ।
निवसति स पिनाकी यत्र याया तदस्मिन्
हतविधिललितानां ही विचित्रो विपाकः ॥ ५८ ॥

[ ]

आद्यग्रहणाद्वाक्यार्थशून्यवृत्ताभ्यासो यथा—

आनन्दसंदोहपदारविन्दकुन्देन्दुकन्दोदितबिन्दुवृन्दम् ।
इन्दिन्दिरान्दोलितमन्दमन्दनिष्पन्दनिन्दन्मकरन्दवृन्दम् ॥ ५९ ॥

[कविकण्ठाभरणे]

पुरातनवृत्तेषु पदपरावृत्त्याभ्यासो यथा—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ ६० ॥

[रघु° १·१]

वाण्यर्थाविव संभिन्नौ वाण्यर्थप्रतिपत्तये ।
जगतो जनकौ वन्दे शर्वाणीशशिशेखरौ ॥ ६०

[कविकण्ठाभरणे]

एवं महाकाव्यार्थचर्वणपरकृतकाव्यपाठाद्याः शिक्षा अभ्यूह्याः । किं च—

(13) स्वास्थ्यं प्रतिभाऽभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता ।
स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य ॥

[काव्यमीमांसा १० पृ. ४९]

इति ।

1. A omits विचित्रो. 2. A निष्यन्दन्मकरन्द. 3. E °परक्षतका°.

तत्र सतोऽपि सामान्यस्यानिबन्धो यथा—मालत्या वसन्ते, पुष्पफलस्य चन्दनद्रुमेषु, फलस्याशोकेषु । द्रव्यस्य यथा—कृष्णपक्षे सत्या अपि ज्योत्स्नायाः, शुक्लपक्षे त्वन्धकारस्य । गुणस्य यथा—कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वस्य,

**मालत्या वसन्त** इत्यादि । अनिबन्धः इति पूर्वस्मात्प्रत्येकमभिसंबध्यते । मालत्या वसन्तेऽनिबन्धो यथा—

मालतीविमुखश्चैत्रो विकासी पुष्पसंपदाम्[1] ।
आश्चर्यं जातिहीनस्य कस्य सुमनसः प्रियाः ॥ ६१ ॥

[ ]

**पुष्पफलस्य चन्दनद्रुमेष्वनिबन्धो** यथा—

यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः ।
निजवपुषैव परेषां तथापि संतापमपनयति ॥ ६२ ॥

[शार्ङ्गधरपद्धति - भट्टादित्यस्य]

**फलस्याशोकेष्वनिबन्धो** यथा—

दैवायत्ते हि फले किं क्रियतामेतदत्र तु वदामः ।
नाशोकस्य किसलयैर्वृक्षान्तरपल्लवास्तुल्याः ॥ ६३ ॥

[ ]

**कृष्णपक्षे ज्योत्स्नाया अनिबन्धो** यथा—

ददृशाते जनैस्तत्र यात्रायां सकुतूहलैः ।
बलभद्रप्रलम्बघ्नौ पक्षाविव सितासितौ ॥ ६४ ॥

[ ]

**शुक्लपक्षे त्वन्धकारस्यानिबन्धो** यथा—

मासि मासि समा ज्योत्स्ना पक्षयोः कृष्णशुक्लयोः ।
तत्रैकः शुक्लतां यातो यशः पुण्यैरवाप्यते ॥ ६५ ॥

[ ]

**कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वस्यानिबन्धो** यथा—

द्योतितान्तःसभैः[4] कुन्दकुड्मलाग्रदतः स्मितैः ।
स्नपितेवाभवत् तस्य शुद्धवर्णा सरस्वती ॥ ६६ ॥

[शिशुपालवध २.७]

1. E. °संपदा. 2. E. चन्दनेष्वनि°. 3. E. पेष्वनि°. 4. A. °तांभः सतैः. B. °तांभः समैः, C तांतः समैः.

कमलमुकुलप्रभृतेश्च हरितत्वस्य, प्रियङ्गुपुष्पाणां च[1] पीतत्वस्य। क्रियाया यथा—दिवा नीलोत्पलानां विकासस्य[2], निशानिमित्तस्य शेफालिका-कुसुमानां विस्रंसस्य।

कमलमुकुलानां हरितत्वस्यानिबन्धो यथा—

उद्दण्डोदरपुण्डरीकमुकुलभ्रान्तिस्पृशा दंष्ट्रया
मग्नां लावणसैन्धवेऽम्भसि महीमुद्यच्छतो हेलया।
तत्कालाकुलदेवदानवयुतै[3]रुत्तालकोलाहलं
शौरेरादिवराहलीलमवतादभ्रंलिहाग्रं वपुः॥ ६७॥
[ ]

प्रियङ्गुपुष्पाणां पीतत्वस्यानिबन्धो यथा—

प्रियङ्गुश्यामम्भोधिरन्ध्रीणां स्तनमण्डलम्।
अलङ्कर्तुमिव स्वच्छाः सूते मौक्तिकसंपदः॥ ६८॥
[ ]

दिवा नीलोत्पलानां विकासस्यानिबन्धो यथा—

आलिख्य पत्रमसितागुरुणाभिरामं
रामामुखे क्षणसभाजितचन्द्रबिम्बे।
जातः पुनर्विकसनावसरोऽयमस्ये-
त्युक्त्वा सखी कुवलयं श्रवणे चकार॥ ६९॥
[ ]

निशानिमित्तस्य शेफालिकाकुसुमानां विस्रंसस्यानिबन्धो यथा—

त्वद्विप्रयोगे किरणैस्तथोग्रैर्दग्धास्मि कृत्स्नं दिवसं सवित्रा।
इतीव दुःखं शशिने गदन्ती शेफालिका[4] रोदिति पुष्पबाष्पैः॥ ७०॥

1. I, L तु. 2. P, S and L विकाशस्य. D, E drop निशानिमित्तस्य before शे 3 E यनुतैः. 4. A, B, C दिवा शेफालिका नाम निबन्धो.

असतोऽपि सामान्यस्य निबन्धो यथा—नदीषु पद्मनीलोत्पलादीनां, जलाशयमात्रेऽपि हंसादीनां, यत्र तत्र पर्वते सुवर्णरत्नादीनामिति ।

**नदीष्वित्यादि** । निबन्धः इति प्रत्येकमभिसंबध्यते । तत्र नदीषु पद्मानि यथा—

दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ७१ ॥

[ मेघदूत १·३१ ]

नीलोत्पलानि यथा—

गगनगमनलीलालम्भितान् स्वेदबिन्दून्
मृदुभिरनिलवारैः खेचराणां हरन्तीम् ।
कुवलयवनकान्त्या जाह्नवीं सोऽभ्यपश्यत्
दिनपतिसुतयेव व्यक्तदत्ताङ्कपालीम् ॥ ७२ ॥

एवं कुमुदाद्यपि । [ ]

**जलाशयमात्रे[1] हंसा** यथा—

आसीदस्ति भविष्यतीह च जनो धन्यो धनी धार्मिको
यः **श्रीकेशव**वत्करिष्यति पुनः श्रीमत्कुडङ्गेश्वरम् ।
[2]हेलादोलितहंससारसकुलक्रेङ्कारसंमूर्च्छितै-
रित्याघोषयतीव[3] तन्नवनदी यत्कीर्तितं वीचिभिः ॥ ७३ ॥

[ ]

**यत्र तत्र पर्वते सुवर्णं** यथा—

नागावासश्चित्रपोताभिरामः
स्वर्ण[4]स्फातिव्याप्तदिक्चक्रवालः ।

1. A, B, C जलाशये मात्रे. 2. C हेलाक्षालित°. N हेलान्दोलित°.
3. A, B °घोषयतीव. 4. C स्वर्णस्याति°.

द्रव्यस्य यथा—तमसि मुष्टिग्राह्यत्वस्य सूचीभेद्यत्वस्य च, ज्योत्स्नायां च कुम्भोपवाह्यत्वादेः। गुणस्य यथा—यशोहासादौ शौक्ल्यस्य,

साम्यात् सख्यं जग्मिवानम्बुराशे-
रेष ख्यातस्तेन जीमूतभर्ता ॥ ७४ ॥

[ ]

रत्नानि यथा—

नीलाश्मरश्मिपटलानि महेभमुक्तसूत्कारशीकरविसृञ्जि तटान्तरेषु।
आलोकयन्ति सरलीकृतकण्ठनालाः सानन्दमम्बुदधियाऽत्र मयूरनार्यः ॥ ७५॥

[ ]

**तमसो मुष्टिग्राह्यत्वं** यथा—

तनुलग्ना इव ककुभः क्ष्मावलय चरणचारमात्रमिव।
दिवमिव चालिकदघ्नां मुष्टिग्राह्यं तमः कुरुते ॥ ७६ ॥

[ विद्धशालभञ्जिका ३.६ ]

**सूचीभेद्यत्वं** यथा—

पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये।
मयि च निमीलितनयने तथापि कान्तानन व्यक्तम् ॥ ७७ ॥

[ ]

**ज्योत्स्नायाः कुम्भोपवाह्यत्वादि** यथा—

शङ्खद्रावितकेतकोदरदलच्छात.श्रिय बिभ्रती
येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छवि. प्रागभूत्।
उत्सेक्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरै
पातव्या च शशिन्यमुग्धविभवे सा वर्तते चन्द्रिका ॥ ७८ ॥

[ ]

**यशसः शौक्ल्यं** यथा—

रतम. स्तोकोऽपि नाङ्के श्वसितमविकल चक्षुषां सैव शान्ति-
र्मध्येक्षीराब्धि मग्नाः स्फुटमथ च वयं कोऽयमीदृक्प्रकारः।
इत्थं दिग्भित्तिरोधःक्षतविसरतया मांसलैस्त्वद्यशोभिः
स्तोकावस्थानदुःस्थैस्त्रिजगति धवले विस्मयन्ते मृगाक्ष्यः ॥ ७९ ॥

[ ]

1. D चाल्क°. 2. A, B, C, D कलशीलि°. 3. A, B, C, E रोधःकृत°.

अयशःपापादौ कार्ष्ण्यस्य, क्रोधानुरागयो रक्तत्वस्य । क्रियाया यथा— चकोरेषु चन्द्रिकापानस्य, चक्रवाकमिथुनेषु निशि भिन्नतटाश्रयणस्य ।

**हासस्य** यथा—

अट्टहासच्छलेनास्याद् यस्य फेनौघपाण्डुराः ।
जगत्क्षय इवापीताः क्षरन्ति क्षीरसागराः ॥ ८० ॥

[ ]

**अयशसः कार्ष्ण्यं** यथा—

प्रसरन्ति कीर्तयस्ते तव च रिपूणामकीर्तयो युगपत् ।
कुवलयदलसंवलिताः प्रतिदिशमिव मालतीमालाः ॥ ८१ ॥

[ ]

**पापस्य** यथा—

उत्खातनिर्मलकृपाणमयूखलेखा-
श्यामायिता तनुरभूद् दशकन्धरस्य ।
सद्यःप्रकोपकृतकेशववंशनाश-
संकल्पसंजनितपापमलीमसेव ॥ ८२ ॥

[ ]

**क्रोधस्य** रक्तत्वं यथा—

आस्थानकुट्टिमतलप्रतिबिम्बितेन
कोपप्रभाप्रसरपाटलविग्रहेण ।
भौमेन मूर्छितरसातलकुक्षिभाजा
भूमिश्चचाल चलतोदरवर्तिनेव ॥ ८३ ॥

[ ]

**अनुरागस्य** यथा—

गुणानुरागमिश्रेण यशसा तव सर्पता ।
दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम् ॥ ८४ ॥

[ ]

**चकोरेषु चन्द्रिकापानं** यथा—

एतास्ता मलयोपकण्ठसरितामेणाक्षि रोधोभुव-
श्चापाभ्यासनिकेतनं भगवतः प्रेम्णो[1] मनोजन्मनः ।

. D प्रायो.

जातेर्नियमो यथा—समुद्रेष्वेव मकराः, ताम्रपर्ण्यामेव मौक्तिकानि। द्रव्यस्य यथा—मलय एव चन्दनस्थानम्, हिमवानेव भूर्जोत्पत्तिपदम्।

यासु श्यामनिशासु पीततमसो मुक्तामयीश्चन्द्रिकाः
पीयन्ते विवृतोर्ध्वचञ्चु विचलत्कण्ठं चकोराङ्गना. ॥ ८५ ॥
[ ]

**चक्रवाकमिथुनस्य निशि भिन्नतटाश्रयणं** यथा—

संक्षिपता यामवतीस्तटिनीनां तनयता पयःपूरान्।
रथचरणाह्वयवयसां किं नोपकृतं निदाघेन ॥ ८६ ॥
[ ]

**समुद्रेष्वेव मकरा**[1] यथा—

गोत्रापहारं नयतो गृहत्वं स्वनाममुद्राङ्कितमम्बुराशिम्।
दायादवर्गेषु परिस्फुरत्तु दंष्ट्रावलेपो मकरस्य वन्द्यः ॥ ८७ ॥
[ ]

**ताम्रपर्ण्यामेव मौक्तिकानि** यथा—

कामं भवन्तु सरितो भुवि सुप्रतिष्ठाः
स्वादूनि सन्तु सलिलानि च शुक्तयश्च।
एतां विहाय वरवर्णिनि ताम्रपर्णी
नान्यत्र संभवति मौक्तिककामधेनुः ॥ ८८ ॥
[ ]

**मलय एव चन्दनस्थानं** यथा—

तापापहारचतुरो नागावासः सुरप्रियः।
नान्यत्र मलयादद्रेर्दृश्यते चन्दनद्रुमः ॥ ८९ ॥
[ ]

**हिमवानेव भूर्जोत्पत्तिपदं** यथा—

न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥ ९० ॥
[कुमार० १.७]

1. D मकरो.

गुणस्य यथा—सामान्योपादाने रत्नानां शोणतैव, पुष्पाणां शुक्लतैव, मेघानां कृष्णतैव। क्रियाया यथा—ग्रीष्मादौ संभवदपि कोकिलरुतं वसन्त एव। मयूराणां वर्षास्वेव विरुतं नृत्तं चेति।

अथवा नियमः समयः कवीनाम्। यथा कृष्णनीलयोः, कृष्ण-

**रत्नानां च शोणतैव** यथा—

सांयात्रिकैरविरतोपहृतानि कूटैः
श्यामासु तीरवनराजिषु संभृतानि।
रत्नानि ते दधति कच्चिदिहायताक्षि
मेघोदरोदितदिनाधिपबिम्बशङ्काम् ॥ ९१ ॥ [ ]

**पुष्पाणां शुक्लतैव** यथा—

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥ ९२ ॥
[कुमार० १·४४]

**मेघानां कृष्णतैव** यथा—

मेघश्यामेन रामेण पूतवेदिर्विमानराट्।
मध्ये महेन्द्रनीलेन रत्नराशिरिवाबभौ ॥ ९३ ॥ [ ]

**कोकिलरुतं वसन्त एव।** यथा—

वसन्ते शीतभीतेन कोकिलेन वने रुतम्।
अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः ॥ ९४ ॥ [ ]

**मयूरनृत्तगीते वर्षास्वेव** यथा—

मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥९५॥ [काव्यादर्श १·७०]

**कृष्णनीलयोरैक्यं** यथा—

नदीं तूर्णं **कर्णो**ऽप्यनुसृतपुलिनां दाक्षिणात्याङ्गनाभिः
समुत्तीर्णो वर्णामुभयतटचलाबद्धवानीरहाराम्।

1. P, L, S माणिक्यानां, so too काव्यमीमांसा (p. 84). There is no point in saying माणिक्यानां शोणता because the rubies are always red. The reading रत्नानां would be appropriate in view of the fact that different precious stones are of different colours There is, however, a टिप्पण in the S palm-leaf which says 'मणिरेव मणिक्यो'. This would suggest that the reading might have been मणिकानां. 2. A, B, C, D, E माणिक्यानां. To remain consistent with the Vṛtti the reading रत्नानां has been adopted. It is also supported by the illustration. 3. A drops पहृता. 4. A, B, C, D नृत्त.

हरितयोः, कृष्णश्यामयोः, पीतरक्तयोः, शुक्लगौरयोः, चन्द्रे शशमृगयोः,

नटे मह्यस्योच्चैः स्वसलिलनिवहो भाति नील. स यस्या
प्रियस्यासे पीने लुलित इव घनः केशपाशः सुकेश्याः ॥ ९६ ॥
[ ]

**कृष्णहरितयोरैक्यं** यथा—

मरकतसदृशं च यामुन स्फटिकशिलाविमल च जाह्नवम ।
तदुभयमुदकं पुनातु वो हरिहरयोरिव संगतं वपु ॥ ९७ ॥
[ ]

**कृष्णश्यामयोरैक्यं** यथा—

एतत्सुन्दरि नन्दनं शशिमणिस्निग्धालवालद्रुमं
मन्दाकिन्यभिषिक्तमौक्तिकशिले मेरोस्तटे नन्दति ।
यत्र श्यामनिशासु मुञ्चति मिलन्मन्दप्रदोषानिला-
मुद्दामामरयोषितामभिरतं कल्पद्रुमश्चन्द्रिकाम् ॥ ९८ ॥
[ ]

**पीतरक्तयोरैक्यं** यथा—

लेखया विमलविद्रुमभासा
संततं तिमिरमिन्दुरुदासे ।
दंष्ट्रया कनकभङ्गपिशङ्गया
मण्डल भुव इवादिवराहः ॥ ९९ ॥
[किरात० ९.२७]

**शुक्लगौरयोरैक्यं** यथा—

कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ १०० ॥
[रघु० २.३५]

एवं वर्णान्तरेष्वपि ।

**चन्द्रे शशमृगयोरैक्यं** यथा—

मा भैः शशाङ्क मम सीधुनि नास्ति राहु·
खे रोहिणी वसति कातर किं बिभेषि ।
प्रायो विदग्धवनितानवसंगमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥ १०१ ॥
[ ]

1. A, B यस्या. C यश्चास्याः.

कामकेतने मकरमत्स्ययोः, अत्रिनेत्रसमुद्रोत्पन्नयोश्चन्द्रयोः द्वादशानामप्या-

यथा च—

अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ १०२ ॥

[ शिशुपालवध २.५३ ]

**कामकेतने मकरमत्स्ययोरैक्यं** यथा—

चापं पुष्पमयं गृहाण मकरः केतुः समुच्छ्रीयतां
चेतोलक्ष्यभिदश्च पञ्च विशिखाः पाणौ पुनः सन्तु ते ।
दग्धा कापि तवाकृतेः प्रतिकृतिः कामोऽसि किं गूहसे
रूपं दर्शय नात्र शङ्करभयं सर्वे वयं वैष्णवाः ॥ १०३ ॥

[ ]

यथा च

मीनध्वजस्त्वमसि नो न च पुष्पधन्वा
केलिप्रकाश तव मन्मथता तथापि ।
इत्थं त्वया विरहितस्य मयोपलब्धा-
कान्ताजनस्य जननाथ चिरं विलापाः ॥ १०४ ॥

[ ]

यथा वा—

आपातमारुतविलोडितसिन्धुनाथो
हाकारभीतपरिवर्तितमत्स्यचिह्नाम् ।
उल्लङ्घ्य यादवमहोदधिभीमवेला
द्रोणाचलं पवनसूनुरिवोद्धरामि ॥ १०५ ॥

**अत्रिनेत्रसमुद्रोत्पन्नयोश्चन्द्रयोरैक्यं** यथा—

वन्द्या विश्वसृजो युगादिगुरवः स्वायंभुवाः सप्त ये
तत्रात्रिर्दिवि संदधे नयनजं ज्योतिः स चन्द्रोऽभवत् ।
एका यस्य शिखण्डमण्डनमणिर्देवस्य शम्भोः कला
शेषाभ्योऽमृतमाप्नुवन्ति च सदा स्वाहास्वधाजीविनः ॥ १०६ ॥

[ ]

यथा च—

यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपा-
मुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता ।

---

1. E °पूगो. 2. D, E प्रलापाः. 3. D च.

दित्यानां, नारायणमाधवविष्णुदामोदरकूर्मादेः, कमलासंपदोः, नागसर्पयोः,

अयं कः संबन्धो यदनुहरते तस्य कुमुदं
विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥ १०७ ॥

[अनर्घराघव १.५८]

**द्वादशानामप्यादित्यानामैक्यं** यथा—

यस्याऽधोऽधस्तथोपर्युपरि निरवधि भ्राम्यतो विश्वमश्वै-
रावृत्तालातलीलां रचयति रयतो मण्डलं चण्डधाम्नः ।
सोऽव्यादुत्तप्तवार्तस्वरसरलशरस्पर्धिभिर्धामदण्डै-
रुद्दण्डैः प्रापयन् व प्रचुग्नमतम.स्तोममस्त समग्तम् ॥ १०८ ॥

**नारायणादेरैक्यं कमलासंपदोश्च** यथा—

येन ध्वस्तमनोभवेन बलिजित्काय· पुरास्त्रीकृतो
यो गङ्गा च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रिय· ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामरा·
सोऽव्यादष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधव· ॥ १०९ ॥

[　]

यथा च—

दोर्मन्दी[न्दे]रितमन्दरेण जलधेरुत्थापिता या स्वय
यां भूत्वा कमठः पुराणककुदन्यस्तामुदस्तम्भयत् ।
ता लक्ष्मीं पुरुषोत्तमः पुनरसौ लीलाञ्चितभ्रूलता-
निर्देशैः समवीविशत्प्रणयिनां गेहेषु दोष्णि क्षितिम् ॥ ११० ॥

[　]

**नागसर्पयोरैक्यं** यथा—

हे नागराज बहुमस्य नितम्बभागं
भोगेन गाढमभिवेष्टय मन्दराद्रेः ।

1. I °दामोदरविष्णुमाधवकूर्मादे·.　2. A °लातलां.　3. E सोऽव्याद् दुष्ट·.

क्षीरक्षारसमुद्रयोः, सागरमहासमुद्रयोः, दैत्यदानवासुराणां चैक्यम् ।

सेढाऽ विषह्यत्रयवाहनयोगलीला-
पर्यङ्कबन्धनविधेस्तव कोऽतिभारः ॥ १११ ॥

[ ]

**क्षीरक्षारसमुद्रयोरैक्यं** यथा—

शेतां हरिर्भवतु रत्नमनन्तमन्तर्लक्ष्मीप्रसूतिरिति नो विवदामहे हे ।
हा दूरदूरसपयास्तृषितस्य जन्तोः किं त्वस्ति कूपपयसः स मरोर्जघन्यः॥११२॥

[ ]

**सागरमहासमुद्रयोरैक्यं** यथा—

रक्ष्मरङ्गभ्रूभङ्गैस्तर्जयन्तीमिवापगाः ।
स ददर्श पुरो गङ्गां सप्तसागरवल्लभाम् ॥ ११३ ॥

[ ]

**दैत्यदानवासुराणामिति** । हिरण्याक्षहिरण्यकशिपुप्रह्लादविरोचनबलिबाणादयो दैत्याः, विप्रचित्तिशम्बरनमुचिपुलोमप्रभृतयो दानवाः, बलवृत्रविक्षुरस्तवृषपर्वादयोऽसुराः । तेषामैक्यं यथा—

जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांसवः ॥ ११४ ॥

[कादम्बरी पृ. आ. श्लो. २]

यथा च—

तं शम्बरासुरशराशनिशल्यसारकेयूररत्नकिरणारुणबाहुदण्डम् ।
पीनांसलम्नदयिताकुचपत्रभङ्गं मीनध्वजं जितजगत्त्रितयं जयेन कः ॥११५॥

[ ]

यथा च—

आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः ।
प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः ॥ ११६ ॥

[हयग्रीववधे]

यथा वा हयग्रीवं प्रति—

दानवाधिपते भूयो भुजोऽयं किं न नीयते ।
सहायतां कृतान्तस्य क्षयाभिप्रायसिद्धिषु ॥ ११७ ॥

[हयग्रीववधे]

---

1 I °रसमुद्रयोः 2. C drops वा. 3. A, B give only the first pāda. C. gives the whole verse 4. D, E च.

तथा चक्षुरादेरनेकवर्णोपवर्णनम्, बहुकालजन्मनोऽपि शिवचद्रमसो

---

यथा च—

महासुरसमाजेऽस्मिन्न चैकोऽप्यस्ति सोऽसुरः ।
यस्य नाशनिनिष्पेषनीराजितमुरःस्थलम् ॥ ११८ ॥

[ ]

एवमन्येऽपि भेदा अभ्यूह्याः ।

**चक्षुरादेरनेकवर्णोपवर्णनमिति** । चक्षुषः शुक्लता[1] यथा—

तिष्ठन्त्या जनसंकुलेऽपि सुदृशा सायं गृहप्राङ्गणे
तद्‌द्वारं मयि निःसहालसतनौ वीक्षामृदु प्रेक्षति ।
ह्रीनम्राननयैव लोलसरलं निःश्वस्य तत्रान्तरे
प्रेमार्द्राः शशिखण्डपाण्डिममुषो मुक्ताः कटाक्षच्छटाः ॥ ११९ ॥

[ ]

श्यामता यथा—

अथ पथि गमयित्वा रम्यकॢप्तोपकार्ये
कतिचिदवनिपालः शर्वरीः शर्वकल्पः ।
पुरमविशदयोध्यां मैथिलीदर्शनीनां[2]
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥ १२० ॥

[ रघु० ११.९३ ]

कृष्णता यथा—

पादन्यासक्वणितरशनास्तत्र लीलावधूतैः
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥ १२१ ॥

[ मेघदूत १.३५ ]

मिश्रवर्णता यथा[3]—

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णसारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं[4]
पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥ १२२ ॥

[ मेघदूत १.१७ ]

---

1. A, B, C drop शुक्लता. 2. E दर्शिनीना. 3. B drops यथा तामुत्तीर्य.
4. E कुन्दोत्क्षेपा०

बालत्वं, कामस्य मूर्त्तत्वममूर्त्तत्वं चेत्यादि ॥

काव्यस्य हेतुमुक्त्वा स्वरूपमाह--

**अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम् ॥ ११ ॥**

चकारो निरलङ्कारयोरपि शब्दार्थयोः क्वचित्काव्यत्वख्यापनार्थः ।

यथा---

**शिवचन्द्रमसो बालत्वं** यथा---

मालायमानामरसिन्धुहंसः कोटीरवल्लीकुसुमं भवस्य ।
दाक्षायणीविभ्रमदर्पणश्रि बालेन्दुखण्डं भवतः पुनातु ॥ १२३ ॥

**कामस्य मूर्तत्वं** यथा---

अयं स भुवनत्रयप्रथितसंयमः शङ्करो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयञ्जयति जातहासः स्मरः ॥ १२४ ॥

[ ]

**अमूर्तत्वं** यथा---

धनुर्माला मौर्वी क्वणदलिकुलं लक्ष्यमबला
मनो भेद्यं शब्दप्रभृतय इमे पञ्च विशिखाः ।
ईयाञ्जेतुं यस्य त्रिभुवनमनङ्गस्य विभवः
स वः कामः कामान्दिशतु दयितापाङ्गवसतिः ॥ १२५ ॥

[ सुभाषितावल्यां घण्टकस्य ]

**निरलङ्कारयोरपीति** । अनेन काव्ये[2] गुणानामवश्यंभावमाह । तथा हि---अनलङ्कृतमपि गुणवद्वचः स्वदते । यथोदाहरिष्यमाणं---'शून्यं वासगृहम्' (पृ. ३४) इत्यादि । अलङ्कृतमपि निर्गुणं न स्वदते । यथा---

स्तनकर्परपृष्ठस्था वार्जिनीच्छदमण्डकाः ।
वियोगाग्न्यूष्मणा पक्वाः कन्दुकिन्येव ते स्त्रिया ॥ १२६ ॥

[ ]

इति ।

---

1 D इयज्जेतुं. 2. A, B काये.
3

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ १ ॥

[अमरुशतक ८२]

गुणदोषयोः सामान्यलक्षणमाह—

**रसस्योत्कर्षापकर्षहेतू गुणदोषौ, भक्त्या शब्दार्थयोः ॥ १२ ॥**

रसो वक्ष्यमाणस्वरूपः, तस्योत्कर्षहेतवो गुणाः, अपकर्षहेतवस्तु दोषाः । ते च रसस्यैव धर्माः, उपचारेण तु तदुपकारिणोः शब्दार्थयोरुच्यन्ते । रसाश्रयत्वं च गुणदोषयोरन्वयव्यतिरेकानुविधानात् । तथा हि—यत्रैव दोषास्तत्रैव गुणाः, रसविशेषे च दोषा न तु शब्दार्थयोः । यदि हि तयोः स्युस्तद्बीभत्सादौ कष्टत्वादयो गुणा न भवेयुः, हास्यादौ चाश्लीलत्वादयः । अनित्याश्चैते दोषाः । यतो यस्याङ्गिनस्ते दोषास्तदभावे न दोषास्तद्भावे तु दोषा इत्यन्वयव्यतिरेकाभ्यां गुणदोषयो रस एवाश्रयः ॥

अलङ्काराणां सामान्यलक्षणमाह—

**अङ्गाश्रिता अलङ्काराः ॥ १३ ॥**

**उपचारेणेति** । यथा 'आकार एवास्य शूरः' इति शौर्यमुपचारात् तदभिव्यञ्जके शरीरे व्यवह्रियते । तथा शब्दार्थयोर्माधुर्यादय इत्यर्थः ।

**अङ्गाश्रिता** इति । ये त्वङ्गिनि रसे भवन्ति ते गुणाः । एष एव गुणालङ्कारविवेकः । एतावता शौर्यादिसदृशा गुणाः केयूरादितुल्या अलङ्कारा इति विवेकमुक्त्वा संयोगसमवायाभ्यां शौर्यादीनामस्ति भेदः । इह तूभयेषां समवायेन स्थितिरित्यभिधाय तस्माद् गड्डरिकाप्रवाहेण गुणालङ्कारभेद इति **भामहविवरणे**

1. I सामान्येन ल०. 2. I drops from इत्यन्वय° to °श्रयः. 3. D °चारात्°. 4 D, E add च after एव. 5. E °षामपि. 6. B, D गड्डरिका०.

रसस्याङ्गिनो यदङ्गं शब्दार्थौ तदाश्रिता अलङ्काराः । ते च रसस्य सतः क्वचिदुपकारिणः, क्वचिदनुपकारिणः । रसाभावे तु वाच्यवाचकवैचित्र्यमात्रपर्यवसिता भवन्ति ।

तत्र रसोपकारप्रकारानाह--

**तत्परत्वे काले ग्रहत्यागयोर्नातिनिर्वाहे निर्वाहेऽप्यङ्गत्वे रसोपकारिणः ॥ १४ ॥**

अलङ्कारा इति वर्तते । तत्परत्वं रसोपकारकत्वेनालङ्कारस्य निवेशो, न बाधकत्वेन, नापि ताटस्थ्येन ।

यथा -

यत्तु **भट्टोद्भटो**ऽभ्यधात्, तन्निरस्तम् । तथाहि--कवितारः सदर्भेष्वलङ्कारान् व्यवस्यन्ति न्यस्यन्ति च, न गुणान् । नचालंकृतीनामपोद्धाराहाराभ्यां वाक्यं दुष्यति पुष्यति वा । तत्र शब्दालङ्कारापोद्धरणं यथा--

अलङ्कृतजटाचक्रं चारुचन्द्रमरीचिभिः ।
मृडानीदत्तदेहार्धं नमामः परमेश्वरम् ॥ १२७ ॥

[ ]

यथा च--

अलङ्कृतजटाचक्रं तरुणेन्दुमरीचिभिः ॥

इति ।

अर्थालङ्कारापोद्धरणं यथा--

श्यामां स्मितासितसरोजदृशं कराग्रैरिन्दौ विभूषयति बालमृणालकल्पैः ।
आरेभिरे रचयितुं प्रतिकर्म नार्यः कार्याणि नायतदृशोऽवसरे त्यजन्ति ॥१२८॥

[ ]

यथा च--

श्यामां स्मितासितसरोजदृशं कराग्रैरिन्दौ विभूषयति केलिचकोरलेखैः

इति ।

1. E °चालङ्कृतानां°. 2. A, C °पोद्धाराभ्यां. 3. C drops पुष्यति.

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकगतः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं चै मुकृती ॥ २ ॥
[ शाकुन्तल १.२० ]

अर्थालङ्काराहरणं यथा—नीलाश्मरश्मीति । यथा च—
नीलाश्मरश्मिपटलानि महेभमुक्त-
सूत्कारसीकरविसृज्ञि मृगाक्षि सानौ ॥ १२९ ॥
[ ]

इति ।

गुणानामपोद्धाराहारौ तु न संभवत इति । तथा काव्यशोभायाः कर्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलङ्कारा [ का. सू. अधि. ३, अ १, सू. १-२ ] इति **वामनेन** यो विवेकः कृत. सोऽपि व्यभिचारी । तथा हि—

'गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः' ॥ १३० ॥

इत्यादौ प्रसादश्लेषसमतामाधुर्यसौकुमार्यार्थव्यक्तीना गुणानां सद्भावेऽपि काव्यव्यवहाराप्रवृत्तेः ।

अपि काचिच्छ्रुता वार्ता तरयोन्निद्यविधायिन. ।
इतीव प्रष्टुमायाते तस्याः कर्णान्तमीक्षणे ॥ १६१ ॥
[ ]

इत्युत्प्रेक्षालङ्कारमात्रादविवक्षितत्रिचतुरगुणात्काव्यव्यवहारदर्शनात् । तस्माद्यथोक्त एव गुणालङ्कारविवेक श्रेयानिति । गुणाश्च त्रय एवेति गुणवर्णनाध्याये ( अध्याय ४ ) विवेचयिष्यते ॥

**चलापाङ्गामिति** । शकुन्तलावलोकने जनिताभिलाषस्य दुष्यन्तस्योक्तिरियम् । किमियमस्मज्जातीया न वा स्वतन्त्रा परतन्त्रा वा—इति तत्त्वान्वेषणपरवशा वयमसंप्राप्ततत्समागमाः प्रतिहताभिलाषाः, संप्रति पुनर्मधुकर त्वमेव पूर्वोपार्जितपुण्यसमारो यदस्यां वल्लभवृत्तान्तमाचरसि । तथा हि । चलौ विलासवशात्तरलावपाङ्गौ पर्यन्तरूपौ यस्यास्तां दृष्टिं त्वत्स्पर्शसंत्रासविधुरितनिजस्थिति-

1. I नु 2 C drops सीकर. 3. A, B, C drop इति । 4 A, B. C, D °मात्रादि°.

अत्र भ्रमरस्वभावोक्तिरलङ्कारो रसपरत्वेनोपनिबद्धो रसोपकारी ।

बाधकत्वेन यथा—

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥ ३ ॥

[ रत्नावली १.१६ ]

अत्र पीडयेवेत्युत्प्रेक्षालङ्कारोऽङ्गी संस्तदनुग्राहकश्चार्थश्लेषः करुणोचितान् विभावानुभावान् संपादयन् बाधकत्वेन भातीति न प्रकृतरसोपकारी ।

---

मनवरतं कम्पवर्ती तथा मुग्धतया शोभातिशयशालिनीं प्रवातप्रकम्पितनीलोत्पलश्रिया स्पृशसीत्यस्माकमभिलाषतः परिचुम्बनप्रवृत्ताना तरलनयनप्रान्तपरिचुम्बनसमयनयनस्पर्शविधानमुचितमत्रभवतानुष्ठितमिति कथमिव न सुकृती भवान् । तथा लोचनकुवलयस्पर्शपराङ्मुखः स्वजातिसमुचितकमलकोशनिलयनाभ्यासवशकर्णकुहरानुप्रवेशाभिलाषेण तन्निकटवर्ती मृदुप्रियकारि मधुरं स्वनसि शिञ्जितमातनोषि तत्किलास्माकं नयनप्रान्तचुम्बनाभिमुखीकृतकान्तकर्णोपान्तनिवेशितानानां तदवसरोचिताभिमताभिप्रायनिवेदनपरतया रहो वृत्तान्ताख्यानमुचितमनुष्ठितं भवतेति भवानेव सुकृती । तथा नयनस्पर्शकर्णोपान्तस्वननव्यापृतोऽशङ्कितोपलब्धसुगन्धिमुखनिःश्वासामोदाकृष्टस्तदधरपल्लवनिवेशासक्तमतिर्दशनभयाद्विधूनितपाणिपल्लवायास्तद्वञ्चनापूर्वकमधरोपविष्टो रतिविषये सुरतोपभोगस्याधररसास्वादसारतया सर्वस्वमधररसपानमनुभवसीत्यस्मत्कृत्यसंपादनात्त्वमेव सुकृती । किल रहो वृत्तान्ताख्यानेनाङ्गीकारितसुरतरसायाः प्रथममधररसामृतपानमस्माभिर्विधेयमिति ।

---

1. C तरनयन०. 2. A ससपनस्पयशेन, B ससपनस्पर्शयन, C समय न स्पर्श० 3. A, B, D मतिदशन०. C मतिदर्शन where the *refa* is misplaced.

ताटस्थ्येन यथा—

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ ४ ॥

[रत्नावली २.८]

फलहकलिखितसागरिकाप्रतिबिम्बदर्शनाभिजाताभिलाषस्य वत्सराजस्येयमुक्तिस्तटस्थस्येव कविनोपरचितेति श्लेषानुगृहीतोपमालङ्कारप्राधान्येन प्रस्तुतो रसो गुणीकृतोऽपरिजिघटिषया ।

अङ्गत्वेऽपि कालेऽवसरे ग्रहणं यथा—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणात्
आयासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ ५ ॥

[रत्नावली २.४]

अत्रोपमा तदनुग्राहकश्च श्लेष ईर्ष्याविप्रलम्भस्य भाविनश्चर्वणाभिमुख्यं कुर्वन्नवसरे रसस्य प्रमुखीभावदशायामुपनिबद्ध उपकारी ।

न त्वेवं यथा

**उद्दामोत्कलिकामिति ।** वासवदत्तापरिगृहीता नवमालिकालता संप्रति न प्रफुल्ला, माधवी लता तु मत्परिगृहीता प्रफुल्लेति तद्दर्शनादीर्ष्यावशेन कोपविपाटलद्युति[1] मुखमहं देव्याः करिष्यामीति वत्सराजोक्तिरियम् । उद्दामा बहुय उद्गताः कलिका यस्याः । उत्कलिकाश्च रुत्कण्ठिका[2] । क्षणात्तस्मिन्नेवावसरे प्रारब्धा जृम्भा विकासो यया, जृम्भा च मन्मथकृतोऽङ्गमर्दः । श्वसनोद्गमैर्वसन्तमारुतोल्लासैरात्मनो लतालक्षणस्यायासमायामनमान्दोलनायत्तमातन्वतीं, निःश्वासपरम्पराभिश्चात्मन आयासं[3] हृदयस्थितं संतापमातन्वतीं प्रकटीकुर्वाणाम् । सह मदनाख्येन वृक्षविशेषेण, मदनेन कामेन च । ध्रुवशब्दश्च भावीर्ष्यावकाशदानजीवितमिति ।

1. A, B, C drop कोप. 2 A, B, C मदुत्कण्ठिका. 3. E drops आयास.

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकैः
दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ ६ ॥

[ भल्लटशतक ८७ ]

अत्र वाताहारत्वं पश्चाद्वाच्यमप्यादावुक्तम्----इत्यतिशयोक्तिरनवसरे गृहीता । तथा हि----प्रथमत एव प्रथमपादे हेतूत्प्रेक्षया यदतिशयोक्तेरुपादानं न तत्प्रकृतस्य दम्भप्रकर्षप्रभावतिरस्कृतगुणगणानुशोचनमयस्य निर्वेदस्याङ्गतामेति । न हि वाताहरत्वादधिको दम्भस्तोयकणव्रतं नापि ततोऽधिकं दम्भत्वं मृगाजिनवसनमिति ।

गृहीतस्याप्यवसरे त्यागो यथा

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैः
त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥ ७ ॥

[ हनुमन्नाटक ५.४ ]

अत्र प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो विप्रलम्भोपकारी ।

न त्वेवं यथा -

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥ ८ ॥

[ बालरामायण १.३६ ]

**रक्तस्त्वमिति** । सीतावियोगोपनतावसंस्थुलावस्थस्य दाशरथेरियमुक्तिः । रक्तो लोहितः, अहमपि रक्तः प्रबुद्धानुरागः । तत्र च प्रबोधको विभावः पल्लवराग इति मन्तव्यम् । एवं प्रतिपादमाद्योऽर्थो विभावत्वेन व्याख्येयः ।

अत्र न रावण इत्यस्मादेव त्यागो युक्तः । तथा हि—रावण इत्येतज्जगदाक्रन्दकारित्वाद्यर्थान्तरं प्रतिपादयज्जनकस्य धर्मवीरं प्रत्यनुभावतां प्रतिपद्यते । ऐश्वर्यं पाण्डित्यं परमेशभक्तिर्देशविशेषोऽभिजन इत्येतत् सर्वं लोकमपबाधमानस्याधर्मपरस्य नार्थक्रियाकारकमिति तावतोऽर्थस्य तिरस्कारकत्वेनैव रावणचेष्टितं निर्वाहणीयम् । यत्त्वन्यदुपात्तं 'क नु पुनर्' इति, तद्यदि ससंदेहत्वेन योज्यते अथाक्षेपत्वेनाथापि नेदृग्वरो लभ्यत इत्यत्रार्थान्तरन्यासत्वेन तथापि प्रकृतस्य धर्मवीरस्य न कथंचिन्निर्वाहः ।

नात्यन्तं निर्वाहो यथा---

कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥ ९. ॥

[ अमरुशतक ९ ]

अत्र रूपकमारब्धमनिर्व्यूढं च रसोपकाराय ।

---

**सखीनां पुर** इति । भवत्योऽनवरतं ब्रुवते नायमेवं करोति तत्पश्यन्त्विदानीमिति भावः । स्खलन्ती कोपावेशेन कला च मधुरा गीर्यस्याः । कासौ गीरित्याह—भूयो नैवमिति-एवंरूपा । एवमिति यदुक्तं तत्किमित्याह–दुश्चेष्टितं नखपदादि । संसूच्य अङ्गुल्या निर्देशेन । हन्यत एवेति । न तु गल्यादिकृतोऽनुनयोऽनुरुध्यते । यतोऽसौ हसनं निर्मितीकृत्य निह्नुतिपरः प्रियतमश्च तदीयं व्यलीकं का सोढुं समर्थेति ।

**अनिर्व्यूढं चेति** । बाहुलतिकायाः पाशत्वेन यदि रूपणं निर्वाहयेद् दयिता व्याधवधूर्वासगृहं कारागारपञ्जरादीति तदा रसभङ्गः स्यादिति ॥

---

1. I °रन्यायेन

2. C · After निर्देशन the scribe has repeated a previous passage from °मयि निःसहाः etc. to कार्याणि नायतदृशोक्स° and then struck out the lines. The last three lines of 8a and the whole of 8b are thus taken up by this repetition.

न त्वेवं यथा—

स्वञ्चितपक्ष्मकपाटं[1] नयनद्वारं स्वरूपताडेन ।
उद्घाट्य मे प्रविष्टा देहगृहं सा हृदयचोरी ॥ १० ॥

[ भासस्य ]

अत्र नयनद्वारमित्येतावदेव सुन्दरं शृङ्गारानुगुणं न त्वन्यदूरूपणम् । निर्वाहेऽप्यङ्गत्वं यथा—

श्यामास्वङ्गं चकितहरिणीप्रेक्षिते दृष्टिपातान्
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥ ११ ॥

[ मेघदूत २.४१ ]

अत्र धुत्प्रेक्षायास्तत्तद्भावाध्यारोपरूपाया अनुप्राणकं सादृश्यं यथोपक्रान्तं तथा निर्वाहितमपि विप्रलम्भरसोपकाराय ।

न त्वेवं यथा —

न्यञ्चत्कुञ्चितमुन्मुकं हसितवत् साकूतमाकेकरं
व्यावृत्तं प्रसरत् प्रसादि मुकुलं सप्रेम कम्प्रं स्थिरम् ।
उद्भ्रु भ्रान्तमपाङ्गवृत्ति विकचं मज्जत्तरङ्गोत्तरं
चक्षुः साश्रु च वर्तते रसवशादेकैकमन्यक्रियम् ॥ १२ ॥

[ बालरामायण २.१९. ]

**श्यामास्विति ।** सुगन्धिप्रियङ्गुलतासु पाण्डिम्ना तनिम्ना[2] कण्टकितत्वेन च योगात् । शशिनीति । पाण्डुरत्वात्[3] । उत्पश्यामीति । यत्नेनोत्प्रेक्षे । जीवितसंधारणायेत्यर्थः । हन्तेति । कष्टमेकस्थसादृश्याभावे हि दोलायमानोऽहं सर्वत्र स्थितो न कुत्रचिदेकत्र धृतिं लभे—इति भावः । भीरु इति । यो हि कातरहृदयो भवति नासौ सर्वमेकस्थं धारयतीत्यर्थः ।

---

1. I कपाटं. P कवाटं. 2. A, B, C drop तनिम्ना.
3. A, B पाण्डरत्वात्.

अत्र रावणस्य दशविंशतौ वैचित्र्येण स्वभावोक्तिर्निर्वाहितापि रसस्याङ्गत्वेन न योजितेति ॥

शब्दार्थयोः स्वरूपमाह—

**मुख्यगौणलक्ष्यव्यङ्ग्यार्थभेदात् मुख्यगौणलक्षकव्यञ्जकाः शब्दाः ॥ १५ ॥**

मुख्यार्थविषयो मुख्यो गौणार्थविषयो गौणो लक्ष्यार्थविषयो लक्षको व्यङ्ग्यार्थविषयो व्यञ्जकः शब्दः । विषयभेदाच्छब्दस्य भेदो, न स्वाभाविक इत्यर्थः ।

मुख्यमर्थं लक्षयति—

**साक्षात्संकेतविषयो मुख्यः ॥ १६ ॥**

अव्यवधानेन यत्र संकेतः क्रियते स मुखमिव हस्ताद्यवयवेभ्योऽर्थान्तरेभ्यः प्रथमं प्रतीयत इति मुख्यः । स च जातिगुणक्रियाद्रव्यरूपस्तद्विषयः शब्दो मुख्यो वाचक इति चोच्यते । यथा— गौः शुक्लश्चलति देवदत्त इति । यदाह **महाभाष्यकारः** (6) "चतुष्टयी शब्दानां प्रवृत्तिः" इति । [अ. १, पा. १, आ. २, ऋलृक् सूत्र]

**न योजितेति ।** रसवशादेवैकमन्यक्रियमिति [1]एतावन्मात्रेऽप्युक्ते तद्रसगतव्यभिचारिभेदोपनिपाताय यौगपद्याद्युभावित्वसंभावनाय च किञ्चिद्विभाववैचित्र्यं वक्तव्यं यथा—

सभायां तादृश्यां नरपतिशतैरक्षाकितवैः
समन्ताकीर्णायामनुपरिचितामेकवसनाम् ।
यदकार्क्षीद् शासननरपशुः केशनिचयान
न कस्यासीत्तेन भ्रुकुटिविषमो बाष्पविसरः ॥ १३४ ॥
[ ]

अत्र हि भ्रुकुटिः [2]क्रोधस्यानुभावो बाष्पश्च शोकस्य शोकक्रोधयोश्च यौगपद्यमाशुभावो वा विभावबलाद् दर्शितः । सा हि तादृशी शोकस्य विभावो, दुःशासनश्च तथानुचितकारी क्रोधस्य । नच विभावद्वयं झटिति पुरःपातितमनुभाववैचित्र्यमाधत्ते—इति युक्तं विरुद्धरूपदीप्ततममसृणनर्माचरणत्युचितानुभावयोजनम् । 'न्यक्कारकुञ्चितम्' इत्यादौ (पृ० ४१) तु तत्प्रकृतानुगुण्यप्रतिजागरणं कविना सावलेपतया न कृतमिति ।

1 E भ्रुकुटि' 2 E भ्रुकुटि.

जात्यादिस्वरूपं च प्रकृतानुपयोगान्नेह विपञ्च्यते । जातिरेव

---

**चतुष्टयीति** । जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्च । तथा हि—सर्वेषां शब्दानां स्वार्थाभिधानाय प्रवर्तमानानामुपाध्युपदर्शितविषयविवेकत्वादुपाधिनिबन्धना प्रवृत्तिः । उपाधिश्च द्विविधः । वक्तृसंनिवेशितो वस्तुधर्मश्च । तत्र यो वक्त्रा यदृच्छया तत्तत्संज्ञिविषयशक्त्यभिव्यक्तिद्वारेण तस्मिंस्तस्मिन् संज्ञिनि निवेश्यते स वक्तृसंनिवेशितः । यथा डित्थादीनां शब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमस्वरूपम् । तत् खलु तां तामभिधाशक्तिमभिव्यञ्जयता वक्त्रा यदृच्छया तस्मिंस्तस्मिन् संज्ञिन्युपाधितया संनिवेश्यते । अतस्तन्निबन्धना यदृच्छाशब्दाः डित्थादयः । येषामपि च डकारादिवर्णव्यतिरिक्तसंहृतक्रमस्वरूपाभावाच्च डित्थादिशब्दस्वरूपं संहृतक्रमं संज्ञिष्वध्यवस्यत इति दर्शनम्, तेषामपि वक्तृयदृच्छाभिव्यज्यमानशक्तिभेदानुसारेण काल्पनिकसमुदायरूपस्य डित्थादेः शब्दस्य तत्तत् सञ्ज्ञाभिधानाय प्रवर्तमानत्वाद् यदृच्छाशब्दत्वं डित्थादीनामुपपद्यत एव ।

वस्तुधर्मस्य च द्वैविध्यम् । सिद्धसाध्यताभेदात् । तत्र साध्योपाधिनिबन्धनाः क्रियाशब्दाः । यथा—पचतीति । सिद्धस्य तूपाधेर्द्वैविध्यम् । जातिगुणभेदात् । तत्र पदार्थप्राणप्रद उपाधिर्जातिः । न हि कश्चित् पदार्थो जातिसंबन्धमन्तरेण स्वरूपं प्रतिलभते । यदुक्तं **वाक्यपदीये**—

(14) गौः स्वरूपेण न गौर्नाप्यगौर्गोत्वाभिसंबन्धात्तु गौः ।

[वाक्यपदीये]

इति ।

लब्धस्वरूपस्य तु वस्तुनो विशेषाधानहेतुर्गुणः । न हि शुक्लादेर्गुणस्य पटादिवस्तुस्वरूपप्रतिलम्भनिबन्धनत्वम् । जातिमहिम्नैव तस्य वस्तुनः प्रतिलब्धस्वरूपत्वात् ।

**जातिरेवेति** । तथा हि—गुणशब्दानां तावच्छुक्लादीनां पयःशङ्खबलाकाद्याश्रयसमवेता ये शुक्लादिलक्षणा गुणा विभिन्नास्तत्समवेतसामान्यवाचिता । एवं क्रियादिशब्दानामपि गुडतिलतन्दुलादि द्रव्याश्रिता ये पाकादयोऽन्योन्यमन्यत्वेनावस्थिताः क्रियाविशेषास्तत्समवेतं सामान्यमेव वाच्यम् । यदृच्छा-

1 C, D, E °शक्त्यभि° . 2 A, B, C, D च. 3 E क्रियाशब्दा°.

सङ्केतविषय इत्येके । तद्वानित्यपरे । अपोह इत्यन्ये ।

गौणं लक्षयति----

**मुख्यार्थबाधे निमित्ते प्रयोजने च भेदाभेदाभ्यामारोपितो गौणः ॥ १७ ॥**

गौर्वाहीको गौरेवायमित्यादौ मुख्यस्यार्थस्य सास्नादिमत्त्वादेः प्रत्यक्षादिना प्रमाणेन बाधे, निमित्ते च सादृश्यसंबन्धादौ, प्रयोजने च सादृश्यताद्रूप्यप्रतिप्रतिरूपे सति, आरोप्यारोपविषययोर्भेदाभेदेन[1] च समारोपितोऽतथाभूतोऽपि तथात्वेनाध्यवसितो, गुणेभ्य आयातत्वाद्गौण· तद्विषय.

शब्दानां तु डित्यादीनां शुकसारिकामनुष्याद्युदीरितेषु भिन्नेषु डित्थादिशब्देषु समवेतं डित्थशब्दत्वादिक सामान्यमेव यथायोग्यं[2] संज्ञिन्यध्यस्तमभिधेयम् । यदि वोपचयापचययोगितया डित्थादौ संज्ञिनि प्रतिक्षणं भिद्यमानेऽप्यभिद्यमानो यन्महिम्ना डित्थो डित्थ इत्येवमादिरूपत्वेनाभिन्नाकार· प्रत्ययो बाधशून्य. संजायते तत्तथाभूत डित्थादिशब्दावसेयवस्तुसमवेतमेव डित्थत्वादिसामान्यमन्वेष्टव्यम्[3] । तच्च डित्थादिशब्दैरभिधीयते । इति गुणक्रियायदृच्छाशब्दानामपि जातिशब्दत्वाज्जातिरेवैकः शब्दार्थ इति ।

**तद्वानिति** । जातेरर्थक्रियायामनुपयोगाद् विफल· संकेतः । यदाह-

(15) 'न हि जातिर्दाहपाकादावुपयुज्यत इति व्यक्तेश्चार्थक्रियाकारित्वेऽप्यानन्त्यव्यभिचाराभ्या न संकेत कर्तुं शक्यत[4] इति जात्युपहिता व्यक्ति· शब्दार्थ· ' इति ।

**अपोह इति** । जातिव्यक्तितद्योगजातिमद्बुद्ध्याकाराणां शब्दार्थत्वस्यानुपपद्यमानत्वाद् गवादिशब्दानामगोव्यावृत्त्यादिरूपस्तद्विशिष्टं वा बुद्धिप्रतिबिम्बकं सर्वथा बाह्यार्थस्पर्शशून्यमन्यापोहशब्दवाच्यं शब्दार्थ इति[5] ।

**मुख्या इति** । इदमेव हि शब्दानां मुख्यानां[6] मुख्यत्वं यत् साक्षात्संकेतविषयत्वम् । संकेते च रूढिरेव कारणम् । ततो यदि रूढिमपेक्ष्य लक्षणा प्रवर्तेत तदातिप्रसङ्गः स्यादिति ।

1. I भेदेनाभेदेन. 2. A, B यथायोगं. 3 C, D, E °मन्वेष्टव्यम्. 4 A, B शक्य. 5 A, B, C, E इत्यर्थः 6. A, B, C, D drop मुख्यानां.

शब्दोऽपि गौण उपचरित इति चोच्यते। तत्र सादृश्ये निमित्ते भेदेनारोपितो यथा—गौर्वाहीकः। इदं वक्ष्यमाणस्य रूपकालङ्कारस्य बीजम्। अभेदेन यथा—गौरेवायमिति। इदमतिशयोक्तिप्रथमभेदस्य। अत्र स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने निमित्तत्वमुपयान्तीति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, न तु परार्थोऽभिधीयत इत्यन्ये। साधारणगुणाश्रयेण परार्थ एव लक्ष्यत इत्यपरे।

संबन्धे कार्यकारणभावे आयुर्घृतं, आयुरेवेदम्। अत्रान्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि प्रयोजनम्। तादर्थ्ये—इन्द्रार्था स्थूणा इन्द्रः। स्वस्वामिभावे राजकीयः पुरुषो राजा। ग्रामस्वामी ग्रामः। अवयवावयविभावे अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः। मानमेयभावे आढको व्रीहिः। संयोगे रक्तद्रव्यसंयोगाद् रक्तः पटः। तात्कर्म्ये अतक्षा तक्षा। वैपरीत्ये अभद्रमुखे भद्रमुखः।

लक्ष्यमर्थं लक्षयति

**मुख्यार्थसंबद्धस्तत्त्वेन लक्ष्यमाणो लक्ष्यः ॥ १८ ॥**

मुख्योऽर्थो गङ्गादिशब्दानां स्रोतःप्रभृतिस्तेन संबद्धस्तटादिरर्थस्तत्त्वेनाभेदेन लक्ष्यमाणो लक्ष्यः। तत्त्वेन लक्ष्यमाण इति वचनाद् भेदाभेदाभ्यामारोपित इति न वर्तते। शेषं तु गौणलक्षणमनुवर्तत एव। तद्विषयः शब्दो लक्षको यथा—गङ्गायां घोषः, कुन्ताः प्रविशन्ति। अत्र गङ्गायां घोषाधिकरणत्वस्य कुन्तानां प्रवेशस्य चासंभवान्मुख्यार्थबाधः।

1. In I, दा is placed over रा, i.e., परादार्थ, which shows a different reading 2. I, L गङ्गाया. 3. L °धिकरणात्तस्य.

सामीप्यं साहचर्यं च निमित्तम्। गंगातट इति कुन्तवन्त इति च प्रयोगाद् येषां न तथाप्रतिपत्तिस्तेषा पावनत्वरौद्रत्वादोनां धर्माणां तथाप्रतिपादनं प्रयोजनम्।

गौरनुबन्ध्य इति तु नोदाहरणीयम्। अत्र हि श्रुतिनोदितमनुबन्धनं जातौ न संभवतीति जात्यविनाभावित्वाद् व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते।

(7) "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे"

इति न्यायात्। न चात्र प्रयोजनमस्ति। अविनाभावादाक्षेपे च यदि लक्ष्यत्वमिष्यते तदा क्रियतामित्यत्र कर्तुः, कुर्वित्यत्र कर्मणः, प्रविश, पिण्डीम्–इत्यादौ गृहं, भक्षय–इत्यादेश्च लक्ष्यत्वं स्यात्। पीनो देवदत्तो दिवा न भुङ्क्त इत्यादौ न पीनत्वेन रात्रिभोजनं लक्ष्यतेऽपि त्वर्थापत्त्या आक्षिप्यत इति। इह च यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते स गौणोऽर्थो. यत्र तु न तथा स लक्ष्य इति विवेकः। कुशल-द्विरेफद्विकादयस्तु साक्षात्संकेतविषयत्वान्मुख्या एवेति न रूढिर्लक्ष्यस्यार्थस्य हेतुत्वेनास्माभिरुक्ता।

व्यङ्ग्यं लक्षयति—

**मुख्याद् व्यतिरिक्तः प्रतीयमानो व्यङ्ग्यो ध्वनिः ॥ १९ ॥**

मुख्यगौणलक्ष्यार्थव्यतिरिक्तः प्रतीतिविषयो व्यङ्ग्योऽर्थः। स च

**अस्माभिरिति**। न तु **भट्टमुकुलादिभिः**। तैर्हि रूढिमपि प्रयोजनतया उपन्यस्य लक्षणा प्रवर्तिता।

यदाहुः—

(16) रूढेः प्रयोजनाद् वापि व्यवहारोऽवलोक्यते।

इति ॥ [अभिधावृत्तिमातृका १० अ]

**मुख्यगौणलक्ष्यार्थव्यतिरिक्त** इति। अयं भावः—यद्यतो व्यतिरेकेणावभासते तत्ततोऽन्यदिति व्यवहर्तव्यम्। नीलमिव पीतात्। वाच्यादिव्यतिरिक्तश्च व्यङ्ग्योऽर्थोऽवभासत इति।

**प्रतीतिविषय** इति। अनेन स्वसंवेदनसिद्धतामाह। तथा च **श्रीमदानन्दवर्धनः**—

1. D, E लक्षणतया. 2 D, E °हारे.

ध्वन्यते द्योत्यत इति ध्वनिरिति पूर्वाचार्यैः संज्ञितः । अयं च वस्त्वलङ्काररसादिभेदात्त्रेधा । तथा ह्याद्यस्तावत्प्रभेदो मुख्यादिभ्योऽत्यन्तं भिन्नः । स हि वाच्ये विधिरूपे प्रतिषेधरूपो यथा—

मम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ तेण ।
गोलाणइकच्छकुडङ्गवासिणा दरियसीहेण ॥ १३ ॥

[ गाथासप्तशती २. ७५ ]

(17) प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत् प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु ॥

[ ध्वन्यालोक १·४ ]

**वस्त्वलङ्कारेति** । इह लौकिकालौकिकभेदेनार्थो द्विधा । लौकिकश्च शब्दाभिधानयोग्योऽविचित्रविचित्रात्मतया द्विधा । तत्राविचित्रो वस्तुमात्रम्, विचित्रस्त्वलङ्कारात्मा । यद्यपि च व्यङ्ग्यतायां प्राधान्ये च विचित्रस्यालङ्कार्यत्वम्, तथापि ब्राह्मणश्रमणन्यायेन तस्यालङ्कारव्यपदेशः । अनयोश्च वस्त्वलङ्कारयोर्व्यङ्ग्यतायां यद्यपि न वाच्यत्वम्, तथापि तयोर्विध्यादिरूपत्वात् क्वचन तत्संभवतीति लौकिकत्वम् । अलौकिकस्तु स्वप्नेऽपि वाच्यत्वस्पर्शाक्षमो रसादिरिति ।

**मम धम्मिअ-इति** । काचिदविनयवधूर्गोदावरीकूललतागहने प्रच्छन्नकामुकेन सह नादेयपानीयानयनादिव्याजेन गृहान्निर्गत्य सदा रममाणा धार्मिकं पुष्पोच्चयनलताविलोपनादिना विघ्नभूतं संभावयन्ती विदग्धापि मुग्धेव वक्ति । यस्तवास्मद्गृहपदं प्रविशतो भयमकरोत् स श्वा निर्विचारोऽद्यास्मद्भाग्योदयेन तेन लोकप्रसिद्धेन दृप्तेन कृपापात्रमपि श्वानमपश्यता सिंहेनाप्रतिकारयोग्येण मारित उन्मथितः । न तु बुद्धिपूर्वकं हतः । औचित्यैकवसतेरनौचित्यायोगात् । न चात्र सिंहस्ते भयकारणम् । यतो **गोदावर्या** नद्या, न तु **सरस्वत्यादिवत्** तद्युक्ते देशे, यत्कूलं तत्र । न तु ततो दूरे लतागहने दर्शनागोचरे स्थाने वसति संततं कृतास्पदस्तेन निर्भयमिदानीं भिक्षाद्यर्थं संचरेति । एवमादौ च विषये यद्यपि रसादिरर्थो व्यङ्ग्योऽस्ति तथापि महाराजशब्दव्यपदेश्यविवाहकरणप्रवृत्तसचिवानुयायिराजवदप्रधानतामेव गृह्णाति । लतागहनस्थस्यैवेदमभिधीयत

1 P, L, I वाच्यविधिरूपे. 2. D धाने यो°. 3 A drops मम धम्मिअ-इति
4 E प्रतीकार. 5. A, B drop तु. 6. A, E सततकृ°.

इति व्याख्याने लाक्षणिकोऽयमर्थो भवेत् ततः प्रयोजनांशे व्यङ्ग्ये निषेधो व्यङ्ग्य इति न संगच्छते । इह वासिनेति चाभिधेयं स्यात् । न चात्र निषेधस्य वाच्यत्वं वक्तुं शक्यं । तथा हि । अगृहीतसंकेतस्यार्थप्रतिपत्तेरकरणाद् गृहीतसंकेत एव शब्दोऽर्थप्रतिपादकः । संकेतश्चानन्त्याद् व्यभिचाराच्च वाक्यार्थ इव वाक्यस्य विशेषरूपे पदार्थे पदस्य कर्तुं न पार्यत इति सामान्य एवासौ । आकाङ्क्षायोग्यता-संनिधिवशात् पदार्थानां सामान्यभूतानां समन्वय इति ।

(18) 'सामान्यान्यन्यथाऽसिद्धेर्विशेषं गमयन्ति हि' इति । विशेषरूप —

(19) 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इत्यपदार्थोऽपि वाक्यार्थ उल्लसति । विशेषस्यैव च यत्राशब्दार्थत्वं तत्र वस्त्वन्तररूपस्य निषेधस्य वाच्यत्वमिति का कथेत्यभिहितान्वयवादे तावदभिधावादैव निषेधस्य व्यञ्जना । येऽप्याहुः—

(20) 'अनन्वितार्थं पदमप्रयोज्यम्' इति

प्रयोगयोग्यं वाक्यमेव, तत्र च संकेतो गृह्यत इत्यपरपदार्थान्वित एव पदार्थः संकेतभूः । यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते—इति पदार्थान्तरमात्रेणान्वितः पदार्थः संकेतगोचरः, तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते, व्यतिषक्तानां पदार्थानां तथाभूतत्वा[2]दित्यन्विताभिधाननये 'वाक्यार्थो नापदार्थ' इति तन्मतेऽपि सामान्यविशेषरूप पदार्थः संकेतविषय इत्यतिविशेषभूतो वाक्या[3]र्थान्तर्गतोऽसंकेतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतनिषेधचर्चा । अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधानेऽन्वितविशेषस्त्ववाच्य एवेत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः ।

यदप्युच्यते—

(21) "नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्ते"

इति । तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा । शब्दस्य प्रकाशकत्वाच्च कारकत्वं,

1. A तथात्र. 2 A, B तथाभूततत्त्वादि°. 3. A drops वाक्यार्थान्तर्गतो.

ज्ञापकत्वं त्वज्ञातस्य कथम्। ज्ञातत्वं च संकेतेनैव, स चान्वितमात्रे। एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम्।

ये त्वभिदधति—'सोऽयमिषोरिव दीर्घदीर्घो व्यापारः' इति यत्परः शब्दः स शब्दार्थ इति च प्रतिषेध एवात्र वाच्य इति। एतदतात्पर्यज्ञत्वं तात्पर्यवाचोयुक्तेर्देवानांप्रियाणाम्। तथा हि। भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभिसंबन्धात् साध्यायमानतां प्राप्नुवन्ति। ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद् विधीयते। यथा 'रक्तं पटं वय' इत्यादावेकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यदेव विधेय तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यम्। न तु प्रतीतमात्रे। एवं हि 'पूर्वो धावति' इत्यादावपरार्थेऽपि क्वचित् तात्पर्यं स्यात्।

यत्तु—'विषं भक्षय मा चास्य गृहे भुङ्क्था' इत्यत्र एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थ इत्युच्यते। तत्र चकार एकवाक्यतासूचनार्थः। न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सु[सुहृ]द्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुङ्क्था इत्युपात्तशब्दार्थ एव तात्पर्यम्। यदि च शब्दश्रुतेरनन्तरं यावानर्थोऽवगम्यते तावति शब्दस्याभिधैव व्यापारस्तत कथं 'ब्राह्मण पुत्रस्ते जातो ब्राह्मण कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम्। कस्माच्च लक्षणा। किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वमित्यन्विताभिधानवादेऽपि निषेधस्य सिद्धं व्यङ्ग्यत्वम। किं च कुरु रुचिमिति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम्। न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वित इत्यनभिधेय एवेत्येवमाद्यपरित्याज्यं स्यात्। यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात्। न चानुपपन्नं सर्वस्यैव विभक्ततया प्रतिभासात्।

1 A, B drop ज्ञापकत्वं. 2. A, B ज्ञातज्ञापकत्वं. 3 A, B drop one दीर्घ. E दीर्घादीर्घो. 4. A, B, C तदसाधुत्वादीनां.

वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयेण तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था।

द्वयं गतं संप्रति शोचनीयता[1]
समागमप्रार्थनया कपालिनः' ॥ १३५ ॥

[कुमार० ५.७१]

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम्। अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रत्येकरूप एवेति नियतोऽसौ। न हि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते। तथा च 'गतोऽस्तमर्कः' इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्तामहे इति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, सतापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नागतोऽद्य प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभाति। वाच्यव्यङ्ग्ययोः 'निःशेष' इत्यादौ (पृ. ५९) निषेधविध्यात्मना, 'मात्सर्यमुत्सार्य कार्यम्' इत्यादौ (पृ. २६३) संशये शान्तशृङ्गार्यन्यतरगतनिश्चयरूपेण,

कथमवनिप दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ १३६ ॥

[ ]

इत्यादौ निन्दास्तुतिवपुषा,

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ १३७ ॥

[ ]

इत्यादौ स्तुतिनिन्दारूपेण, स्वरूपस्य। पूर्वपश्चाद्भावेन प्रतीतेः कालस्य, शब्दाश्रयत्वेन तदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन चाश्रयस्य, शब्दार्थशासनज्ञानेन

1. A drops from नीयतां to सर्वान्. 2. A, B व्यङ्ग्यार्थः.

अत्र विस्रब्धो भ्रमेति विधिवाक्ये तत्र निकुञ्जे सिंहस्तिष्ठति त्वं च शुनोऽपि बिभेषि तस्मात् त्वया तस्मिन् न गन्तव्यमिति निषेधः प्रतीयते।

प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य, बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचमत्कृत्योश्च करणात कार्यस्य, 'गतोऽस्तमर्कः' इत्यादौ (पृ ५०) प्रदर्शितनयेन संख्यायाः, 'कस्स व—' इत्यादौ (पृ.५७) सखीतत्कान्तादिगतत्वेन विषयस्य च, भेदेऽपि यद्येकत्वं तत् क्वचिदपि नीलानीलादौ भेदो न स्यात्। उक्त हि—(22) 'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति। वाचकानामर्थापेक्षा, व्यञ्जकानां तु न तदपेक्षत्वमपीति न वाचकत्वमेव व्यञ्जकत्वम्। किञ्च। 'वाणीरकुडंग—' इत्यादौ (पृ.१५२) प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति तत्र मध्यमकाव्यप्रभेदेऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बताम्।

ननु 'रामोऽस्मि सर्वं सहे' (पृ ७१·१) इति, 'रामेण प्रियजीवितेन तु कृत प्रेम्णः प्रिये नोचितम्' इति, 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽर्थो नानात्वं भजते, विशेषव्यपदेशहेतुश्च भवति। तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम। उच्यते—लक्षणीयस्यार्थस्य नानात्वेऽप्यनेकार्थशब्दाभिधेयवन्नियतत्वमेव न खलु मुख्येनार्थेनानियतसंबन्धो लक्षयितुं शक्यते, व्यङ्ग्यस्तु प्रकरणादिविशेषवशेन नियतसंबद्धोऽनियतसंबद्धः संबद्धसंबद्धश्च द्योत्यते। न च 'भम धम्मिय' इत्यादौ (पृ.४७) अर्थशक्तिमूले व्यंङ्ग्ये मुख्यार्थबाधस्तत् कथमत्र लक्षणा, लक्षणायामपि व्यञ्जन-

1. D र्थापेक्षत्वमपि. 2. D तसम्बन्धे. 3. A, B, C संबद्धश्च. 4. A, B व्यङ्ग्य. 5. D drops लक्षणा.

मवश्यमाश्रयितव्यम् । यथा च समयसव्यपेक्षाभिधा, तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा । अत एव अभिधापुच्छभूता सा इत्याहुः । न च लक्षणात्मकमेव ध्वननं तदनुगमेन तस्य दर्शनात् । न च तदनुगतमेव, अभिधालम्बनेनापि तस्य भावात् । न चोभयानुसार्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः । न च शब्दानुसार्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य सिद्धेः । इत्यभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती व्यञ्जनव्यापारोऽनपह्नवनीय एवेति सिद्धमेव निषेधस्य व्यङ्ग्यत्वम् । तत्र 'अत्ता एत्थ—' इत्यादौ (पृ. ५३) नियतसंबद्धः 'कस्स व ण होइ रोसो—' (पृ. ५७) इत्यादावनियतसंबद्धः ।

विवरीयरए लच्छी बम्भं दट्ठूण णाहिकमलत्थं ।
हरिणो दाहिणणयणं रसाउला झत्ति ढक्केइ ॥ १३८ ॥

[ सप्तशतक ८१५ ]

इत्यादौ संबद्धसंबद्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मता व्यज्यते । तन्निमीलनेन सूर्यस्यास्तमयस्तेन पद्मस्य संकोचस्ततो ब्रह्मणः स्थगनं तत्र सति गोप्याङ्गस्यादर्शनेऽनियन्त्रणं निधुवनविलसितम् । येऽप्याहुः—(23) 'अखण्डबुद्धिनिर्ग्राह्यं वाक्यमेव च वाचकम् । वाक्यार्थ एव वार्थः' इति, तेषामविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्यवश्यमेव निषेधस्य व्यङ्ग्यत्वम् ।

अन्ये तु—वाच्यादसंबद्धं तावन्न प्रतीयते यतः कुतश्चिद् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् । एवं च संबन्धाद् व्यङ्ग्यव्यञ्जकभावोऽवश्यमप्रतिबन्धे न भवतीति त्रिरूपाद्धेतोरेव नियतधर्मिनिष्ठत्वेन प्रतीतिः । तथा च भीरुभ्रमणस्य कारणं भयकारणाभावस्तद्विरुद्धं च भयकारणं सिंहस्तदुपलब्धेर्लतागहने भ्रमणमनुमीयत इति विध्यादावपि वाच्ये सिंहसद्भावादि निषेधादेरनुमापकम्, न तु व्यञ्जकमिति ये वदन्ति तेऽपि न युक्तवादिनः । तथा हि । अप्रमाणभूतवाक्यप्रत्येयः सिंह इति संदिग्धासिद्धो हेतुः । स्वाम्यादेशेनानुरागेण लोभेनान्येन वा केनचिदेवंविधेन हेतुना भीरोरपि भयकारणसद्भावेऽपि भवति भ्रमणमित्यनैकान्तिकः । शुन कृपापात्रत्वादप्रतीकार्यत्वेन बिभेति । सिंहे तेजस्विनि तु पराक्रमत इति विरुद्धश्च । तत् कथमनुमानम् । एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वे न प्रकाशत इति । व्यक्तिवादिनस्तु तददूषणम् ।

1. A, B, C, D drop न. 2 D रिक्ति. 3 D भ्रमस्य का°. 4. A, B °ने भ्रमण. 5. D क्रम इति.

क्वचिन्निषेधे विधिर्यथा —

अत्ता एत्थ[1] णु[2] मज्जइ एत्थ अहं दियसयं पुलोएसु[3] ।
मा पहिय रत्तिअंधय सेज्जाएँ[4] महं नु मज्जिहिसि[5] ॥ १४ ॥

[गाथासप्तशती ७.६७; सप्तशतक ६६९]

अत्रावयोः शय्यायां मा निपत्स्यसीति निषेधवाक्ये इयं श्वश्रू-शय्या इयं मच्छय्येति दिवाप्युपलक्ष्य रात्रौ त्वयेहागन्तव्यमिति विधिः प्रतीयते ।

क्वचिद्विधौ विध्यन्तरं यथा —

वहलतमा हयराई अज्ज पउत्थो पई घरं सुत्तं ।
तह जग्गिज्ज मयज्झय न जहा अम्हे मुसिज्जामो ॥ १५ ॥

[गाथासप्तशती ४.३५: सप्तशतक ३३५]

**अत्तेति** । श्वश्रूरसहिष्णुर्न तु माता तेन गुप्तमभिलाषः पोषणीयः । न च सर्वदा भयदेत्याह—**अत्रेति** । दूरे सा च शेते, न जागर्ति । अत्र त्वन्मार्गनिकटे अहमुपभोगयोग्या, सांप्रतं विघ्नकारीति कुत्सितं दिवसं तस्मात् संप्रति विलोक्य । एहि, परस्परावलोकनसुखमनुभवावः[7] । **पथिकेति** चेतितेऽपि[8] तव न दोषावहमिति न भेतव्यम् । रात्रावधिकमदनोद्रेकादन्ध शय्याविभागानभिज्ञ शय्यायां मा शयिष्ठाः; अपि तु मयि । मा आवयोः, अपि तु मय्येव । मा शयिष्ठाः, अपि तु प्रहरचतुष्टयमपि निधुवनेन क्रीडामह इति । महं इति निपातोऽत्रानेकार्थवृत्तिः । न तु ममेति । एवं हि विशेषवचनमेवाशङ्काकारि भवेदिति प्रच्छन्नाभ्युपगमो न स्यात् ।

1. I इत्थ. In G, S the reading is एत्थ णिमज्जइ अत्ता etc. 2. L drops नु मजइ एत्थ. 3. I पलोएइ. L देव सय पुल. 4. L सेज्जयाय. 5. I मज्जिहिसि. 6 L has meaningless readings. This is due to the misplacing of letters. 7. E °रविलोकन°. 8 A, B चेतनेऽपि.

अत्र यथा वयं न सुप्यामहे तथा त्वं जागृहीति विध्यभिधाने रात्रिरत्यन्धकारा, पतिः प्रोषितः, गृहं शून्यम्, अतस्त्वमभयो मत्पार्श्वमागच्छेति विध्यन्तरं प्रतीयते ।

क्वचिन्निषेधे निषेधान्तरं यथा—

आसाइयं अणाएण जेत्तियं तेत्तिएण बध दिहिं ।
ओरमसु वसह इण्हिं रक्खिज्जइ गहवईच्छित्तं ॥ १६ ॥

[सप्तशतक ९५८]

अत्र गृहपतिक्षेत्रे दुष्टवृषवारणापरे निषेधवाक्ये उपपतिनिवारणं निषेधान्तरं प्रतीयते ।

क्वचिद्विधिनिषेधे विधिर्यथा—

महुएहिं किं व पंथिय जइ हरसि नियंसणं नियंबाओ ।
साहेमि कस्स रन्ने गामो दूरं अहं एक्का ॥ १७ ॥

[सप्तशतक ८७७]

अत्र विधिनिषेधयोरनभिधाने अहमेकाकिनी, ग्रामो दूर इति विविक्तोपदेशात्निजतम्ववासोऽपि[1] मे हरेति विधिः प्रतीयते ।

क्वचिद्विधिनिषेधे निषेधो यथा—

जीविताशा बलवती धनाशा दुर्बला मम ।
गच्छ वा तिष्ठ वा कान्त स्वावस्था तु निवेदिता ॥ १८ ॥

[ ]

अत्र गच्छ वा तिष्ठ वेत्यविधिनिषेधे जीविताशा बलवती धनाशा दुर्बला ममेति वचनात् त्वया विनाहं जीवितुं न शक्नोमीत्युपक्षेपेण गमननिषेधः प्रतीयते ।

**विधिरिति ।** काश्चित् प्रोषितपतिका तरुणीमवलोक्य प्रबुद्धमदनाङ्कुरः संपन्नः पान्थोऽनेन निषेधद्वारेण तयाऽभ्युपगत इति निषेधाभावो विधिर्न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्तनास्वभावः, सौभाग्याभिमानखण्डनाप्रवेशात् ।

1. S drops पि. 2. I पान्थ. L drops from कान्त to निवेदिता.

क्वचिद्विधिनिषेधयोर्विध्यन्तरं यथा--

नियदइयदंसणुक्खित्त पहिय अन्नेण वच्चसु पहेण ।
गहवइधूआ दुल्लंघवाउरा इह हयग्गामे ॥ १९ ॥

[ सप्तशतक ९.५७ ]

अत्रान्येन पथा व्रजेति विधिनिषेधयोरभिधाने हे स्वकान्ताभिरूपता-विकत्थन पान्थ अभिरूपक इह ग्रामे भवतो गृहपतिसुता द्रष्टव्यरूपेति विध्यन्तरं प्रतीयते ।

कचिद् विधिनिषेधयोर्निषेधान्तरं यथा--

उच्चिणसु पडियकुसुमं मा धुण सेहालियं हलियसुण्हे ।
एस अवमाणविरसो ससुरेण सुओ वलयसद्दो ॥ २० ॥

[ सप्तशतक ९.५९ ]

अत्र पतितं कुसुममुच्चिनु मा धुनीहि शेफालिकामति विधिनिषेधयोरभिधाने सखि चौर्यरते प्रसक्ते वलयशब्दो न कर्तव्य इति निषेधान्तरं प्रतीयते ।

क्वचिद्विधावनुभयं यथा--

सणियं वच्च किसोयरि पए पयत्तेण ठवसु महिवट्ठे ।
भज्जिहिसि वित्थयत्थणि विहिणा दुक्खेण निम्मविया ॥ २१ ॥

[ ]

अत्र शनैर्व्रजेति विध्यभिधाने न विधिर्नापि निषेधोऽपि तु वर्णनामात्रं प्रतीयते ।

कचिन्निषेधेऽनुभयं यथा--

दे आ पसिअ निअत्तसु मुहससिजुंण्हाविलुत्ततमनिवहे ।
अहिसारिआण विग्घं करेसि अण्णाण वि हयासे ॥ २२ ॥

[ सप्तशतक ९.६२ ]

**दे आ** इति। काचिदभिसर्तुं प्रस्तुता गृहागतं प्रियतममवलोक्य स्वयं निवृत्ताप्यनिवृत्तेव तेनैवमुच्यते। दे इति निपातः प्रार्थनायाम्, आ इति तावच्छब्दार्थे।

1. I, L भूया. 2. P जोण्हा.

अत्र निवर्त्तस्वेति निषेधाभिधाने न निषेधो नापि विधिरपि तु मुखेन्दुकान्तिवर्णनामात्रं प्रतीयते ।

क्वचिद्विधिनिषेधयोरनुभयं यथा—

वच्च महं चिअ एक्काए होंतु नीसासरोइअव्वाइं ।
मा तुज्झ वि तीए विणा दक्खिण्णहयस्स जायंतु ॥ २३ ॥

[ सप्तशतक ९४४ ]

अत्र ममैव निःश्वासरोदितव्यानि भवन्तु मा तवापि तां विना तानि जायन्तामिति विधिनिषेधयोरभिधाने न विधिर्नापि निषेधोऽपि तु कृतव्यलीकप्रियतमोपालम्भमात्रं प्रतीयते ।

क्वचिदविधिनिषेधेऽनुभयं यथा

णहमुहपसाहिअंगो निद्दाघुम्मंतलोअणो न तहा ।
जह निव्वणाहरो सामलंग दूमेसि मह हिअयं ॥ २४ ॥

[ सप्तशतक ९३७ ]

प्रार्थये प्रसीद तावन्निवर्तस्व किमेतत् कदाचिद् भवति यदहं नागच्छामि तस्माद् व्यायमुद्यमः । एतच्च जानासि यत् कृष्णपक्षे तदुचितवेषाप्यहं निजवक्त्रचन्द्रमसा शुक्लपक्षं करोमीति न केवलमात्मनो विघ्नं करोषि यावदन्यासामप्यास्थां हंसीति सकलदिक्प्रकाशस्त्वया क्रियत इति परमोभिलाषस्तद्गतो व्यज्यत इति ।

वच्चेति । कश्चिदनङ्गीकृतप्रार्थनो निःश्वसन् रुदन्निव कयाचिदेवमुच्यते । व्रज इह हि त्वं कण्टकानामुपरि स्थितोऽसि । ममैव न तु तव तस्या वा एकस्याः, नान्या हि मत्समा भवति । भवन्तु दुःसहान्यपि सन्तु निःश्वासरोदितव्यानि न तु सुखानि । मा तवापि दाक्षिण्यमात्रेणेह स्थितोऽसि ततस्त्वयि स्थितेऽपि मम न निवर्तन्ते निःश्वासादीनि तद् द्वयोर्माभूत् क्लेशः । तया विना न तु मत्कोपात् । दाक्षिण्येन हृदयशून्यरञ्जनामात्रकरणेन हतस्य निर्जीवीकृतस्य [मा] जनिष्यतेति ।

1 L होंति. I हुन्तु 2 I निस्सासरोईयव्वाइं. 3. I दक्खिन्न. This manuscript generally gives न्न for ण्ण in Prākṛta.
4 D °त्मना 5 A. B E परमभि .

विगतमत्सराया मम न तथा नखपदादिचिह्नं भवदङ्गसङ्गि खेदावहं यथार्थनिष्पन्नसंभोगतयाधरदशनासंपत्तिरितीर्ष्याकोपगोपनमुपभोगोद्भेदेन कृतं [इति] वाच्योऽर्थः । तद्बलसमुत्थस्तु सहृदयोत्प्रेक्षितोऽत्यन्तवाल्लभ्यान्मुख-चुम्बनपर एव तस्यास्त्वं यत्त्वदधरखण्डनावसरोऽस्या वराक्या न संपन्न इति न केवलं तस्या भवानतिवल्लभो यावद्भवतोऽपि सा सुतरां रोचत इति वयमिदानीं त्वत्प्रेमनिराशाः संजाता इति नायिकाभिप्रायो व्यङ्ग्यः ।

क्वचिद् वाच्याद् विभिन्नविषयत्वेन व्यवस्थापितो यथा -

> कस्स व न होइ रोसो दट्ठूण पिआइ सव्वणं अहरं
> सभमरपउमग्घाइरि वारिअवामे सहसु इण्हिं ॥ २५ ॥

[सप्तशतक ८८६]

अत्र वाच्यं सखीविषयं व्यङ्ग्यं तु तत्कान्तोपपत्यादिविषयम् ।

एवं अलङ्कारभेदा रसादिभेदाश्च व्यङ्ग्या मुख्यादिभ्यो व्यतिरिक्ता ज्ञेयाः । तद्विषयो व्यञ्जकः शब्दः ।

**कस्स वेति**। कस्य वानीर्ष्यालोरपि न भवति रोषो दृष्ट्वैवाकृत्वापि कुतश्चिदेवापूर्वतया प्रियायाः सव्रणमधरं विलोक्य । सभ्रमरपद्माघ्राणशीले शीलं हि कथञ्चिदपि वारयितुं न शक्यम् । वारिते वारणायां हे[3] वामे तदनङ्गीकारिणि सहस्वेदानीमुपालम्भपरम्परामित्यर्थः । एतत् काश्चिदविनयरमणेन खण्डिताधरा विदितमपि[4] तत्रस्थं तत्पतिमविदितमिव प्रकाशयन्ती तत्प्रत्यायनाय सखी वक्ति । सहस्वेदानीमिति वाच्यमविनयवतीविषयं, व्यङ्ग्यं भर्तृविषयं तु तस्य मुग्धत्वेऽपराधो नास्तीति । वैदग्ध्ये तु मयेत्थं संवृतमतः प्रियेयमिति कृत्वा सहस्वेति व्यङ्ग्यम् । तस्यां प्रियेण गाढमुपालभ्यमानायां तद्रूपलीकशङ्कितप्रातिवेश्मिकलोकविषय

1. I न जात. 2. D, E पद्मघ्राण°. 3. E drops हे. 4. D drops from मपि to मिव. 5. A, B सहस्ते°. 6. A, B omit व्यङ्ग्यं.

**मुख्याद्यास्तच्छक्तयः ॥ २० ॥**

मुख्यागौणीलक्षणाव्यञ्जकत्वरूपाः शक्तयो व्यापारा मुख्यादीनां शब्दानाम् । तत्र समयापेक्षा वाच्यावगमनशक्तिर्मुख्याऽभिधा चोच्यते । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्गौणी लक्षणा च । तच्छक्त्युपजनितार्थावगमपवित्रितप्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिर्व्यञ्जकत्वम् ।

अभिधानन्तरं च यद्यप्यन्वयप्रतिपत्तिनिमित्तं तात्पर्यशक्तिरप्यस्ति तद्विषयस्तात्पर्यलक्षणोऽर्थोऽपि, तथापि तौ वाक्यविषयावेवेति नात्रोक्तौ।

**वक्त्रादिवैशिष्ट्यादर्थस्यापि व्यञ्जकत्वम् ॥ २१ ॥**

वक्तृप्रतिपाद्यकाकुवाक्यवाच्यान्यासत्तिप्रस्तावदेशकालचेष्टादिविशेषवशादर्थस्यापि मुख्यामुख्यव्यङ्ग्यात्मनो व्यञ्जकत्वम् ।

वक्तृविशेषाद्यथा—

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायो नास्य शिशोः पिताद्य विरसाः कौपीरपः पास्यति ।

चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम् । तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम् । सपत्नीमध्ये इयती खलीकृतास्मीति लाघवमात्मनि ग्रहीतुं न युक्तं, प्रत्युताय बहुमानो यतो रोषे कुपिता पादपतनादि लभस इति सहस्व, शोभस्वेदानीमिति सखीविषयं सौभाग्यख्यापनं व्यङ्ग्यम् । अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभा दृष्ट्य रक्षिता पुनः प्रकटदर्शनच्छददंशनविधिरत्र न युक्त इति तच्चौर्यकामुकविषयं संबोधनं व्यङ्ग्यम् । इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यमिति ।

**ताविति** । सा च स च तौ । **अत्रेति** । शक्तिमध्येऽर्थमध्ये च ।

**दृष्टिं हे प्रतिवेशिनीति** । काचिद् युवतिः परपुरुषसंभोगानुभवेच्छया संकेतस्थानं व्रजन्ती स्वप्रवृत्तिप्रयोजनं विशिष्टसंकेतस्थानाधारं परपुरुषसंभोगात्मकं तथा संभोगचिह्नानि नखरदनक्षतानि गात्रसंलग्नतया शङ्कयमानाविर्भावानि

1. I समयापेक्षवाच्या. 2. A, B, C 'दशनरदन'. 3. E drops ताविति.

एकाकिन्यपि यामि तद्धरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्तु जरठच्छेदा नलग्रन्थयः ॥ २६ ॥

[ कवीन्द्रवचनसमुच्चय० ५०० विद्यायाः ]

अत्र चौर्यरतगोपनं गम्यते ।

प्रतिपाद्यविशेषाद्यथा —

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमा
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ २७ ॥

[ अमरुशतक १०५ ]

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।

काकुध्वनेर्विकारः, तद्विशेषाद्यथा —

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ २८ ॥

[ वेणी० १.११ ]

यथाक्रमं भनृपिपासाक्षमनाङ्ग्यसरसपानीयानयनेन चिरच्छिन्ननलग्रन्थिपरुषजर्जरप्रान्तजनिष्यमाणेन च गात्रगतविकारविशेषोद्गमेनापह्नुत्याभिधत्ते । तस्याश्चागाध्वीत्वेऽवगते व्यङ्ग्यप्रतीतिरिति ।

**निःशेषेति** । च्युतं चन्दनं न तु क्षालितम् । नितरां मृष्टो न तु किञ्चिन्मृष्टः । दूरमनञ्जने निकटे तु साञ्जने । पुलकिता तन्वीति चोभयं विधेयमिति ।

1. I, P तथेयं. 2. I has पुनः after तनुः. It is due to the scribe's mistake in copying It occurs in the fourth line. 3. I ध्वनिविकार०. L दने विकार०. P ध्वने विकार०. 4. E drops नितरां. 5 E समृष्टो.

अत्र मयि न योग्यो खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते ।

वाक्यविशेषाद् यथा—

प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्याद्
निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयातः
त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥ २९ ॥

[　　　　]

अत्र नारायणरूपता गम्यते ।

वाच्यविशेषाद् यथा—

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाताः
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥ ३० ॥

[　　　　]

अत्र रतार्थं प्रविशेति व्यज्यते ।

अन्यासत्तेर्यथा—

णोल्लेइ अणोल्लमणा अत्ता मं घरभरंमि सयलंमि ।
खणमेत्तं जइ संझाए होइ न व होइ वीसामो ॥ ३१ ॥

[ सप्तशतक ८७५ ]

**नारायणरूपतेति** । ससंदेहोत्प्रेक्षयोः संकरेणेत्यर्थः । न च संदेहोत्प्रेक्षानुपपत्तिबलाद्रूपकस्याक्षेपो येन वाच्यालङ्कारोपस्कारकत्वं व्यङ्ग्यस्य भवेत् ।

1. I संझाइ　2. From this place up to वस्त्वलंकार (P. 63.13) that is for two sides 134b and 135a, P is illegible. It looks like a big blot. It may have been soiled by water.

अत्र सन्ध्या संकेतकाल इति तटस्थं प्रति कयापि द्योत्यते।

प्रस्तावाद् यथा—

सुव्वइ समागमिस्सइ तुज्झ पिओ अज्ज पहरमित्तेण।
एमेय किं ति चिट्ठसि ता सहि सज्जेसु करणिज्जं॥ ३२॥

[सप्तशतक ९३२]

अत्रोपपतिं प्रत्यभिसर्तुं न युक्तमिति ध्वन्यते।

देशविशेषाद् यथा—

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः[1]॥ ३३॥

[ ]

अत्र विविक्तोऽयं देशः। प्रच्छन्नकामुकस्त्वया विसर्ज्य इति विश्वस्तां[2] प्रति कयाचिन्निवेद्यते।

कालविशेषाद्[3] यथा—

गुरुयणपरवस[4] प्पिय[5] किं भणामि तुह मंदभाइणी अहयं।
अज्ज पवासं वच्चसि वच्च सयं च्चेव[6] मुणसि करणिज्जं॥ ३४॥

[सप्तशतक ८५१]

यो योऽसंप्राप्तलक्ष्मीको निर्व्याजजिगीषाक्रान्तः स स मां मन्थीयादित्याद्यर्थ-संभावनात्। न च पुनरपीति पूर्वामिति[7] भूय इति च शब्दैरयमाकृष्टोऽर्थः। पुनरर्थस्य भूयोऽर्थस्य च कर्तृभेदेऽपि समुद्रैक्यमात्रेणाप्युपपत्तेः। यथा पृथ्वी पूर्वं कार्तवीर्येण जिता पुनर्जामदग्न्येनेति। पूर्वा च निद्रा राजपुत्राद्यवस्थायामपीति सिद्धं रूपकध्वनिरेवायम्। स च वाक्यपर्यालोचनयावसीयत इति।

1. L रचिताञ्जलि. 2. L विश्वस्ता. 3. L कालविशेषाश्रया.
4. L गुरुवयणपरवसुप्पि. 5 S पिअ. 6 S चेव. I, L drop च्चेव.
7 A omits पूर्वामिति.

अद्य मधुसमये यदि व्रजसि तदहं तावन्न भवामि। तव तु न जानामि गतिमिति व्यज्यते।

चेष्टाया यथा- –

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
  प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्।
आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने
  वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥ ३५ ॥

[ ]

अत्र चेष्टायाः प्रच्छन्नकान्ताविषय आकूतविशेषो ध्वन्यते।

एवं वक्त्रादीनां द्विकादियोगेऽपि व्यञ्जकत्वमवसेयम्।

तत्र वक्तृबोध्ययोगे यथा

'अत्ता एत्थ' (पृ. ५३) इत्यादि।

अत्र वक्तृबोध्यपर्यालोचनया शेष्वेति विधिरूपव्यङ्ग्यार्थप्रतीतिः। एवं द्विकयोगान्तरे त्रिकादियोगे च स्वयमप्यूह्यम्। एषु मुख्यार्थस्य व्यञ्जकत्वमुदाहृतम्।

अमुख्यस्य यथा -

मॆहं[हिं]ती सहि सुहयं खणे खणे दूमिया सि मज्झ कए।
सब्भावनेहकरणिज्जसरिसयं दाव विरइयं तुमए ॥ ३६ ॥

[ सप्तशतक ८६० ]

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम्। तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्।

1 S, I समापादितं. 2 L साहिनी. S साहिती 3. S, L सब्भावणेह. 4 I शत्रुत्वमाचरन्तमिति. 5 L प्रकाशितव्यंग

व्यङ्ग्यस्य यथा—

> वाणियय[1] हत्थिदंता कत्तो अम्हाण वग्घकित्तीओ ।
> जा विलुलियालयमुही घरम्मि परिसक्कए सुण्हा ॥ ३७ ॥
>
> [सप्तशतक ९५१]

अत्र विलुलितालकमुखी तेनानवरतक्रीडासक्तिस्तथा च सततसंभोगक्षामता ध्वन्यते ।

व्यङ्ग्यस्य भेदानाह—

**व्यङ्ग्यः शब्दार्थशक्तिमूलः ॥ २२ ॥**

शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति व्यङ्ग्यो द्विधा । उभयशक्तिमूलस्तु शब्दशक्तिमूलान्नातिरिच्यते शब्दस्यैव प्राधान्येन व्यञ्जकत्वात् । तत्र शब्दशक्तिमूलमाह—

**नानार्थस्य मुख्यस्य शब्दस्य संसर्गादिभिरमुख्यस्य च मुख्यार्थबाधादिभिर्नियमिते व्यापारे वस्त्वलङ्कारयोर्वस्तुनश्च व्यञ्जकत्वे शब्दशक्तिमूलः पदवाक्ययोः ॥ २३ ॥**

अनेकार्थस्य मुख्यस्य शब्दस्याभिधालक्षणे व्यापारे संसर्गादिभिर्नियन्त्रितेऽमुख्यस्य च गौणलाक्षणिकरूपस्य शब्दस्य मुख्यार्थबाधनिमित्तप्रयोजनैर्गौणीलक्षणारूपे व्यापारे नियन्त्रिते मुख्यस्य शब्दस्य वस्त्वलङ्कारव्यञ्जकत्वेऽमुख्यस्य च वस्तुव्यञ्जकत्वे सति शब्दशक्तिमूलो व्यङ्ग्यः । स च प्रत्येकं द्विधा । पदे वाक्ये च ।

संसर्गादयश्चेमे भर्तृहरिणा प्रोक्ताः—

> (8) संसर्गो विप्रयोगश्च साहचर्यं विरोधिता ।
> अर्थः प्रकरणं लिङ्गं शब्दस्या[2]न्यस्य सन्निधिः ॥
>
> [वाक्यपदीय का. २, श्लो. ३१७]

1. P वाणिययं. 2. S °न्यसन्निधिः.

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

[ * ]

यथा—

'वनमिदमभयमिदानीं यत्रास्ते लक्ष्मणान्वितो रामः' । ३८ । इति,

'विना सीतां रामः प्रविशति महामोहसरणिम्' । ३९ । इति च[1] संसर्गाद्विप्रयोगाच्च दाशरथौ ।

'बुधो भौमश्च तस्योच्चैरनुकूलत्वमागतौ[2]' । ४० । इति साहचर्याद् ग्रहविशेषे ।

'रामार्जुनव्यतिकरः सांप्रतं वर्तते तयोः' । ४१ । इति विरोधाद् भार्गवकार्तवीर्ययोः ।

'सैन्धवमानय, मृगया चरिष्यामि' । ४२ । इत्यर्थात्प्रयोजनादश्वे ।

'अस्मद्भाग्यविपर्ययाद् यदि पुनर्देवो[3] न जानाति तम्' । ४३ । इति प्रकरणाद् युष्मदर्थे । प्रकरणमशब्दं अर्थस्तु शब्दवानित्यनयोर्भेदः ।

'कोदण्डं यस्य गाण्डीवं स्पर्धते कस्तमर्जुनम्' । ४४ । इति लिङ्गाच्चिह्नात् पार्थे ।

'किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः' । ४५ । इति शब्दान्तरसंनिधानात् कामे ।

'क्वणति मधुना मत्तश्चेतोहरः[4] प्रियकोकिलः' । ४६ । इति सामर्थ्याद् वसन्ते ।

* This second verse is not found in Benares S. S. edition of V. P Compare, however, the latter part of the commentary of Puṇyarāja on this verse and also compare the verse No. 316 which contains the words औचित्य, देश and काल 1 I drops च 2 P, L, I °कूलमागतौ. 3 परं देवो. 4. I चेतोहर.

'तन्व्या यत्सुरतान्तकान्तनयनं वक्त्रं रतिव्यत्यये[1] । तत्त्वां पातु चिराय' । ४७ । [ अमरुशतक ३ ] इत्यौचित्यात् प्रसादसाम्मुख्ये पार्वत्यां ।

'अहो महेश्वरस्यास्य[2] कापि कान्तिः' । ४८ । इति राजधानीरूपादेशाद् राजनि ।

'चित्रभानुर्विभात्यह्नि' । ४९ । इति कालविशेषाद् रवौ ।

'मित्रं हन्तितरां तमःपरिकरं धन्ये दृशौ मादृशाम्' । ५० । इति व्यक्तिविशेषात् सुहृदि[3] प्रतीतिः ।

स्वरात्त्वर्थविशेषे[4] प्रतीतिः काव्यमार्गेऽनुपयोगिनीति नोदाहियते ।

'मथ्नामि कौरवशतं समरे न कोपात्' । ५१ । [ वेणी० १.१.५ अ ] इति काकुरूपात्तु स्वराद्धवत्यर्थविशेषे प्रतीतिः । आदिग्रहणादभिनयापदेशनिर्देशसंज्ञेङ्गिताकारा गृह्यन्ते ।

अभिनयो यथा -

एद्दहमित्तत्थणिया एद्दहमित्तेहिं अच्छिवत्तेहिं ।
एयावत्थं पत्ता एत्तियमित्तेहिं दियहेहिं ॥ ५२ ॥

[ ]

अपदेशो यथा ---

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तुमसांप्रतम् ॥ ५३ ॥

[ कुमार० २.५५ ]

निर्देशो यथा---

"भर्तृदारिके दिष्ट्या वर्धामहे यदत्रैव कोऽपि कस्यापि तिष्ठतीति मामङ्गुलीविलासेनाख्यातवत्यः" ॥ ५४ ॥

[ मालतीमाधव अङ्क १ ]

1. I रतव्यतये. 2. P °स्यात्र. 3 P, L, I °दि च प्र°. 4. I, L विशेषप्रतीतिः. N विशेषप्रतिपत्तिः.

संज्ञा यथा --

अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिगृह्य पार्वती मूर्धकम्पमयमुत्तरं ददौ ॥ ५५ ॥

[ कुमार० ८.५ ]

इङ्गितं यथा- -

कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम् ।
अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥ ५६ ॥

[ काव्यादर्श २.२६१ ]

आकारो यथा --

निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न विद्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥५७॥

[ कुमार० ५.४६ ]

तदेवं संसर्गादिभिर्नियमितायामभिधायां योऽर्थान्तरे प्रतीतिः सा व्यञ्जनव्यापारादेव ।

अमुख्येऽपि शब्दे मुख्यार्थबाधादिनियमिते प्रयोजनप्रतिपत्तिर्व्यञ्जनव्यापारादेव । तथा हि तत्र संकेताभावान्नाभिधा, नापि गौणी, लक्षणा वा मुख्यार्थबाधादिलक्षणाभावात् । न हि लक्ष्यं मुख्यं, नापि तस्य बाधा, न च किञ्चिन्निमित्तमस्ति, नापि तत्र शब्दः स्खलद्गतिः, न च किञ्चित् प्रयोजनमस्ति । अथ प्रयोजनेऽपि लक्ष्ये प्रयोजनान्तरमाकाङ्क्ष्यते, तर्हि तत्रापि प्रयोजनान्तराकाङ्क्षायामनवस्था स्यात् । तथा च लाभमिच्छतो मूलक्षतिः । न च प्रयोजनसहितमेव लक्ष्यं लक्षणाया विषय इति वक्तुं शक्यम् । विषयप्रयोजनयोरत्यन्तभेदात् । प्रत्यक्षादेरपि प्रमाणस्य विषयो घटादिः । प्रयोजनं त्वर्थाधिगतिः प्राकट्यं संवित्तिर्वा । तदेवं प्रयोजनविशिष्टस्य लक्ष्यस्य गौणीलक्षणयोरविषयत्वात् प्रयोजने व्यञ्जनमेव व्यापारः ।

**अर्थाधिगतिरिति नैयायिकादीनां,** प्राकट्यं **भाट्टमते,** संवित्तिः **प्राभाकरे** ।

तत्र मुख्यशब्दशक्तिव्यङ्ग्यं वस्तु पदे यथा—

मुक्तिभुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥ ५८ ॥
[            ]

काचित् संकेतदायिनमेवं मुख्यया वृत्त्या शंसतीति सदागमपदेन प्रकाश्यते । अत्रार्थयोर्वैसादृश्यान्नोपमा ।

वाक्ये यथा—

पंथिअ न एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उन्नयपओहरं पेक्खिऊण जइ वससि ता वसमु ॥ ५९ ॥
[ सप्तशतक ८७९. ]

अत्र प्रहरचतुष्टयमप्युपभोगेन नेह निद्रां कर्तुं लभ्यते, सर्वे ह्यत्राविदग्धाः, तदुन्नतपयोधरा मामुपभोक्तुं यदि वससि तदास्स्वेति व्यज्यते । वाच्यबाधेन च व्यङ्ग्यस्य स्थितत्वात् तयोर्नोपमानोपमेयभाव इति नालङ्कारो व्यङ्ग्यः । यथा च—

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ६० ॥
[            ]

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेककार्यं कुरुत इति व्यत्ययेन ध्वन्यते । मुख्यशब्दशक्तिव्यङ्ग्योऽलङ्कारः पदे यथा—

**मुक्तीति** । मुक्तिरुद्वेगव्यापारादपि । भुक्तिः कान्तोपभोगोऽपि । एकान्तः संकेतस्थानमपि । सतः सुन्दरस्यागमनं, शोभन आगमश्च ।

**उन्नयपओहरमिति** । उन्नतं मेघं प्रेक्ष्येत्यर्थः ।

**अशनिर्वज्रमपि** । अनुदारोऽनुगतदारोऽपि ।

1. P निष्पन्दं. 2. P, L, I °थ न. 3. A, B omit मुक्तीति. 4. E. °मपीति.

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप भीमः ॥ ६१ ॥

[ ]

अत्र भीषणीयस्य भीमसेन उपमानम् ।

वाक्ये यथा—

उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तस्याः कं न चक्रेऽभिलाषिणम् ॥ ६२ ॥

अत्र वाक्यस्यासंबद्धार्थत्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालङ्कारो व्यङ्ग्यः ।

यथा वा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥ ६३ ॥

[ ]

अत्र शब्दशक्त्या रात्रियोषितोरुपमा व्यङ्ग्या । यद्यपि समुद्दीपितेति सानन्दमिति चार्थोऽपि[1] व्यञ्जकस्तथापि न शब्दशक्तिं विनार्थशक्तिरुन्मीलतीति शब्दशक्तिरेव व्यञ्जिका । यथा वा -

"मातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च[2] धवलद्विजशुचिवदना मदिरामोदश्वसनाश्च प्रमदाः" ॥ ६४ ॥

[हर्षचरित ३. पृ. ९८]

**प्रोल्लसन्** हारो यस्य, प्रोल्लसन्त्यश्च धारा यस्य । तस्याः कामिन्याः, प्रावृषश्च ।

**अतन्द्रेति** । चन्द्रं कर्पूरमपि । समुत् सहर्षा । तारकाख्या कनीनिकास्यामपि । श्यामा रात्रिः कान्ता च ।

**मातङ्गो** हस्ती चण्डालश्च । गौर्यो गौराङ्गयोऽपि । विभवे रताः, विगतं भवे रतं यासां ताश्च । पद्मरागा मणिविशेषाः पद्मवच्च रागो विद्यते यासाम् । द्विजा दन्ता विप्राश्च ।

1. I drops ऽपि 2. P drops च 3. L धवलशुचिद्विज

अत्र विरोधालङ्कारो व्यङ्ग्यः । यथा वा—

खं येऽभ्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनः
ये पुष्णन्ति सरोरुहश्रियमधिक्षिप्ताब्जभासश्च ये ।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥ ६५ ॥

[ध्वन्यालोकवृत्तिकारस्य आनन्दवर्धनस्य ?]

अत्र व्यतिरेकः । एवमलङ्कारान्तरेऽप्युदाहार्यम् ।

गौणशब्दशक्तिव्यङ्ग्यं वस्तु पदे यथा—

रविसंक्रान्तसौभाग्यस्तुषाराविलमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ ६६ ॥

[रामायण २.१६.१३]

अत्रोपसंहृतदृष्टिवृत्तिरन्धशब्दो बाधितमुख्यार्थः पदार्थप्रकाशनाशक्तत्वं नष्टदृष्टिगतं निमित्तीकृत्यादर्शे वर्तमानोऽसाधारणविच्छायित्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्ति ।

वाक्ये यथा—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा[1] पश्यतो मुनेः ॥ ६७ ॥

[महाभारत. भीष्मपर्व, गीता २.६९]

**नखः** करजः, न गगने च । क्षितिभृतो राजानोऽपि उभये रश्मिचरणरूपाः ।

**एवमिति** । यथा—

सरसं मउअसहावं विमलगुणं[2] मित्तसंगमोल्लसिअं ।
कमलं णट्ठच्छायं कुणन्त दोसायर नमो दे ॥ १३९ ॥

[ ]

एतत्केनचिच्चन्द्रमेवोद्दिश्योच्यते । कमलप्रख्यस्य महापुरुषस्य श्रियं नाशितवन्तं कञ्चन श्रीजुषं प्रति चाप्रस्तुतप्रशंसा व्यङ्ग्येति ।

**निःश्वासान्ध** इति । हेमन्तवर्णने पञ्चवट्यां रामस्योक्तिरियम् ।

**या निशेति** । सर्वेषां ब्रह्मादिस्थावरान्तानां चतुर्दशानामपि भूतानां

1. P, S, L रात्रिः 2. D गुणाणं

अत्र निशायां जागरितव्यमन्यत्र रात्रिवदासितव्यमिति न कश्चिदुपदेश्यं प्रत्युपदेशः सिद्ध्यतीति बाधितस्वार्थमेतद्वाक्यं संयमिनो लोकोत्तरतालक्षणेन निमित्तेन तत्त्वदृष्टाववधानं मिथ्यादृष्टौ तु पराङ्मुखत्वं ध्वनतीति।

लक्षकशब्दशक्तिव्यङ्ग्यं वस्तु पदे यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।

या निशा व्यामोहजननी, तत्त्वदृष्टिः तस्यां संयमी जागर्ति कथं प्राप्येतेति। न तु विषयवर्जनमात्रादेव संयमीति यावत्। यदि वा सर्वभूतनिशायां मोहिन्यां मिथ्यादृष्टौ जागर्ति कथमिव हेयेति। यस्यां तु मिथ्यादृष्टौ सर्वभूतानि जाग्रति, अतिशयेन सुप्रबुद्धरूपाणि सा तस्य रागद्वेषनिद्रोभावविषय। तस्यां हि चेष्टायां नासौ प्रबुद्धः। एवमेव च लोकोत्तराचारव्यवस्थितः पश्यति च मन्यते च तस्यैवान्तर्बहिष्करणवृत्तिर्यथार्था। अन्यस्तु न पश्यति न मन्यत इति तत्त्वदृष्टिपरेण भाव्यमिति तात्पर्यम्।

**स्निग्धेति।** स्निग्धया जलसम्बन्धसरसया श्यामलया द्राविडवनितोचितासितवर्णया कान्त्या चाकचिक्येन लिप्तमाच्छुरितं वियदभ्रं यैः। वेल्लन्त्यो जृम्भमाणास्तथा चलन्त्यः परभागवशात् प्रहर्षवशाच्च बलाकाः सितपक्षिविशेषा येषु सत्सु त एवंविधा मेघाः। एवं नभस्तावद्दुरालोकं वर्तते। दिशोऽपि दुःसहाः। यतः सूक्ष्मजलोद्गारिणो वाता इति मन्दमन्दत्वमेषामनियतदिगागमनं च बहुवचनेन सूचितम्। तर्हि गुहासु क्वचित् प्रविश्यास्यतामत आह—पयोदानां ये सुहृदस्तेषु च सत्सु शोभनहृदया मयूरास्तेषामानन्देन हर्षेण कलाः षड्जसंवादिन्यो मधुराः केकाः शब्दविशेषाः, ताश्च सर्वे पयोदवृत्तान्तं स्मारयन्ति स्वयं च दुःसहा इति भावः। एवमुद्दीपनविभावोद्बोधितविप्रलम्भः परस्पराधिष्ठानत्वाद् रतेः विभावानां च साधारण्यमभिमन्यमान इत एव प्रभृति प्रियतमां

1. E प्रार्थ्येति. 2. A, B, C, D मासस्य. 3. E °प्रसिद्ध. 4. E °पक्ष. 5. A, B, C, E °तागाद्. 6. D, E drop स्वयं.

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥ ६८ ॥

अत्र प्रकरणात्तृतीयत्रिकनिर्देशाच्च रामे प्रतिपन्ने रामपदमनुपयुज्यमानं कठोरहृदय इत्यनेन दर्शितावकाशं पितृमरणसीतावियोगाद्यनेकदुःखभाजनत्वं लक्षयदसाधारणानि निर्वेदग्लानिमोहादीनि व्यनक्ति ।

वाक्ये यथा——

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुं ॥ ६९ ॥

हृदयं निधायैव व्याख्यातमिति तावदाह——**कामं सन्त्विति**। दृढमिति सातिशयम्। कठोरहृदय इति। रामशब्दार्थव्यङ्ग्यविशेषावकाशदानाय कठोरहृदयपदम्। यथा— स्नेहमितरेऽपि नर्माभिनीति (पृ ८६, १८)। अन्यथा रामपदं दशरथकुलोद्भव[त्व]कौशल्यागर्भोत्पादस्वभावान्यचरितज्ञानकौशलाभादिधर्मान्तरपरिणतमर्थं कथं नाम ध्वनेत्। अस्मीति। स एवाहं भवामीत्यर्थः। भविष्यतीति क्रियासामान्यम्। तेन किं करिष्यतीत्यर्थः। अथ च भवनमेवास्या असम्भाव्यमिति उक्तप्रकारेण हृदयनिहिता प्रिया सजलजलधरादीनामुद्दीपनविभावानां साधारणत्वावधारणादिना स्मरणेन वैदेहीति शब्देन कथं भविष्यतीति विकल्पपरम्परया च प्रत्यक्षीभाविना हृदयस्फुटनोन्मुखा सम्भ्रममाह—— ह हा हेति। देवीति युक्तं तव धैर्यमित्यर्थः।

**सुवर्णपुष्पामिति**। सुवर्णं न तु ताम्रादि। पुष्पाणि प्रतिदिनं ग्राह्याणि न तु दीनारादिवत् सकृद् ग्राह्याणि। पृथिवीं न तु नगरादिमात्रं, चिन्वन्ति उच्चिन्वन्ति, प्रत्यहं गृहीतभागं कुर्वते। पुरुषा इति। अन्ये स्वकार्यकराः। त्रय इति न तु चत्वारः। एवं शूरः पराक्रमेण दुर्घटकार्यकारी। कृता परधारागिरेह नीता विद्या तत्त्वावबोधहेतुर्येन। सेवक इति सेवाज्ञ इति वा वक्तव्ये ज्ञानस्यालौकिकत्वमनौचित्यागणनादि च ध्वनितुं यश्चेत्यादि कृतम्। शूरकृतविद्यवत्सेवाज्ञस्य निर्गुणस्यापि लाभप्राप्तिरिति त्रयश्चकाराः स्वतः सम्भवन्तीति।

1. A, B न ध्वनेत्. 2. A drops प्रियां सजलजलधरादीनां. 3 A, B संभवतीति. C. संभवति.

इदं हि वाक्यमसंभवत्स्वार्थं सत् सादृश्यात् सुलभसमृद्धिसंभारभाजनतां लक्षयच्छूरकृतविद्यसेवकानां प्राशस्त्यं ध्वनति ।

अर्थशक्तिमूलं व्यङ्ग्यमाह—

**वस्त्वलङ्कारयोस्तद्व्यञ्जकत्वेऽर्थशक्तिमूलः प्रबन्धेऽपि ॥२४॥**

वस्तुनोऽलङ्कारस्य च प्रत्येकं वस्त्वलङ्कारव्यञ्जकत्वेऽर्थशक्तिमूलः । स च पदवाक्ययोः प्रबन्धे च । इह चार्थः स्वतः संभवी, कविप्रौढोक्ति-

न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरो, यावद्बहिरप्यौचित्येन संभाव्यमानशरीर इत्यर्थः । यथा—

सिहिपिंछकण्णऊरा जाया वाहस्स गव्विरी भमइ ।
मुत्ताहलरइअपसाहणाण मज्झे सवत्तीण ॥ १४० ॥

[ गाथासप्तशती २-७३ ]

शिखिमात्रस्य मारणमेव तदासक्तस्य कृत्यम् । अन्यासु त्वासक्तो हस्तिनोऽप्यमारयत् इति बहुवचनेनोक्तमुत्तमं सौभाग्यम् । रचितानि विविधभङ्गीभिः प्रसाधनानि इति तासां संभोगव्यग्रताभावात् तद्विरचनानिरपेक्षकालमेव परमिति दौर्भाग्यातिशय इति दर्शितम् । गर्वश्च बाल्याविवेकादिनापि भवतीति नात्र स्वोक्तिसद्भावः शङ्क्यः । एष चार्थो यथा यथा वर्ण्यते तथा तथा सौभाग्यातिशयं व्याधवध्वा द्योतयति ।

**कविप्रौढोक्तिमात्रेति** । कवेर्या या प्रौढा उक्तिस्तन्मात्रनिष्पन्नशरीर इत्यर्थः ।

यथा—

सज्जेइ सुरहिमासो न या पणामेइ जुअइजणलक्खसहे ।
अहिणवसहयारमुहे णवपल्लवपत्तले अणंगस्स सरे ॥ १४१ ॥

[ ]

अत्र वसन्तश्चेतनोऽनङ्गस्य सखा सज्जयति केवलं न तावदर्पयति, इत्येवंविधया समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत्

1. D °पिंछ° 2. D °मात्रमा°. 3 E शस्य°.

मात्रनिष्पन्नशरीरः, कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो वेति भेदकथनं न न्याय्यम्। प्रौढोक्तिनिर्मितत्वमात्रेणैव साध्यसिद्धेः। प्रौढोक्तिमन्तरेण स्वतः संभविनोऽप्यकिञ्चित्करत्वात्। कविप्रौढोक्तिरेव च

उक्ता। अतोऽनर्पितैर्वापि शरेषु यथैव मन्मथः प्रतपति तदर्पितेषु कियद्विजृम्भिष्यत इति मन्मथोन्माथकस्यारम्भ क्रमेण गाढगाढीभविष्यन्तं व्यनक्ति। कविनिबद्धवक्तृप्रौढोक्तिमात्र[निष्पन्न]शरीरो यथा—

शिखरिणि क नु नाम कियच्चिरं
किमभिधानमसावकरोत्तपः।
तरुणि येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः ॥१४२॥
[　　　　]

न हि निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वतप्रभृतय इमां सिद्धिं विदध्युः। दिव्यकल्पसहस्रादिश्चात्र परिमितः कालः। न चैवंविधोत्तमफलत्वेन चान्द्रायणप्रभृत्यपि तपः श्रुतम्। तवेति भिन्नपदम्। समासेन विगलिततया च सा न प्रतीयते। तव दशतीत्यभिप्रायेण। तेन यदाहुः 'वृन्तानुरोधात् त्वदधरपाटलमिति न कृतम्' इति तदसदेव। दशतीत्यास्वादयति। अविच्छिन्नप्रबन्धतया न त्वौदरिकवत् परिभुङ्क्ते, अपि तु रसज्ञोऽत्रेति तत्प्राशिवदेव। रसज्ञताप्यस्य तपःप्रभावादेवेति। शुकशावक इति। तारुण्यायु(दु)चितकाललाभोऽपि तपस एवेति। अनुरागिणश्च प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्यचाटुविरचनात्मकभावोन्मीलनं व्यङ्ग्यम्।

अत्र चोदाहरणत्रयेऽपि प्रौढोक्तिरेव वस्तुव्यञ्जकत्वेन स्वदते। स्वभावोऽपि हि वर्ण्यमानः कविप्रौढ्यैव स्वदते। एतच्च जात्यलङ्कारे विवेचयिष्यते। काव्यस्य च कविरेव कर्ता वक्ता च। तत्र कविनैव निबद्ध इति कवेरेव तथाविधा अर्था उल्लिखिता इति स्वतःसंभवित्वम्, कविनिबद्धवक्तृप्रौढोक्तिमात्र[निष्पन्न]शरीरत्वं चार्थस्य न वास्तवमित्यर्थः।

1. B drops from प्रन to प्रौढोक्तिमात्र. 2. E तदा°. 3. E विगलितं तया सा न.

कविनिबद्धवक्तृप्रौढोक्तिरिति किं प्रपञ्चेन।

तत्र वस्तुनो वस्तुव्यञ्जकत्वं पदे यथा --

तं ताण सिरिसहोअररयणाहरणम्मि हिअयमिक्करसं।
बिंबाहरे पिआणं निवेसियं कुसुमबाणेण॥ ७०॥

[ विषमबाणलीला ]

अत्र कुसुमबाणेनेति पदं कामदेवस्य मृदूपायसौन्दर्यं प्रकाशयति।

वाक्ये यथा --

वापी नेयं नियतमथवा तानि नैतानि नूनं
तीराण्यस्याः सविधविचरद्वीचिवाचालितानि।
अन्या वाऽऽस्तां किमथ न हि तद् वारि वेल्लद्बलाकं
यत्तत्पल्लीपतिदुहितरि स्नातुमभ्यागतायाम्॥ ७१॥

[ ]

अत्र वाक्यार्थेन वस्तुमात्ररूपेणाभिसरणादिजनकृतमेव भावानां दृढत्वं न स्यात इत्येतद् वस्तु व्यज्यते।

किं प्रपञ्चेनेति। एवं हि संदर्भविस्तरे शिष्यव्यामोह एव संपद्यत इत्यर्थः। तं ताणेति। तेषामसुराणां पातालवासिनां ये पुनः पुनरिन्द्रविमर्दनादि किं किं न कृतम्। तद् हृदयमिति यत्तस्मात्तेभ्योऽतिदुष्करेभ्योऽप्यकम्पनीयव्यवसायम्। तच्च श्रीमहोदधिगणामृत एवानिर्वाण्योत्कर्षाणामित्यर्थः। तेषां रत्नानामाममन्ताद्धरणे एकरसं तत्पर तत्कुसुमबाणेन सुकुमारतरोपकरणसंभारेणापि प्रियाणां बिम्बाधरे निवेशितम्। तद्वदवलोकनपरिचुम्बनदर्शनमात्रकृतकृत्यताभिमानयोगि तेन कामदेवेन कृतं तेषां हृदयं यदत्यन्तविजिगीषाज्वलनजाज्वल्यमानमभूदिति यावत्।

1. B त जाणेति 2. C drops कि. 3. B. दर्शन.

वस्तुनोऽलङ्कारव्यञ्जकत्वं पदे यथा—

धीराण रमइ घुसिणारुणम्मि न तहा पिआथणुच्छंगे।
दिट्ठी रिउगयकुंभत्थलम्मि जह बहलसिंदूरे ॥ ७२ ॥
[ ]

**वस्तुनोऽलङ्कारव्यञ्जकत्वमिति** । वस्तुना उपमादिरलङ्कारो व्यज्यत इत्यर्थः । तत्रोपमाध्वनिः 'धीराण'–इत्यादिना दर्शितः । अर्थान्तरन्यासध्वनिः पदे यथा—

हिअयट्ठियमन्नु णु अ अणरुट्ठमुहं पि मं पसायन्त ।
अवरद्धस्स वि ण हु दे बहुजाणय रूसिउं सक्कं ॥ १४३ ॥
[ ]

हृदये स्थितो न तु बहिः प्रकटितो मन्युर्यया । अत एवाप्रदर्शितरोषमुखीमपि मां प्रसादयन् हे बहुज्ञ अपराद्धस्यापि तव खलु न रोषकरणं शक्यम् । अत्र बहुज्ञत्वामन्त्रणार्थो विशेषे पर्यवसितः । अनन्तरं तु तदर्थपर्यालोचनबलाद् यत्सामान्यरूपं समर्थकं प्रतीयते तदेव चमत्कारकारि । तथा हि । खण्डिता सती वैदग्ध्यानुनीता न प्रत्यसूया दर्शयन्ती इत्थमाह । यः कश्चिद् बहुज्ञो धूर्तः स एव सापराधोऽपि स्वापराधावकाशमवच्छादयतीति मा त्वमात्मनि बहुमानमध्या मर्हीरिति । उत्प्रेक्षाध्वनिर्यथा—

चन्दनासक्तभुजगनिःश्वासानिलमूर्छितः ।
मूर्छयत्येष पथिकान् मधौ मलयमारुतः ॥ १४४ ॥
[ ]

अत्र हि मधौ मलयमारुतस्य पथिकमूर्छाकारणत्वं मन्मथोन्माथदायित्वेनैव । तत्तु चन्दनासक्तभुजगनिःश्वासानिलमूर्छितत्वेनोत्प्रेक्ष्यत इत्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादवसीयते । न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणा-संबद्धतैवेति शक्यं वक्तुं, गमकत्वात् । अन्यत्रापि तदप्रयोगे तदर्थावगति-दर्शनात् । यथा—

1. P, L, I पिया. 2 S दिठीरि. 3. D पसायत. 4. A, B वक्तुं शक्यं. 5. A drops °दर्थावगति.

अत्र धीराणामिति पदार्थो वस्तुमात्ररूपः कुचयोः कुंभस्थलस्य चोपमालङ्कारं ध्वनति।

ईसाकलुसस्स वि तुह मुहस्स नणु एस पुण्णिमायंदो।
अज्ज सरिसत्तण पाविऊण अंगे व्विअ न माइ॥ १८५॥

[ ]

ईर्ष्याकलुषितस्यापि ईषदरुणच्छायाकस्य। यदि तु प्रसन्नस्य सुतनु सादृश्यमुद्वहेत् सर्वदा तत्किं कुर्यात्। त्वन्मुखं तु चन्द्रीभवतीति मनोरथानामप्यपथमिदमित्यपिशब्दस्याभिप्रायः। अद्य स्वदेहे न माति दश दिशः पूरयति यतोऽद्यैतावता कालेन एक दिवसमात्रमित्यर्थः, अत्र पूर्णचन्द्रेण दिशां पूरणं स्वरससिद्धमेवमुत्प्रेक्ष्यते। यदि च ननुशब्देन वितर्कमुत्प्रेक्षारूपमाचक्षाणेनासम्बद्धत्वात् पराकृतेति संभाव्यते तदेदमत्रोदाहरणं यथा -

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-
राकर्णपूर्णनयनेषुहतेक्षणश्रीः॥ १८६॥

[ शिशुपालवध ५.२६ ]

परितः सर्वतो निकेतान्। परिपतन्नाक्रामन् कैश्चिदपि चापपाणिभिर्नो मृगोऽनुबद्धस्तथापि न क्वचित्तस्थौ तथा त्रासचापलयोगात् स्वाभाविकादेव तत्र चोत्प्रेक्षा ध्वन्यते। अङ्गनाभिराकर्णपूर्णैर्नेत्रैर्हृता ईक्षणश्रीः सर्वस्वभूता अस्य यतः अतो न तस्थौ। नन्वेतदप्यसंबद्धमस्तु। न। शब्दार्थव्यवहारे हि प्रसिद्धिरेव प्रमाणम्। दीपकध्वनिर्यथा -

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा।
वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष॥ १८७॥ इति

1. I न चोपमा. 2. A, B ईसा. C पुण्णिमायन्दो 3. C, E अङ्गे 4 A, B add वा 5 C, E drop त्र. 6. E drops तथा. 7 A, B, C drop इति.

वाक्ये यथा—

पुत्रक्षयेन्धनघनप्रविजृम्भमाण-
स्नेहोत्थशोकविषमज्वलनाभितप्तः ।
प्रालेयशीतलममंस्त स बाष्पवह्नि-
मह्नाय देहमथ संविदधे सरित्सात् ॥ ७२ ॥

अत्र बाधिष्टेति गोप्यमानादेव दीपकादत्यन्तस्नेहास्पदत्वप्रतिपत्त्या चारुत्वनिष्पत्तिः ।

अप्रस्तुतप्रशंसाध्वनिर्यथा—

' ढुंढुल्लिंतु मरीहिसि ' इति । (पृ. ३४४)

प्रियतमेन साकमुद्याने विहरन्ती काचिन्नायिका भ्रमरमेवमाहेति । भृङ्गस्याभिधाया प्रस्तुतत्वमेव । न चामन्त्रणादप्रस्तुतत्वम्, प्रत्युतामन्त्रणं तस्या मौग्ध्यविजृम्भितमित्यभिधया तावन्नाप्रस्तुतप्रशंसा । रसाभासायां पुनरभिधायां वाच्यार्थसौन्दर्यबलादन्यापदेशता ध्वन्यते । यत् स्वसौभाग्याभिमानपूर्णा सुकुमारपरिमलमालतीकुसुमसदृशी मुग्धकुलवधूर्निर्व्याजप्रेमपरतया कृतकवैदग्ध्यलब्धप्रसिद्ध्यतिशयानि शम्भलीकण्टकव्याप्तानि दुरामोदकेतकीवनस्थानीयानि वेश्याकुलानि इतश्चामुतश्च चञ्चूर्यमाणं प्रियतममुपालभते ।

अपह्नुतिध्वनिर्यथा -

यत्कालागुरुपत्रभङ्गरचनावासैकसारायते
गौराङ्गीकुचकुम्भभूरिसुभगाभोगे सुधाधामनि ।
विच्छेदानलदीपितोत्कवनिताचेतोधिवासाद्ध्रुवं
संताप विनिनीषुरेष वितनैरङ्गैरनङ्गः स्मरः ॥ १४८ ॥

[ भट्टेन्दुराजस्य ]

अत्र चन्द्रमण्डलमध्यवर्तिनो लक्ष्मणो वियोगाग्निपरिचितवनिताहृदयोदितश्लेषमलीमसच्छविमन्मथाकारतयापह्नवो ध्वन्यते । अत्रैव ससंदेहध्वनिः । यत् चन्द्रवर्तिनस्तस्य नामापि न गृहीतम् । अपि तु गौराङ्गीस्तनाभोगस्थानीये चन्द्रमसि कालागुरुपत्रभङ्गविच्छित्त्यास्पदत्वेन यत् सारतामुत्कृष्टतामाचरतीति

1. C, D, E अत्र मा. 2. A, B मरीहसि. 3. D, E drop श्रा. 4 E सारायिते.

अत्र वसिष्ठः पुत्रक्षयोपतप्तोऽग्निं प्रविष्टोऽपि[2] न तेन दग्ध इत्ययं वाक्यार्थो वस्तुस्वभावः शोकस्य बाडवह्वेराधिक्यमिति व्यतिरेकालङ्कारं ध्वनति ।

तत्र जानीमः किमेतद्वस्त्विति ससंदेहो ध्वन्यते । पूर्वमनङ्गीकृतप्रणयामनुतप्ता प्रणयिविरहोत्कण्ठिता वल्लभागमनप्रतीक्षापरत्वेन कृतप्रसाधनादिविशेषयत्नया वासकसज्जीभूता पूर्णचन्द्रोदयावसरं दूतीमुखेनानीत प्रियतमस्त्वदीयकुचकलशन्यस्तकालागुरुपत्रभङ्गरचना मन्मथोद्दीपनकारिणीति चाटुकं कुर्वाणश्चन्द्रवर्तिनी चेयं कुवलयदलश्यामला कान्तिरेवमेव करोतीति निदर्शनाध्वनिरपि । त्वदीयकुचकलशशोभा मृगाङ्कशोभा च सह मदनमुद्दीपयत इति सहोक्तिध्वनिरपि ।

'त्वत्कुचमदःशश्चन्द्रश्चन्द्रमसमस्त्वत्कुचाभोग '

इति अर्थप्रतीतेरुपमाध्वनिरपि । एवमन्येऽप्यत्र प्रभेदाः शक्योत्प्रेक्षा । महाकविवाचोऽस्याः कामधेनुत्वात् । यत ----

(23) हेलापि कस्यचिदचिन्त्यफलप्रसूत्यै
कस्यापि नालमणवोऽपि फलाय यत्न ।
दिग्दन्तिगेमचलन्न धरणीं धुनोति
श्वान संपतन्नपि लता चलयेन्न भङ्ग ॥

[ ]

व्यतिरेकध्वनिर्यथा --

जाएज्ज वणुद्देसे खुज्जो च्चिअ पायवो सडिअपत्तो ।
मा माणुसम्मि लोए चाएक्करसो दरिद्दो अ ॥ १८९ ॥

[सप्तशतक २३०, गाथासप्तशती ३ ३० ]

जायेय वनोद्देशे एव वनस्यैकान्ते गहने यत्र स्फुटं बहुतरवृक्षसंपत्त्या

1. I निशिष्ट. L. P वशिष्ट.. From the context of the verse it would seem that the correct reading is वसिष्ठ:. 2. I drops 'पि. 3. A drops तत्र जानीमः 4 A drops नद्वस्त्विति समंदे 5. A drops कृत. 6. E चेव. 7. D, E °नध्व°.

अलङ्कारस्य वस्तुव्यञ्जकत्वं पदे यथा---

चूँअंकुरावयंसं छणपसरमहग्घमणहरसुरामोअं ।
अपणामिअं पि गहिअं कुसुमसरेण महुमासलच्छीए मुहं ॥ ७४ ॥

[हरिविजये]

प्रेक्षतेऽपि न कश्चित्। कुब्ज इति । यो रूपघटनादावेवानुपयोगी । शटितपत्र इति । छायामपि न करोति तस्य का पुष्पफलवार्तेति भावः । नादृशोऽपि कदाचिदाङ्गारिकस्योपयोगी स्यादुल्मकादेर्वा निवासायेति भावः । मानुष इति । सुलभार्थिजन इति भाव । लोक इति । यत्र लोक्यते सोऽर्थिभिः तेन चार्थिजनो न किञ्चिच्छक्यते कर्तुं तन्महद् वैशसमिति भाव । अत्र वाच्योऽलङ्कारो न कश्चित् । त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनं शटितपत्रकुब्जपादपजन्माभिनन्दनं च साक्षाच्छब्दवाच्यम् । तथाविधादपि पादपात् तादृशस्य पुंसः शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति । एवमन्येऽप्यलङ्कारा व्यञ्जकतयाभ्यूह्या इति ।

**अलङ्कारस्य वस्तुव्यञ्जकत्वमिति** । अलङ्कारेण उपमादिना वाच्येन वस्तु व्यज्यत इत्यर्थः । तत्र विरोधस्य वस्तुव्यञ्जकत्व 'चूअङ्कुरावयंसं' इत्यादिना प्रदर्शितम् । उपमाया यथा 'शिखरिणी'ति । (पृ. ७३) अत्र नवाधरपाटलमिति पदे समासोपमयाभिलाषात्मक वस्तु ध्वन्यते । रूपकस्य यथा---

चमढियमाणसकञ्चणपङ्कयनिम्महियपरिमला जस्स ।
अक्खुडियदाणपसरा बाहुफलिह च्चिय गइन्दा ॥ १५० ॥

[　　　　]

अत्र बाह्वो: परिघरूपणात्मना रूपकालङ्कारेण भुजद्वयादन्यद् गजाश्वादिसामग्रीरूपं तस्यानुपादेयमिति वस्तु व्यज्यते । एवमन्येऽप्यलङ्कारा वस्तुनो व्यञ्जकत्वेनोदाहार्या: ।

**छणेति** । महार्घेणोत्सवप्रसरेण मनोहरसुरस्य मन्मथदेवस्य आमोदश्चमत्कारो

1. I व्यङ्ग्यत्वं. 2 P, L, I चूय°. 3. I °रामोय. 4. I अपणामिय 5. A, B रूपक°. 6 A, B दावनुपयोगी. C °दाववनुपयोगी. 7. A, B, C drop वा. 8. A, B, C, D drop न. 9. C, D तादृशश्च. 10. A, B णिम्महिय°.

अत्रापर्णामिअं असमर्पितमपीति विरोधालङ्कारेण वाच्येन मधुमासप्रौढिमनि भाविनि किं भविष्यतीत्येवंभूतं वस्तु ध्वन्यते।

वाक्ये यथा---

गाढालिङ्गणरहसुज्जुअम्मि दइए लहुं समोसरइ।
माणंसिणीणं माणो पीलणभीउ व्व हिअआओ ॥ ७५ ॥

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र जृम्भत इति वस्तु व्यज्यते।

अलङ्कारेणालङ्कारः पदे यथा--

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलं।
इय नववहुआ सोऊण कुणइ वयणं महीस(सं)मुहं ॥ ७६ ॥

अत्र मिलाणकमलदलमिति रूपकेण म्लानत्वान्यथानुपपत्तेस्त्वयास्य मुहुर्मुहुः परिचुम्बनं कृतमिति अनुमानं व्यज्यते।

वाक्ये यथा --

स वक्तुमखिलान् शक्तो हयग्रीवाश्रितान् गुणान्।
योऽम्बुकुम्भैः परिच्छेदं शक्तः कर्तुं महोदधेः ॥ ७७ ॥

यत्र। महाधशब्दस्य परनिपातः। प्राकृते नियमाभावात्। असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्म्या मुखं प्रारम्भो वक्त्रं च। तच्च सुरामोदयुक्तं भवति।

1. P, L, I अपणामिय. 2 I drops इति. 3 P, L, I ज्जयम्मि 4 P, L, I हियआओ. 5 I मिणाल 6 I वहुआ

अत्र निदर्शनेन हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपोऽसाधारणतद्विशेषप्रकाशनपर आक्षेपो व्यज्यते।

प्रबन्धेऽर्थशक्तिमूलो व्यङ्ग्यो यथा गृध्रगोमायुसंवादे। तथा च—

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
न चेह जीवितः कश्चित् कालधर्ममुपागतः ॥ ७८ ॥

[ महाभारत, शा. प., अ. १५२, श्लो. ११(अ) १२(अ) ]

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम्।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥ ७९ ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात् कथं बालास्त्यक्ष्यध्वमविशङ्किता ॥ ८० ॥

[ महाभारत, शा. प., अ. १५२, श्लो. १९, ६५ ]

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं चेति प्रबन्धप्रतिपादनार्थेन गृध्रगोमाय्वोर्भक्षणाभिप्रायो व्यज्यते। एवं मधुमथनविजये पाञ्चजन्योक्तिषु विषमबाणलीलायां कामदेवस्य सहचरसमागमेऽर्थव्यञ्जकत्वमुदाहार्यम्। एवं च वस्तुनोऽलङ्कारव्यञ्जकत्वेऽलङ्कारस्य च वस्त्वलङ्कारव्यञ्जकत्वे भेदत्रयमुत्प्रेक्ष्यम्।

**पाञ्चजन्योक्तिष्विति।**

लीलादाढग्गुव्वूढसयलमहिमंडलस्स चिअ अज्ज।
कीस मुणालाहरणं पि तुज्झ गरुआइ अंगम्मि ॥ १५१ ॥

[ मधुमथनविजये ]

इत्यादयः पाञ्चजन्योक्तयो रुक्मिणीविप्रलब्धवासुदेवाशयप्रतिभेदनाभिप्रायमभिव्यञ्जन्ति।

**सहचरेति।** कामदेवस्य सहचरा मधुयौवनमलयानिलादयस्तेषां समागमे। तदुक्तिष्वित्यर्थः। यथा—

1. S समधुमथनजयं. 2. I पाञ्चयशो . 3. I, L omit from अलंकारस्य to व्यञ्जकत्वे. 4. D, E omit इत्यादयः.

**रसादिश्च ॥ २५ ॥**

रसभावतदाभासभावशान्तिभावोदयभावस्थितिभावसन्धिभावशबलत्वान्यर्थशक्तिमूलानि व्यङ्ग्यानि । चकारः पदवाक्यप्रबन्धानुकर्षणार्थः । पृथग्योगे रसादयो व्यङ्ग्या एव भवन्ति न तु कदाचिद् वाच्यतामपि सहन्त इति रसादीनां प्राधान्यख्यापनार्थः । वस्त्वलङ्कारौ हि वाच्यावपि भवत इति।

तत्रार्थशक्तिमूलो व्यङ्ग्यो रसः पदे यथा----

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।

---

हुमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि ।
सिविणे वि तुज्झ समए पत्तिअ[हि]भत्तिं न पुप्फुसिमि ॥ १५२ ॥
[ विषमबाणलीलायाम् ]

इत्यादयो यौवनोक्तयस्तं तं निजस्वभावं व्यञ्जन्ति ।

**रसभावेति** । यद्यपि रसेनैव सर्वं काव्यं जीवति, तथापि तस्य रसस्य एकघनचमत्कारात्मनोऽपि कुतश्चिदंशात् प्रयोजकीभूतादधिकोऽसौ चमत्कारो भवति । तत्र यदा कश्चिदुद्रिक्तावस्था प्रतिपन्नो व्यभिचारी वक्ष्यमाणोदयादिधर्मा चमत्कारातिशये प्रयोजको भवति तदा भावध्वनिः । यदा तु विभावाभासाद् रत्याभासोदयस्तदा विभावानुभावाभासाच्चर्वणाभास इति रसाभासः । एवं भावाभासोऽपि । एवं रसध्वनेरेवामी भावध्वनिप्रभृतयो निष्यन्दाः । आस्वादे प्रधानं प्रयोजकमंशं विभज्य पृथग् व्यवस्थाप्यते । यथा---गन्धयुक्तिज्ञैरेकसंमूर्छितामोदोपभोगेऽपि सुपरिशुद्धमांस्यादिप्रयुक्तमिदं सौरभमिति । रसध्वनिस्तु स एव, यत्र मुख्यतया विभावानुभावव्यभिचारिसंयोजनोचितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशचर्वणाप्रयुक्त एवास्वादप्रकर्ष इति । उदाहरणानि चैतल्लक्षणप्रस्तावे दर्शयिष्यन्ते ।

**उत्कम्पिनीति** । अत्र हि ते-इति पदं रसमयत्वेन स्फुटमेवावभासते सहृदयानाम् । तथा हि---वासवदत्तादाहाकर्णनप्रवृद्धशोकनिर्भरस्य वत्सराजस्येदं

1. A, B, C, D तुज्ज. 2. A, B omit तस्य. 3 E drops भवति तदा.
4. A, B, C, D मास्यादि.

तीक्ष्णेन दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि ॥ ८१ ॥
[ तापसवत्सराज २.१६ ]

अत्र ते-इति पदेन स्मारितानामनुभवैकगोचराणां सातिशयविभ्रमाणां शोकव्यञ्जकत्वम् ।

---

परिदेवितवचनम् । तत्र च शोको नामेष्टजनविनाशप्रभव इति तस्य जनस्य ये भ्रूक्षेपकटाक्षप्रभृतयः पूर्वं रतिविभावतामवलम्बन्ते स्म त एवात्यन्तविनष्टाः सन्त इदानीं स्मृतिगोचरतया निरपेक्षत्वभावप्राणं करुणमुद्दीपयन्तीति स्थिते, ते लोचने-इति तच्छब्दस्तल्लोचनगतस्वसंवेद्याव्यपदेश्यानन्तगुणगणस्मरणाकारद्योतको रसस्यासाधारणनिमित्ततां प्राप्तः । तेन यत्केनचिच्चोदितं परिहृतं च तान्मध्यैव । तथा हि चोद्यम्—प्रक्रान्तपरामर्शकस्य तच्छब्दस्य कथमियति व्यापार । उत्तरं च—रसाविष्टोऽत्र परामृष्ट इति । तदुभयमनुत्थानोपहतम् । यत्र ह्यनुपदेक्ष्यमाणधर्मान्तरसाहित्ययोग्यधर्मयोगित्वं वस्तुनो यच्छब्देनाभिधाय तद्बुद्धिस्थधर्मान्तरसाहित्यं तच्छब्देन निर्वाह्यते । तत्र पूर्वप्रक्रान्तपरामर्शकत्वं तच्छब्दस्य । यत्र तु निमित्तोपनतस्मरणविशेषाकारसूचकत्वं स घट इत्यादौ तत्र का परामर्शकथेति । उत्कम्पिनीत्यादिना तदीयभयानुभावोत्प्रेक्षणं मया अनिर्वाहितप्रतीकारमिति शोकावेगस्य विभावः । ते-इति सातिशयविभ्रमैकायतनरूपेऽपि लोचने विधुरे कांदिशीकतया निर्लक्ष्यं क्षिपन्ती कंत्राता कासावार्यपुत्र इति तयोर्लोचनयोस्तादृशी चावस्थेति सुतरां शोकोद्दीपनम् ।

**तीक्ष्णेनेति** । तस्यायं स्वभाव एव किं कुरुतां तथापि च धूमेनान्धीकृतो द्रष्टुमसमर्थ इति, न तु सविवेकस्येदृशानुचितकारित्वं संभाव्यते-इति स्मर्यमाण तदीय सौन्दर्यमिदानीं सातिशयशोकावेगविभावतां प्राप्तमिति 'ते'शब्दे सति सर्वोऽयमर्थो निर्व्यूढ. । यथा वा—

---

1 P परिभ्रमाणां. 2. C, D, E कटाक्षादयः. 3. E पराम्रष्टेति—लोचन पृ. ३०५. 4 A °धर्मायोगित्व. C °माणधर्मयोग्यधर्मयोगित्व. 5. D, E °तनेऽपि 6. E. drops कंत्राता.

त्याद्यन्ते यथा--

मा पंथं रुंध महं अवेहि बालय अहो सि अहिरीओ ।
अम्हे अणिरिक्काओ सुण्णहरं रक्खियव्वं णो ॥ ८२ ॥

[सप्तशतक ९.९१]

अत्रापेहीति त्याद्यन्तम् । त्वं तावदप्रौढो लोकमध्ये यदेवं प्रकाशयसि, अस्ति तु संकेतस्थानं शून्यगृहं तत्रैवागन्तव्यमिति ध्वनति । पदैकदेशोऽपि पदं यथा

तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे ।
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ ८३ ॥

[मेघदूत २.१६]

अत्र तालैरिति बहुवचनमनेकभाङ्गिवैदग्ध्यं व्यापयद्विप्रलम्भमुद्दीपयति ।

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयना ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ ८४ ॥

[अमरुशतक ७]

---

जागर्ति कनकचित्रे तत्र दृष्टे कुरङ्गे
रभसविकसितास्ते दृष्टिपाताः प्रियायाः ।
पवनविलुलितानामुत्पलानां पलाशैः
प्रकरमिव किरन्तः स्मर्यमाणा दहन्ति ॥ १५.३ ॥ इति ।

**अणिरिक्काओ इति ।** परतन्त्राः ।

इति । आचार्यश्री**हेमचन्द्र**विरचिते **विवेके** प्रथमोऽध्यायः ।

---

1 L, P मित्रद

अत्र न लिखतीत्यपि तु प्रसादपर्यन्तमास्त इति, तथा आस्त इति न त्वासित इति, भूमिमिति न तु भूमाविति, न हि बुद्धिपूर्वकं रूपकं किंचिल्लिखतीति स्यादित्यादिविभक्तीनां व्यञ्जकत्वम् ।

> अन्नत्थ वच्च बालय ण्हायंतिं कीस मं पुलोएसि ।
> एयं भो जायाभीरुयाण तुहं चिय न होइ ॥ ८५ ॥
>
> [ ]

अत्र जायातो ये भीरवस्तेषामेतत् स्नानस्थानमिति दूरापेत. संबन्ध इत्यनेन संबन्धेनैवेर्ष्यातिशयः प्रच्छन्नकामिन्याभिव्यक्तः । जायाभीरुकाणामित्यत्र तद्धितस्यापि व्यञ्जकत्वम् । ये ह्यरमज्ञा धर्मपत्नीषु प्रेमपरतन्त्रास्तेभ्य. कोऽन्यो जगति कुत्सितः स्यादिति कप्रत्ययोऽवज्ञातिशयद्योतकः ।

> अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
> नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यै. ॥ ८६ ॥
>
> [ विक्रमोर्वशीय ४.३ ]

अत्र चकारौ निपातावेवमाहतुः गण्डस्योपरि स्फोटवद् वियोगश्च वर्षासमयश्च समुपनतमेतद् द्वयमलं प्राणहरणायेति । अत एव रम्यपदेन सुतरामुद्दीपनविभावत्वमुक्तम् ।

> प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः । ८७ ।
>
> [ शाकुन्तल १.१३ ]

1 I अण्णत्थ 2. P, L, I तह चिय. 3. I विप्रयोगः.

अत्र प्र इत्युपसर्ग इङ्गुदीफलानां सरसत्वमाचक्षाण आश्रमस्य सौन्दर्यातिशयं ध्वनति।

अनेकस्य निपातस्योपसर्गस्य चैकत्र पदे यः प्रयोगः सोऽपि रसव्यक्त्यर्थः। यथा—

अहो बतासि स्पृहणीयवीर्यः ॥ ८८ ॥

[कुमार० ३.२०]

अत्राहो बतेत्यनेन श्लाघातिशयो ध्वन्यते।

मनुष्यवृत्त्या समुपाचरन्तं स्वबुद्धिसामान्यकृतानुमानाः।
योगीश्वरैरप्यसुबोधमीशं त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः ॥ ८९ ॥

[ ]

अत्र सम्यग्भूतमुपांशु कृत्वा आसमंताच्चरन्तमित्यनेन लोकानुजिघृक्षातिशयस्तत्तदाचरतः परमेश्वरस्य ध्वन्यते।

'रमणीयः क्षत्रियकुमार आसीत्' । ९० । इति

[महावीरचरित २, पृ. ६७]

अत्र शार्ङ्गधनुर्भङ्गश्रवणात् प्रकुपितस्य भार्गवस्योक्त्या 'आसी'दित्यतीतकालनिर्देशाद् दाशरथेः कथाशेषत्वं व्यज्यते।

यथा च प्रत्ययांशस्य द्योतकत्वं तथा प्रकृत्यंशस्यापि यथा—

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः।
स क्षुद्रो मुशलध्वनिः कलमिदं संगीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं परां प्रापितः ॥ ९१ ॥

[ ]

1 I यदाह 2 P दाचरता.

अत्र दिवसार्थेनात्यन्तासंभाव्यमानतास्यार्थस्य ध्वन्यते । तदिति प्रकृत्यंशश्चाऽत्र नतभित्तीत्येतत् प्रकृत्यंशसहायः समस्तामङ्गलभूतां मूषिकाद्याकीर्णतां ध्वनति । एवं सा धेनुरित्यादावपि योज्यम् ।

तथा—

रइकेलिहियनियंमणकरकिसलयरुद्धनयणजुअलस्स ।
रुद्दस्स तइयनयणं पव्वइपरिचुंबियं जयइ ॥९२॥

[ सप्तशतक ४५५, गाथासप्तशती ५.५५ ]

अत्र जयतीति न तु शोभत इत्यादि । समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव रूपेणास्य पिधानमिति तदेवोत्कृष्टमिति व्यज्यते ।

भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते । वाक्यस्य रसादिव्यञ्जकत्वं रसादिलक्षण एवोदाहरिष्यते । प्रबन्धे च नाटकादावर्थशक्तिमूला रसव्यक्तिः प्रतीतैव । वर्णरचनयोस्तु साक्षान्माधुर्यादिगुणव्यञ्जकत्वमेव, तद्द्वारेण तु रसे उपयोग इति गुणप्रकरण एव वक्ष्येते इतीह नोक्ते ।

इति । आचार्यश्रीहेमचन्द्रविरचितायाम् अलङ्कारचूडामणिसंज्ञस्वोपज्ञ-काव्यानुशासनवृत्तौ प्रथमोऽध्यायः ॥

1. P, L, I जुयलस्स. 2. P प्रतीत्यैव. 3. P, L, I वर्णरचनायास्तु.

रसलक्षणमाह—

**२६) विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः ॥ १ ॥**

वागाद्यभिनयसहिताः स्थायिव्यभिचारिलक्षणाश्चित्तवृत्तयो विभाव्यन्ते विशिष्टतया ज्ञायन्ते यैस्तैर्विभावैः काव्यनाट्यशास्त्रप्रसिद्धैरालम्बनोद्दीपनस्वभावैर्ललनोद्यानादिभिः, स्थायिव्यभिचारिलक्षणं चित्तवृत्तिविशेषं सामाजिकजनोऽनुभवन्ननुभाव्यते साक्षात्कार्यते यैस्तैरनुभावैः कटाक्षभुजाक्षेपादिभिः, विविधमाभिमुख्येन चरणशीलैर्व्यभिचारिभिर्धृतिस्मृतिप्रभृतिभिः, स्थायिभावानुमापकत्वेन लोके कारणकार्यसहचारिशब्दव्यपदेश्यैः, ममैवैते परस्यैवैते न ममैते न परस्यैते इति संबन्धिविशेषस्वीकारपरिहारनियमानवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनारूपेण स्थितः स्थायी रत्यादिको भावो नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् सहृदयहृदयसंवादभाजा साधारण्येन गोचरीक्रियमाणश्चर्व्यमाणतैकप्राणो विभावादिभावनावधिरलौकिकचमत्कारकारितया परब्रह्मास्वादसोदरो

---

**विभावैरिति** । यदाह **मुनिः**—

(24) बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयात्मकाः ।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥

[ नाट्यशास्त्र ७.४ ]

**अनुभावैरिति** । यदाह—

(25) वागङ्गसत्त्वाभिनयैर्यस्मादर्थोऽनुभाव्यते ।
वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृतः ॥

[ नाट्यशास्त्र ७.५ ]

---

1. D रपि.

निमीलितनयनैः कविसहृदयै रस्यमानः स्वसंवेदनसिद्धो रसः ।

रस इति । तथा च भरतमुनिः—(26) 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' [नाट्यशास्त्र ६, पृ. २७२] इति ।

तत्र भट्टलोल(?ल्ल)टस्तावदेवं व्याचचक्षे—विभावादिभिः संयोगोऽर्थात् स्थायिनः ततो रसनिष्पत्तिः । तत्र विभावश्चित्तवृत्तेः[2] स्थाय्यात्मिकाया उत्पत्तौ कारणम् । अनुभावाश्च न रसजन्या अत्र विवक्षिताः, तेषां रसकारणत्वेन गणनानर्हत्वात्, अपि तु भावानामेव येऽनुभावाः । व्यभिचारिणश्च चित्तवृत्त्यात्मकत्वात्, यद्यपि न सहभाविनः स्थायिना, तथापि वासनात्मतेह तस्य विवक्षिता । तेन स्थाय्येव विभावानुभावादिभिरुपचितो रसः । स्थायी त्वनुपचितः । स चोभयोरपि मुख्यया वृत्त्या रामादावनुकार्येऽनुकर्तरि च नटे रामादिरूपतानुसंधानबलादिति । तथा चाह दण्डी—

(27) रतिः शृङ्गारतां याता रूपबाहुल्ययोगतः ।
आरुह्य च परां कोटिं कोपो रौद्रत्वमागतः ॥

[काव्यादर्श २·२८१, २८३]+

अयं भावः - - विभावैर्जनितोऽनुभावैः प्रतीतिपदं नीतो व्यभिचारिभिरुपचितो

1 P रस्यमनो, drops स्वसंवेदनसिद्धो. L स्वसंवेदनरसो सिद्धः. 2 C drops वृत्ते. 3. D adds ये तु भावानामेव. 4 E रामादि तु रूप.

+ This verse is not found in Kāvyādarśa in this form But we can gather it from the following in Kāvyādarśa Pariccheda II.

प्राक् प्रीतिर्दर्शिता सेय रतिः शृङ्गारतां गता ।
रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥ २८१ ॥

and

इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः ॥ २८३ ॥

The commentary of Abhinavagupta on the N S which is closely followed in this part of Viveka (G. O. S.) reads °गता and °योगेन and अधिरुह्य and °रौद्रात्मतां गतः (p. 272) ।

मुख्यया वृत्त्यानुकरणीये रामे तद्रूपतानुसंधानादनुकर्तरि प्रतीयमानः स्थायी रस इति।

एतच्चेति शङ्कुकः। तथा हि—विभावाद्ययोगे स्थायिनोऽवगमो नोपपद्यते, अवगमकस्याविद्यमानत्वात्। न हि धूमं विना धराधरान्तःस्थो वह्निरवगम्यते। अपि च यथा स्वयमुत्पादिता विभावैः सचिताश्चानुभावैः पोषमुपनीताश्च व्यभिचारिभिः सयोगाद्रसीभवन्ति स्थायिनस्तदा स्थायिनामेव भावानामुद्देशो लक्षण चादावभिधातुं युक्तं सत् कस्माच्च कृतम्। आदौ हि रसानामुद्देशलक्षणे अभिहिते। कस्माच्च रसाना विभावानेनुभावाँश्चोक्त्वा तानेव स्थायिनां पुनराह। तथा हि रसान् प्रतिपद लक्षयन् मुनिर्वक्ष्यति—

(28) 'अथ वीरो नामोत्तमप्रकृतिरुत्साहात्मक। स चासंमोहाध्यवसाय-नयविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते' (नाट्यशास्त्र ६, पृ. २७२) इति। पुनश्च स्थायिभावानुवादे—

(29) 'उत्साहो नामोत्तमप्रकृति'। स चाविषादशक्तिशौर्यादिभि-र्विभावैरुत्पद्यते' (नाट्यशास्त्र ६, पृ. २७२) इति। एवमभिन्नार्थो एवैते। विभावा रसलक्षणे विस्तरत उक्ताः, भावानुवादे तु लेशत प्रदर्शिता।

न चोत्पत्तौ पदार्थानां कारणमभिधाय पुष्यता पुनस्तदुत्पत्तिकारणमभि-धातव्यं, वैयर्थ्यापत्ते। किं च—अनुपचितावस्थ स्थायी भावः, उपचितावस्थो रस इत्युच्यमाने एकैकस्य स्थायिनो मन्दतममन्दतरमन्दमाध्यस्थ्यादिविशेषा-पेक्षयानन्त्यापत्ति। एवं रसस्यापि तीव्रतीव्रतरतीव्रतमादिभिरसंख्यत्वं प्रसज्यते। अथोपचयकाष्ठां प्राप्त एव रस उच्यते, तर्हि 'स्मितमवहसितं विहसित-

1 C, D, E मुख्यवृत्त्या. 2 A, B शङ्कुनः. 3. A, B धराधरधरावस्थो. C धरान्तःस्थो 4 B 'नीतानाश्च'. 5. B drops स्थायिनस्तदा. 6 E drops from मानां to त्सा (line 10). 7. B drops नुभावाँश्चो. 8 C तथोत्पत्तौ 9 D इत्युच्यते। [उच्य]माने एकै'. 10. E काष्ठप्राप्त.

मुपहसितं चापहसितमतिहसितम्' इति षोढात्वं हास्यरसस्य कथं भवेत । अन्यच्च, उत्तरोत्तरप्रकर्षतारतम्यवशेन

(30) प्रथमे त्वभिलाषः स्याद् द्वितीये त्वर्थचिन्तनम् ।
अनुस्मृतिस्तृतीये च चतुर्थे गुणकीर्तनम् ॥
उद्वेगः पञ्चमे ज्ञेयो विलापः षष्ठ उच्यते ।
उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिरथाष्टमे ॥
नवमे जडता प्रोक्ता दशमे मरणं भवेत् ।

[नाट्यशास्त्र २२, श्लो. १७०-१७२(अ)]+

इति दशावस्थ कामोऽभिहितः । तत्रापि प्रत्यवस्थमुत्तरोत्तरप्रकर्षतारतम्य सम्भवात् कामावस्थासु दशस्वसंख्याताः शृङ्गारस्मरतिभावादयः प्रसज्जेयुः । अपरं च प्रागवस्थाभावः स्थायी, रसीभवति तु क्रमेणोपचितः इत्यत्रापि विपर्ययो दृश्यते । यतः—इष्टजनवियोगाद् विभावादुत्पन्नो महान् शोकः क्रमेणोप शाम्यति, न तु दार्ढ्यमुपैति । क्रोधोत्साहरतीनां च निजनिजकारणबलादुद्भूता-नामपि कालवशादमर्षस्थैर्यसेवाविपर्ययेऽपचयोऽवलोक्यते । तस्मान्न भावपूर्वकत्व रसस्य । अपि तु तद्विपर्यय एव । उक्त हि मुनिना (31) 'रसपूर्वकत्व भावानां, भावपूर्वकत्वं रसस्य विषयविशेषापेक्षया प्रयोगेऽप्यनुकर्तरि रसानास्वादयतामनुकार्ये भावप्रतीतिरुत्पद्यते' [नाट्यशास्त्र] इति । प्रथमस्य पक्षस्योत्थानम् । लोके तु भावदर्शनात्तत्स्वरूपरसनिष्पत्तिरिति ।

तस्मादन्यथा व्याख्यायते । हेतुभिर्विभावाख्यैः कार्यैश्चानुभावात्मभिः सहचारिरूपैश्च व्यभिचारिभिः प्रयत्नार्जिततया कृत्रिमैरपि तथानभिमन्यमानैः संयोगाद्गम्यगमकभावरूपादनुमीयमानोऽपि वस्तुसौन्दर्यबलात् कषायफलचर्वण.

1. A, B तु. 2. B drops उच्यते. + cf. Vātsyāyana K S., see 5. 5 p. 248, C. S. S. 3 E भावस्था. 4 A, B कररण. The reading may be करण. 5. B विषये विशेषा . C. विषयविशेषोऽपेक्षया. D. 'विशेषोऽपे . 6. E हि तुक°. 7. Cf. GOS, Vol. I, p. 292 8 A, B सौहार्दबलात.

परपुरुषदर्शनप्रभवसुखप्रसेककलनाकल्पया रसनीयस्वरूपतयान्यानुमीयमानविलक्षण-स्थायित्वेन संभाव्यमानो रत्यादिर्भावो नटेऽत्यन्ताविद्यमानोऽपि सामाजिकजनतास्वाद्यमानो मुख्यरामादिगतस्थाय्यनुकरणरूपोऽनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रसः ।

सेयं ममाङ्गेषु सुधारसच्छटा
सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी
प्राणेश्वरी लोचनगोचरं गता ॥ १५४ ॥
[ ]

दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ १५५ ॥
[ रुद्रट ७.२९ ]

रत्यादौ हि विभावाः काव्यबलादनुसंधेयाः, अनुभावाः शिक्षातः, व्यभिचारिणः कृत्रिमनिजानुभावार्जनबलात् । स्थायी तु काव्यबलादपि नानुसंधेयः । 'रति शोक' इत्यादयो हि शब्दाः रत्यादिकमभिधेयीकुर्वन्त्यभिधानत्वेन, न तु वाचिकाभिनयरूपतयावगमयन्ति । न हि वागेव वाचिकमपि तु तया निर्वृत्तम्, आङ्गिकवत् । तेन

विशुद्धात्माप्यगाधोऽपि दुरन्तोऽपि महानपि ।
बाष्पेणेव जलाधारः शोकः क्रोधेन पीयते ॥ १५६ ॥ इति
[ ]

तथा

शोकेन कृतस्तम्भस्तथा स्थितो येन वर्धिताक्रन्दैः ।
हृदयस्फुटनभयार्तैर्गदितुमभ्यर्थ्यते सचिवैः ॥ १५७ ॥
[ ]

इत्येवमादौ न शोकोऽभिनेयोऽपि त्वभिधेयः ।

भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुशीकरकणौघः ।
स्वेदोद्गम इव करतलसंस्पर्शादेष मे वपुषि ॥ १५८ ॥
[ रत्नावली २.११ ]

1 A, B dtep न.

इत्यनेन तु वाक्येन स्वार्थमभिदधता उदयनगतः सुखात्मा रतिः स्थायिभावोऽभिनीयते न तूच्यते । अवगमनशक्तिर्ह्यवगमनं वाचकत्वादन्या । अत एव स्थायिपदं सूत्रे भिन्नविभक्तिकमपि मुनिना नोपात्तम् । तेन रतिरनुक्रियमाणा शृङ्गार इति । अर्थक्रियापि मिथ्याज्ञानाद् दृष्टा । यथान्यैः --

(32) मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥

[ प्रमाणवार्तिक २.५७ ]

इति । न चात्र नर्तक एव सुखीति प्रतिपत्तिः, नाप्ययमेव राम इति, न चाप्ययं न सुखीति, नापि रामः स्याद्वा न वायमिति, न चापि तत्सदृश इति । किं तु सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणा चित्रतुरगादिन्यायेन यः सुखी रामः असावयमिति प्रतीतिरस्तीति । यदाह --

(33) प्रतिभाति न संदेहो न तत्त्वं न विपर्ययः ।
धीरसावयमस्तीति नासावेवायमित्यपि ॥
विरुद्धबुद्धिसंभेदादविवेचितसंप्लवः ।
युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया ॥ इति ॥

[ धर्मकीर्ति (?) ]

तदिदमप्यन्तस्तत्त्वशून्यं न विमर्दक्षममिति **भट्टतोतः** । तथा हि -- अनुकरणरूपो रस इति यदुच्यते तत् किं सामाजिकप्रतीत्यभिप्रायेण, उत नटाभिप्रायेण, किं वा वस्तुवृत्तविवेचकव्याख्यातृबुद्धिसमवलम्बनेन यथाहुः -- व्याख्यातारः खल्वेवं विवेचयन्तीति ।

अथ **भरतमुनि**वचनानुसारेण तत्राद्यः पक्षोऽसंगतः । किंचिद्धि प्रमाणेनोपलब्धं तदनुकरणमिति शक्यं वक्तुम् । यथा--एवमसौ सुरां पिबतीति सुरापानानुकरणत्वेन पयःपानं प्रत्यक्षावलोकितं प्रतिभाति । इह च नटगतं किं तदुपलब्धं यद् रत्यनुकरणतया भातीति चिन्त्यम् ।

तच्छरीरं तदङ्गं प्रतिशीर्षकादि रोमाञ्चगद्गदिकादि भुजाक्षेपवलनप्रभृति भ्रूक्षेपकटाक्षादिकं च न रतेश्चित्तवृत्तिरूपाया अनुकारत्वेन कस्यचित् प्रतिभाति । जडत्वेन भिन्नेन्द्रियग्राह्यत्वेन भिन्नाधिकरणत्वेन ततोऽतिवैलक्षण्यात् । मुख्यावलोकने

1 D, E वाक्ये न तु स्वा°.   2. E चित्रकमिव तुरगा°.   3 E वेद वि°
4. C, D, E स इत्यनु°.   5. C. °दिकादिकां.

च तदनुकरणप्रतिभासः। न च रामगतां[1] रतिमुपलब्धपूर्विणः केचित्। एतेन रामानुकारी[2] नट इत्यपि निरस्तः प्रवादः।

अथ नटगता चित्तवृत्तिरेव प्रतिपन्ना सती रत्यनुकारः शृङ्गार इत्युच्यते, तत्रापि किमात्मकत्वेन सा प्रतीयत इति चिन्त्यम्। ननु प्रमदादिभिः कारणैः कटाक्षादिभिः कार्यैर्धृत्यादिभिश्च सहचारिभिर्लिङ्गभूतैर्या लौकिकी कार्यरूपा सहचारिरूपा[4] च चित्तवृत्तिः प्रतीतियोग्या[5] तदात्मकत्वेन सा नटचित्तवृत्तिः प्रतिभाति। हन्त तर्हि रत्याकारेणैव[3] सा प्रतिपन्नेति दूरे रत्यनुकरणतावाचोयुक्तिः।

ननु ते विभावादयोऽनुकार्ये[6] पारमार्थिका इह त्वनुकर्तरि न तथेति विशेषः। अस्त्वेवम्। किं तु ते विभावादयोऽतत्कारणातत्कार्यातत्सहचररूपा अपि काव्यशिक्षादिबलोपकल्पिताः कृत्रिमाः सन्तः किं कृत्रिमत्वेन सामाजिकैर्गृह्यन्ते, न[7] वा। यदि गृह्यन्ते, तदा तैः कथं रतेरवगतिः। नन्वत एव तत्प्रतीयमानं रत्यनुकरणं मुग्धबुद्धेः, कारणान्तरप्रभवे हि कार्ये मूर्धाभिषिक्तेन तथा ज्ञाते वस्त्वन्तरस्यानुमानं तावद्युक्तम्। अमूर्धाभिषिक्तेन तु[8] तस्यैव[10] प्रसिद्धस्य कारणस्य। यथा वृश्चिकविशेषाद्गोमयस्यैवानुमानं वृश्चिकस्यैव वा। तत्र परं मिथ्याज्ञानम्। अयं भावः—प्रसिद्धाद् रतिलक्षणात् कारणाद् रत्यनुकरणं नाम कारणान्तरं, तत्प्रभवाश्चेदनुभावाः स्युः, तथैव[9] च विशेषविदा यदि ज्ञायेरन्, तदा रत्यनुकरणलक्षणस्य वस्त्वन्तरस्यानुमानं समञ्जसं स्यात्। न चैवम्, तत्कथमिव रत्यनुकरणप्रतीतिः। अविशेषविदा च तथाविधानुभावदर्शने रतिरेवानुमीयते तच्च मिथ्याज्ञानमेवेति। यत्रापि लिङ्गज्ञानं मिथ्या तत्रापि तदाभासानुमानमयुक्तम्[11]। न हि बाष्पाद् धूमत्वेन ज्ञानादग्न्यनुकारानुमानम्। तदनुकारत्वेन प्रतिभासमानादपि लिङ्गात् तदनुकारानुमानं युक्तं, धूमानुकारत्वेन हि ज्ञायमानाद् नीहाराद् नाग्न्यनुकारजपापुञ्जप्रतीतिर्दृष्टा।

नन्वक्रुद्धोऽपि नटः क्रुद्ध इव भाति। सत्यं, क्रुद्धेन सदृशः। सादृश्यं च शृङ्ग्यादिभिर्[12]गोरिव गवयेन मुखादिभिरिति नैतावतानुकारः कश्चित्। न चापि

1. D, E रामरतिमुप° 2 D, E रामानुकारो. 3 D, E °रूपाकारेण. 4 A, B, C सहचररूपा. 5 A, B प्रतियोग्या. 6. E °वादयः कार्ये. 7. E drops from न to गृह्यन्ते 8 A, B drop तु 9. A, B तथैव. 10. E °स्यैव. 11. A, B °नुमानमतदनु°. 12 E भ्रुकुट्या°.

सामाजिकानां सादृश्यमतिरस्ति । सामाजिकानां च न भावशून्या नर्तके प्रतिपत्तिरित्युच्यते । अथ च तदनुकारप्रतिभास इति रिक्ता वाचोयुक्तिः । यच्चोक्तं–रामोऽयमित्यस्ति प्रतिपत्तिः, तदपि यदि तदात्वे निश्चितं तदुत्तरकालभाविबाधकवैधुर्याभावे कथं न तत्त्वज्ञानं स्यात्। बाधकसद्भावे वा कथं न मिथ्याज्ञानम्। वास्तवेन च वृत्तेन बाधकानुदयेऽपि मिथ्याज्ञानमेव स्यात्। तेन विरुद्धबुद्ध्यसंभेदादित्यसत् । नर्तकान्तरेऽपि रामोऽयमिति प्रतिपत्तिरस्ति, ततश्च रामत्वं सामान्यरूपमित्यायातम् । यच्चोच्यते–विभावाः काव्यादनुसंधीयन्ते, तदपि न विद्मः । न हि ममेयं सीता काचिदिति स्वात्मीयत्वेन प्रतिपत्तिर्नटस्य । अथ सामाजिकस्य तथाप्रतीतियोग्याः क्रियन्ते इत्येतावदेवानुसंधानमुच्यते, तर्हि स्थायिनि सुतरामनुसंधानं स्यात् । तस्यैव हि मुख्यत्वेन अस्मिन्नयमिति सामाजिकानां प्रतिपत्तिः । तस्मात् सामाजिकप्रतीत्यनुसारेण स्थाय्यनुकरणं रसा इत्यसत् ।

न चापि नटस्येत्थं प्रतिपत्तिः रामं तच्चित्तवृत्तिं वानुकरोमीति । सदृशकरणं हि तावदनुकरणमनुपलब्धप्रकृतिना न शक्यं कर्तुम् । अथ पश्चात्करणमनुकरणं, तल्लोकेऽप्यनुकरणात्मनातिप्रसक्ता । अथ न नियतस्य कस्यचिदनुकारोऽपि तूत्तमप्रकृतेः शोकमनुकरोमीति[1], तर्हि केनेति चिन्त्यम् । न तावच्छोकेन, तस्य तदभावात् । न चाश्रुपातादिना शोकस्यानुकारः, तद्वैलक्षण्यादित्युक्तम् । इयत्तु स्यात्, उत्तमप्रकृतेर्ये शोकानुभावास्ताननुकरोमीति । तत्रापि कस्योत्तमप्रकृतेः । यस्य कस्यचिदिति चेत्, सोऽपि विशिष्टतां विना कथं बुद्धावारोपयितुं शक्यः । य एवं रोदितीति चेत्, स्वात्मापि मध्ये नटस्यानुप्रविष्ट इति गलितोऽनुकार्यानुकर्तृभावः । किं च नटः शिक्षावशात् स्वविभावस्मरणाच्चित्तवृत्तिसाधारणीभावेन हृदयसंवादात् केवलाननुभावान् दर्शयन् काव्यमुचितकाकुप्रभृत्युपस्कारेण पठश्चेष्टते, इत्येतावन्मात्रस्य प्रतीतिर्न[2] त्वनुकारं वेदयते । कान्तवेषानुकारवद्धि न रामचेष्टितस्यानुकारः, नापि वस्तुवृत्तानुसारेण तदनुकारत्वम्, असंवेद्यमानस्य वस्तुवृत्तत्वानुपपत्तेः । न च मुनिवचनमेवंविधमस्ति क्वचित् स्थाय्यनुकरणं रसा इति ।

यच्चोच्यते—वर्णकैर्हरितालादिभिः संयुज्यमान एव गौरित्यादि, तत्र यद्यभिव्यज्यमान इत्ययोंऽभिप्रेतः । तदसत् । न हि सिन्दूरादिभिः पारमार्थिको गौरभिव्यज्यते, प्रदीपादिभिरिव । किं तु तत्सदृशः समूहविशेषो निर्वर्त्यते । त

1 D interpolates here तत्रापि कस्योत्तम (l. 18) and gives only हि for तर्हि. 2. D प्रतीतेर्न. 3. E °दृशस्°.

एवं हि सिन्दूरादयो गवावयवसंनिवेशसदृशेन संनिवेशविशेषेणावस्थिता गोसदृगिति प्रतिभासस्य विषयो नैव विभावादिसमूहो रतिसदृशताप्रतिपत्तिग्राह्यः । तस्माद् भावानुकरणं रसा इत्यसत् ।

येन त्वभ्यधायि—सुखदुःखजननशक्तियुक्ता विषयसामग्री बाह्यैव सांख्यदृशा सुखदुःखस्वभावा रसः । तस्या च सामग्र्यां दलस्थानीया विभावाः, संस्कारका अनुभावव्यभिचारिणः, स्थायिनस्तु तत्सामग्रीजन्या आन्तराः सुखदुःखस्वभावा इति । तेन स्थायिभावान् रसत्वमुपनेष्याम इत्यादावुपचारमङ्गीकुर्वता ग्रन्थविरोधं स्वयमेव बुध्यमानेन दूषणाविष्करणमौखर्यात् प्रामाणिकजनः परिरक्षित इति किमस्योच्यते । यत्त्वन्यत्तत्र प्रतीतिवैषम्यप्रसङ्गादि तत् कियदत्रोच्यताम् ।

**भट्टनायक**स्त्वाह—रसो न प्रतीयते, नोत्पद्यते, नाभिव्यज्यते । स्वगतत्वेन हि प्रतीतौ करुणे दुःखित्वं स्यात् । न च सा प्रतीतिर्युक्ता सीतादेरविभावत्वात् । स्वकान्तास्मृत्यसंवेदनात् । देवतादौ साधारणीकरणायोग्यत्वात् । समुद्रोल्लङ्घनादेरसाधारण्यात् । न च तद्वतो रामस्य स्मृतिः अनुपलब्धत्वात् । न च शब्दानुमानादिभ्यस्तत्प्रतीतौ लोकस्य सरसता युक्ता, प्रत्यक्षादिव नायकयुगलकावभासे हि प्रत्युत लज्जाजुगुप्सास्पृहादिस्वोचितचित्तवृत्त्यन्तरोदयव्यग्रतया का सरसत्वकथापि स्यात् । परगतत्वेन तु प्रतीतौ ताटस्थ्यमेव भवेत् न च प्रतीतिरनुभवस्मृत्यादिरूपा रसस्य युक्ता । उत्पत्तावपि तुल्यमेतद् दूषणम् । शक्तिरूपत्वेन पूर्वं स्थितस्य पश्चादभिव्यक्तौ विषयार्जनतारतम्यापत्तिः । स्वगतपरगतत्वादि च पूर्ववद् विकल्प्यम् । तस्मात् काव्ये दोषाभावगुणालङ्कारमयत्वलक्षणेन, नाट्ये चतुर्विधाभिनयरूपेण निबिडनिजमोहसङ्कटतानिवारणकारिणा विभावादिसाधारणीकरणात्मनाभिधातो द्वितीयेनांशेन भावकत्वव्यापारेण भाव्यमानो **रसोऽनुभव**स्मृत्यादिविलक्षणेन रजस्तमोऽनुवेधवैचित्र्यबलाद् द्रुतिविस्तरविकासात्मना सत्त्वोद्रेकप्रकाशानन्दमयनिजसंविद्विश्रान्तिलक्षणेन परब्रह्मास्वादसविधेन भोगेन परं भुज्यत इति । अत एवाह --

(34) अभिधा भावना चान्या तद्भोगीकृतमेव च ।
अभिधाधामतां याते शब्दार्थालङ्कृती ततः ॥

1 A, B त्वाधेत 2 C drops from लोकस्य to ताटस्थ्य (line 16) D, E drop from लोकस्य to प्रतीतौ (line 16) 3 A, B चित्तचित्तवृत्त्य'. 4. A, B, C भोगिकृतिरेव. D भोगीकृतेरेव. E भोगीकृतमेव.

भावनाभाव्य एषोऽपि शृङ्गारादिगणो हि[2] यत् ।
तद्भोगीकृतरूपेण व्याप्यते सिद्धिमान्नरः ॥
[ भट्टनायक ] इति ।

तत्र पूर्वपक्षोऽयं भट्टलोल(ल्ल)टपक्षानभ्युपगमादेव[3] नाभ्युपगत इति तद्दूषणमनुत्थानोपहतमेव । प्रतीत्यादिव्यतिरिक्तश्च संसारे को भोग इति न विद्मः । रसनेति चेत्, सापि प्रतिपत्तिरेव, केवलमुपायवैलक्षण्यान्नामान्तरं प्रतिपद्यतां दर्शनानुमिति श्रुत्युपमितिप्रतिभानादिनामान्तरवत् । निष्पादनाभिव्यक्तिद्वयानभ्युपगमे च नित्यो वाऽसन् वा रस इति न तृतीया गतिः स्यात् । न चाप्रतीतं वस्तु स्तिव्यवहारयोग्यम् ।

अथोच्यते—प्रतीतिरस्य भोगीकरणं, तच्च द्रुत्यादिस्वरूपम् । तदस्तु, तथापि न तावन्मात्रम् । यावन्तो हि रसास्तावत्य एव रसात्मानः[4] प्रतीतयो भोगीकरणस्वभावाः सत्त्वादिगुणानां चाङ्गाङ्गिवैचित्र्यमनन्तं कल्प्यमिति का त्रिधैवेनियत्ता ।

'भावनाभाव्य एषोऽपि शृङ्गारादिगणो हि यत्' इति तु यत् 'काव्येन भाव्यन्ते रसाः' इत्युच्यते, तत्र विभावादिजनितचर्वणात्मकास्वादरूपप्रत्ययगोचरतापादनमेव यदि भवेत्[5] भावनं तदभ्युपगम्यत एव । यदुक्तम्—

(35) संसर्गादिर्यथा शास्त्रे एकत्वात् फलयोगतः ।
वाक्यार्थस्तद्वदेवात्र शृङ्गारादि रसो मतः ॥
[ ] इति ।

तदस्माकमभिमतमेव ।

तर्हि, उन्यता परिशुद्धं तत्त्वम् । उक्तमेव मुनिना न त्वपूर्वं किञ्चित् । तथा ह्याह—

(36) काव्यार्थान् भावयन्तीति भावाः ।
[नाट्यशास्त्र अ. ७, पृ. ३४२]

अस्यार्थः—पदार्थवाक्यार्थौ रसेष्वेव पर्यवस्यत इत्यसाधारण्यात् प्राधान्याच्च काव्यस्यार्था रसाः । अर्थ्यन्ते[6] प्राधान्येनेत्यर्थाः[7], न त्वर्थशब्दोऽभिधेयवाची ।

---

1. A, B एवाय. 2. All the Mss read मतः in place of हि यत्. Someśvara's Samketa (p. 44) too reads मतः. The Abhinavabhāratī (Vol I. p. 277) and Hemacandra's Viveka itself (infra, l 14), however, read हि यत्. We, therefore, replace मतः with हि यत्. 3. D drops. नभ्युपगमादेव. 4. E. रसनात्मानः. 5. D drops भवेत्. 6. A, B उच्यते. 7 A, B, C °त्यर्थाः.

स्वशब्दानभिधेयत्वं[1] हि रसादीना दर्शितमेव। एवं काव्यार्था रसाः, तान् कुर्वते ये स्थायिव्यभिचारिणस्ते भावाः। स्थायिव्यभिचारिकलापेनैव ह्यास्वाद्योऽलौकिकोऽर्थो निर्वर्त्यते। पूर्वं हि स्थाय्यादिकमवगच्छति ततः सर्वसाधारणतयाऽऽस्वादयति। तेन पूर्वावगमगोचरीभूत. मन् स्थाय्यादिरुत्तरभूमिकाभागिन आस्वाद्यस्य रसस्य भावको निष्पादक उच्यते। तस्मात काव्यार्थो रस इति। तथा हि---

(37) आरोग्यमाप्तवान् शाम्ब' स्तुत्वा देवमहर्पतिम्।
स्यादर्थावगतिः पूर्वमित्यादिवचने यथा॥
ततश्चोपात्तकालादिन्यकारेणोपजायते।
प्रतिपत्तुर्मनस्येवं प्रतिपत्तिर्न संशयः॥
य कोऽपि भास्कर स्तौति स सर्वोऽप्यगदो भवेत।
तस्मादहमपि स्तौमि रोगनिर्मुक्तये रविम्॥

[ भट्टनायक (?) ] इति।

एवं काव्यात्मकादपि शब्दात सहृदयस्याधिकास्ति प्रतिपत्तिः। तस्य च 'ग्रीवाभङ्गाभिरामम्' (पृ ११८) इत्यादिवाक्येभ्यो वाक्यार्थप्रतिपत्तेरनन्तरं मानसी साक्षात्कारात्मिका अपहस्तितत‌द्वाक्योपात्तकालादिविभागा तावत प्रतीतिरुपजायते। तस्या च यो मृगपोतकादिर्भाति तस्य विशेषरूपत्वाभावात भीत इति त्रासकस्यापारमार्थिकत्वात भयमेव परं[2] देशकालाद्यनालिङ्गितम्। तत एव भीतोऽहं भीतोऽयं शत्रुर्वयस्यो मध्यस्थो वेत्यादिप्रत्ययेभ्यो दुःखसुखादिकृतहानादिबुद्ध्यन्तरोदयनियमवत्तया विघ्नबहुलेभ्यो विलक्षणनिर्विघ्नप्रतीतिग्राह्य साक्षादिव हृदये निविशमान चक्षुषोरिव विपरिवर्तमान भयानको रसः। तथाविधे हि भये नात्मा तिरस्कृतो न विशेषत उल्लिखितः। एव परोऽपि। तत एव च न परिमितमेव साधारण्यम्। अपि तु विततम्। व्याप्तिग्रह इव धूमाग्न्योर्भयकम्पयोरेव वा। तदत्र साक्षात्कारायमाणत्वपरिपोषिका[3] नटादिसामग्री। यस्या वस्तुसता काव्यार्पितानां च देशकालप्रमात्रादीना नियमहेतूनामन्योन्यप्रतिबन्धबलादत्यन्तमपसरणे स एव साधारणीभावः सुतरां पुष्यति। अत एव सामाजिकानामेकघनतैव प्रतिपत्तेः सुतरां

1 F drop, from भिधेयत्वं to ये स्थायिव्य (1 2). 2. A, B, पर.
3. A, B 'माणत्वे परि'

रसपरिपोषाय सर्वेषामनादिवासनाचित्रीकृतचेतसां वासनासंवादात्। सा चाविघ्ना संविच्चमत्कारः। तज्जोऽपि कम्पपुलकोल्लुकसनादिर्विकारश्चमत्कारो यथा—

अज्ज वि हरी चमक्कइ कहकहवि न मंदरेण दलिआइं ।
चदकलाकंदलसच्छहाइं लच्छीइ(ए) अंगाइं ॥ १५९ ॥

[ ]

अद्भुतभोगात्मस्पन्दावेशरूपो हि चमत्कारः। स च साक्षात्कारस्वभावो मानसाध्यवसायो वा संकल्पो वा स्मृतिर्वा तथात्वेनास्फुरन्त्यस्तु। यदाह—

(38) रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान
पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिनानि जननान्तरसौहृदानि ॥

[शाकुन्तल ५.२] इत्यादि।

अत्र हि स्मरतीति या स्मृतिरुपदर्शिता सा न तार्किकप्रसिद्धा, पूर्वमेतस्यार्थस्याननुभूतत्वात। अपि तु प्रतिभानापरपर्यायसाक्षात्कारस्वभावेयमिति। सर्वथा तावदेषास्ति प्रतीतिरास्वादात्मा यस्या रतिरेव भाति। तत एव विशेषान्तरानुपहितत्वात् सा रसनीया सती न लौकिकी, न मिथ्या, नानिर्वाच्या, न लौकिकतुल्या, न तदारोपादिरूपा। एवैव चोपचयावस्थाऽस्तु देशाद्यनियन्त्रणात्। अनुकारोऽप्यस्त्वनुगामितया करणात। विषयसामग्र्यपि भवतु विज्ञानवादावलम्बनात। सर्वथा रसनात्मकवीतविघ्नप्रतीतिग्राह्यो भाव एव रसः।

तत्र विघ्नापसारका विभावप्रभृतय। तथा हि लोके सकलविघ्नविनिर्मुक्ता संवित्तिरेव चमत्कारनिर्वेशरसनास्वादनभोगसमापत्तिलयविश्रान्त्यादिशब्दैरभिधीयते।

विघ्नाश्चास्या सप्त। संभावनाविरहरूपा प्रतिपत्तावयोग्यता १। स्वगतपरगतत्वनियमेन देशकालविशेषावेश २। निजसुखादिविवशीभावः ३। प्रतीत्युपायवैकल्यम् ४। स्फुटत्वाभाव ५। अप्रधानता ६। संशययोगश्च ७।

तथा हि—संवेद्यमसंभावयमान सवेद्ये संविद निवेशयितुमेव न शक्नोति। का तत्र विश्रान्तिरिति प्रथमो विघ्नः। तदपसारणे हृदयसंवादो लोक-

1 C, D, E कलिआइ. 2 D, E तयात्वेन स्फु°. 3 भावस्थिराणि is the more familiar reading. 4 A, B, E give all the seven numbers. C gives only three numbers. D gives number three only 5. D drops काल. 6. C पसा.. इ. A, B °सारेण°.

सामान्यवस्तुविषयः । अलोकसामान्येषु तु चेष्टितेषु अखण्डितप्रसिद्धिजनितगाढरूढचितिप्रत्ययप्रसरकारी प्रख्यातरामादिनामधेयपरिग्रहः । अत एव निःसामान्योत्कर्षोपदेशव्युत्पत्तिप्रयोजने नाटकादौ प्रख्यातवस्तुविषयत्वादि नियमेन निरूप्यते । न तु प्रहसनादाविति ॥ १ ॥

स्वैकगतानां च सुखदुःखसंविदामास्वादे यथासंभवं तदपगमभीरुतया वा तत्परिरक्षाव्यग्रतया वा तत्सदृशार्जिजीषया वा तज्जिहासया वा तत्प्रचिख्यापयिषया वा तद्गोपनेच्छया वा प्रकारान्तरेण वा संवेदनान्तरसमुद्गम एव परमो विघ्नः । परगतत्वनियमभाजामपि सुखदुःखानां संवेदने नियमेन स्वात्मनि सुखदुःखमोहमाध्यस्थ्यादिसंविदन्तरोद्गमनसंभावनादवश्यंभावी विघ्नः । तदपसारणे 'कार्यो नातिप्रसङ्गोऽत्र पूर्वरङ्गविधिं प्रति ।' (नाट्यशास्त्र ५.१५८) इति पूर्वरङ्गनिगूहनेन 'नटी विदूषको वापि' (नाट्यशास्त्र २०.३०) इति लक्षितप्रस्तावनावलोकनेन च यो नटरूपताधिगमस्तत्पुरःसरप्रतिशीर्षकादिना तत्प्रच्छादनप्रकारोऽभ्युपायः, अलौकिकभाषादिभेदलास्याङ्गरङ्गपीठमण्डपगतकक्षापरिग्रहनाट्यधर्मीसहितः । तस्मिन् हि सति अस्यैवात्रैव एतर्ह्येव च सुखं दुःखं वेति न भवति प्रतीतिः । स्वरूपस्य निह्नवाद्रूपान्तरस्य चारोपितस्य प्रतिभासविश्रान्तिवैकल्येन स्वरूपे विश्रान्त्यभावात् सत्यतदीयरूपनिह्नवमात्र एव पर्यवसानात् । इत्येष सर्वो **मुनिना** साधारणीभावसिद्ध्या रसचर्वणोपयोगित्वेन परिकरबन्धः समाश्रितः ॥ २ ॥

तथा निजसुखादिविवशीभूतश्च कथं वस्त्वन्तरे संविदं विश्रमयेदिति तत्प्रत्यूहव्यपोहनाय प्रतिपदार्थनिष्ठैः साधारण्यमहिम्ना सकलभोग्यत्वसहिष्णुभिः शब्दादिविषयमयैर्गतातोद्यगानविचित्रमण्डपविदग्धगणिकादिभिरुपरञ्जनं समाश्रितम् । येनाहृदयोऽपि हृदयवैमल्यप्राप्त्या सहृदयीक्रियते ॥ ३ ॥

किं च प्रतीत्युपायानामभावे कथं प्रतीतिः ॥ ४ ॥

अस्फुटप्रतीतिकारिशब्दलक्षणलिङ्गसंभवेऽपि न प्रतीतिर्विश्राम्यति स्फुटप्रतीतिरूपप्रत्यक्षोचितप्रत्ययसाकाङ्क्षत्वात् । यथाहुः—(39) 'सर्वा चेयं प्रमितिः प्रत्यक्षपरा' (न्यायसूत्रभाष्य अ. १, सू. ३) इति । स्वसाक्षात्कृत आगमानुमानशतैरप्यनन्यथाभावस्य स्वसंवेदनात् । अलातचक्रादौ साक्षात्कारान्तरेणैव बलवता तत्प्रमित्यपसारणादिति लौकिकस्तावदयं क्रमः । तस्मात्तदुभयविघ्नविघातेऽभिनया लोकधर्मीवृत्तिप्रवृत्त्युपस्कृताः

1. C, D, E drop चिति It may be noted that the Abhinavabhārati reads गाढारूढ for गाढरूढ. 2 D drops दा and does not give the figure ॥ २ ॥ 3. C, E तदपसारणे. 4. A, B धर्म्मी. C धर्मा. 5 E drops सिद्ध्या. 6 D, E प्रतीतिभावः 7. E drops लिङ्ग.

समभिषिच्यन्ते । अभिनयनं हि शब्दलक्षणलिङ्गव्यापारसदृशमेव प्रत्यक्षव्यापारकल्पमिति ॥ ५ ॥

अप्रधाने च वस्तुनि संवित् कस्य विश्राम्यति । तस्यैव प्रत्येयस्य प्रधानान्तरं प्रत्यनुधावत स्वात्मन्यविश्रान्तत्वात् । अतोऽप्रधानत्वं जडे विभावानुभाववर्गे व्यभिचारिनिचये च संविदात्मकेऽपि नियमेनान्यमुखप्रेक्षिणि संभवतीति तदतिरिक्त स्थाय्येव चर्वणापात्रम् । तत्र पुरुषार्थनिष्ठाः काश्चित्संविद इति प्रधानम् । तद् यथा—रतिः कामे तदनुषङ्गिधर्मार्थनिष्ठा, क्रोधस्तत्प्रधानेष्वर्थनिष्ठः, कामधर्मपर्यवसितोऽपि उत्साहः, समस्तधर्मादिपर्यवसितः शमश्च मोक्षोपाय इति तावदेषां प्राधान्यम् । यद्यपि चैषामप्यन्योन्यं गुणभावोऽस्ति तथापि तत्तत्प्रधाने[1] रूपके तत्तत्प्रधानं[2] भवतीति रूपकभेदपर्यायेण सर्वेषां प्राधान्यमेषा लक्ष्यते । अदूरभागाभिनिविष्टदृशा त्वेकस्मिन्नपि रूपके पृथक् प्राधान्यम् । तत्र सर्वेऽमी सुखप्रधाना स्वसंविच्चर्वणरूपस्य एकघनस्य प्रकाशस्यानन्दसारत्वात् । तथा हि एकघनशोकसंविच्चर्वणेऽपि लोके स्त्रीलोकस्य हृदयविश्रान्तिरन्तरायशून्यविश्रान्तिशरीरत्वात्[3] । अविश्रान्तिरूपतैव च दुःखम् । तत एव कापिलैर्दुःखस्य चाञ्चल्यमेव प्राणत्वेनोक्तं रजोवृत्तितां वदद्भिरित्यानन्दरूपता सर्वरसानाम् । किन्तूपरञ्जकविषयवशात् केषामपि कटुकिम्ना स्पर्शोऽस्ति वीरस्येव । स हि क्लेशसहिष्णुतादिप्राण एव । एवं रत्यादीनां प्राधान्यम् । हासादीनां तु सातिशयं सकललोकसुलभविभावतयोपरञ्जकत्वमिति प्राधान्यम् । अत एवानुत्तमप्रकृतिषु बाहुल्येन हासादयो भवन्ति । पामरप्रायः सर्वोऽपि[4] हसति शोचति बिभेति परनिन्दामाद्रियते, स्वल्पसुभाषितत्वेन च[5] सर्वत्र विस्मयते । रत्याद्यङ्गतया तु पुमर्थोपयोगित्वमपि स्यादेषाम् । स्थायित्वं चैतावतामेव । एवमप्रधानत्वनिरासः स्थायिनिरूपणया 'स्थायिभावान् रसत्वमुपनेष्याम'[6], (नाट्यशास्त्र अध्याय ६, पृ. २९९) इत्यनया सामान्यलक्षणशेषभूतया विशेषलक्षणनिष्ठया च **मुनिना** कृतः ॥ ६ ॥[7]

तत्रानुभावानां विभावानां व्यभिचारिणा च पृथक् स्थायिनि नियमो नास्ति, बाष्पादेरानन्दाक्षिरोगादिजत्वदर्शनात्[8] । व्याघ्रादेश्च क्रोधभयादिहेतुत्वात् । श्रमचिन्तादेरुत्साहभयाद्यनेकसहचरत्वावलोकनात् । सामग्री तु[9] न व्यभिचारिणी । तथा हि—बन्धुविनाशो यत्र विभावः परिदेविताश्रुपातादिश्चानुभावश्चिन्तादैन्यादिश्च व्यभिचारी, सोऽवश्यं शोक एवेत्येवं सशयोदये शङ्कात्मकविघ्नशमनाय संयोग उपात्तः ॥ ७ ॥[10]

1 A, B तत्प्रधाने. 2. A, B, C, D तत्प्रधाने. 3 D, E °विश्रान्तिशून्यत्वात् श°. 4 A, B सर्वो हि. 5. A, B drop च. 6. A B, C, D, E सत्व°. The reading required is रसत्व. 7. D drops figure '॥ ६ ॥'. 8. A, B, C, D, E give °रानन्दार्ति°. The reading required is अक्षि. Cf. N. S. Abhinavabhārati (p. 284). 9. E adds वा before तु. 10. D drops the figure '॥ ७ ॥'.

तत्र लोकव्यवहारे कार्यकारणसहचरात्मकलिङ्गदर्शनजस्थाय्यात्मपरचित्तवृत्त्यनुमानाभ्यासपाटवादधुना तैरेवोद्यानकटाक्षधृत्यादिभिर्लौकिकीं कारणत्वादिभुवमतिक्रान्तैर्विभावनानुभावनासमुपरञ्जकत्वमात्रप्राणैरत एवालौकिकविभावादिव्यपदेशभाग्भिः प्राच्यकारणादिरूपसंस्कारोपजीवनख्यापनाय विभावादिनानानामधेयव्यपदेश्यैर्गुणप्रधानतापर्यायेण सामाजिकधियि सम्यग्योगं संबन्धमैकाग्र्यं चासादितवद्भिरलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरता नीतोऽर्थश्चर्व्यमाणतैकसारो न तु सिद्धस्वभावस्तात्कालिक एव, न तु चर्वणातिरिक्तकालावलम्बी स्थायिविलक्षण एव रस । न तु यथा **शङ्का**दिभिरभ्यधीयत—स्थाय्येव विभावादिप्रत्याय्यमानो रस्यमानत्वाद्रस उच्यते । एवं हि लोकेऽपि किं न रसः, असतोऽपि हि यत्र रसनीयता तत्र वस्तुसतः कथं न भविष्यति । तेन स्थायिप्रतीतिरनुमितिरूपा धान्या, न रसः । अत एव सूत्रे **मुनिना** स्थायिग्रहणं न कृतम् । तत् प्रत्युत शल्यभूतं स्यात् । केवलमौचित्यादेवमुच्यते 'स्थायी रसीभूतः' इति । औचित्यं तु तत्स्थायिगतत्वेन कारणादितया प्रसिद्धानामधुना चर्वणोपयोगितया विभावादित्वावलम्बनात् । तथा हि लौकिकचित्तवृत्त्यनुमाने का रसता । तेनालौकिकचमत्कारात्मा रसास्वादः स्मृत्यनुमानलौकिकस्वसंवेदनविलक्षण एव । तथा हि । लौकिकेनानुमानेन संस्कृतः प्रमदादि न ताटस्थ्येन प्रतिपद्यते, अपि तु हृदयसंवादात्मकसहृदयत्वबलात् पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मृत्यादिसोपानमनारुह्यैव तन्मयीभावोचितचर्वणाप्राणतया । न च सा चर्वणा प्राच्यप्रमाणान्तरगता, येनाधुना स्मृतिः स्यात् । न चात्र लौकिकप्रत्यक्षादिप्रमाणव्यापारः । किं त्वलौकिकविभावादिसंयोगबलोपनतैवेयं चर्वणा । सा च प्रत्यक्षानुमानागमोपमानादिलौकिकप्रमाणजनितरत्याद्यवबोधनस्तथा योगिप्रत्यक्षजतटस्थपरसंवित्तिज्ञानात् सकलवैषयिकोपरागशून्यशुद्धपरयोगिगतस्वानन्दैकघनानुभवाच्च विशिष्यते । एतेषां यथायोगमर्जनादिविघ्नान्तरोदयेन ताटस्थ्यहेतुकास्फुटत्वेन विषयावेशवैवश्येन च सौन्दर्यविरहात् । अत्र तु स्वात्मैकगतत्वनियमासंभवाच्च विषयावेशवैवश्यं, स्वात्मानुप्रवेशात् परगतत्वनियमाभावाच्च ताटस्थ्यास्फुटत्वम् । तद्विभावादि-

1 C, D ॰भ्यास एव पाटवा, E ॰भ्यास[म]थ पा॰. 2. A, E drop नुभावना. 3. A, B ॰योग्यं. 4. D, E प्राच्या. 5. E न तु कृतम् 6. A, B C, E ॰दितं. 7. E एषा. 8 D ताटस्थ्यस्फुटत्वम्.

स च न विभावादेः कार्यस्तद्विनाशेऽपि रससंभवप्रसङ्गात् । नापि ज्ञाप्यः सिद्धस्य तस्याभावात् । कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेन्न क्वचिद् दृष्टमित्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम् । विभावादीनां च समस्तानामभिव्यञ्जकत्वं न व्यस्तानाम्, व्यभिचारात् । व्याघ्रादयो हि विभावा भयानकस्येव वीराद्भुतरौद्राणाम्, अश्रुपातादयोऽनुभावाः करुणस्येव शृङ्गारभयानकयोः, चिन्तादयो व्यभिचारिणः करुणस्येव शृङ्गारवीरभयानकानाम् ।

साधारण्यवशसंप्रबुद्धोचितनिजरत्यादिवासनावेशवशाच्च न विघ्नान्तरादीनां संभवः ।

अत एव विभावादयो न निष्पत्तिहेतवो रसस्य, तद्बोधापगमेऽपि रससंभवप्रसङ्गात् । नापि ज्ञप्तिहेतवः, येन प्रमाणमध्ये पतेयुः । सिद्धस्य कस्यचित्प्रमेयभूतस्य रसस्याभावात् । तर्हि किमेतद्विभावादय इति । अलौकिक एवायं चर्वणोपयोगी विभावादिव्यवहारः । क्वान्यत्रेत्थं दृष्टमिति चेद् भूषणमस्माकमेतदलौकिकत्वसिद्धौ । पानकरसास्वादोऽपि किं गुडमरिचादिषु दृष्ट इति समानमेतत् । नन्वेवं रसोऽप्रमेयः स्यात् । एवं युक्तं भवितुमर्हति रस्यतैकप्राणो ह्यसौ न प्रमेयादिस्वभावः । तर्हि सूत्रे निष्पत्तिरिति कथम्, नेयं रसस्य, अपि तु तद्विषयाया रसनायाः । तन्निष्पत्त्या तु यदि तदेकायत्तजीवितस्य रसस्य निष्पत्तिरुच्यते तन्न कश्चिदत्र दोषः । सा च रसना न प्रमाणव्यापारो न कारकव्यापारः स्वयं तु नाप्रामाणिकी स्वसंवेदनसिद्धत्वात् । रसना च बोधरूपैव किं तु बोधान्तरेभ्यो लौकिकेभ्यो विलक्षणैव, उपायानां विभावादीनां लौकिकवैलक्षण्यात् । तेन विभावादिसंयोगाद् रसना यतो निष्पद्यते ततस्तथाविधरसनागोचरो लोकोत्तरोऽर्थो रस इति तात्पर्यं सूत्रस्य ।

अयमत्र संक्षेपः । मुकुटप्रतिशीर्षकादिना तावन्नटबुद्धिराच्छाद्यते । गाढप्राक्तनसंवित्संस्काराच्च काव्यबलानीयमानापि न तत्र रामधीर्विश्राम्यति । तत एवोभयदेशकालत्यागः । रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टास्तत्रावलोकिताः देशकालानियमेन रतिं गमयन्ति । यस्यां स्वात्मापि तद्वासनावत्त्वादनुप्रविष्टः । अत एव न तटस्थतया रत्यवगमः । न च नियतकारणतया, येनार्जनाभिष्वङ्गादिसंभावना । न च नियतपरात्मैकगततया येन दुःखद्वेषाद्युदयः । तेन साधारणीभूता संतानवृत्तेरेकस्या एव वा संविदो गोचरीभूता रतिः शृङ्गारः । साधारणीभावना च विभावादिभिरिति **श्रीमानभिनवगुप्ताचार्यः** । एतन्मतमेव **चास्माभिरु**पजीवितमिति ।

1. E °भूतरस°. 2. D, E drop from रति to °प्राधान्यकृतं (p. 104, line18).

यत्राप्येकैकस्योपादानं यथा --

केलीकन्दलितस्य विभ्रममधोर्धुर्यं वपुस्ते दृशो-
भंङ्गी भङ्गुरकामकार्मुकमिदं भ्रूर्नर्मकर्मक्रमः ।
आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्मासवः
सत्यं सुन्दरि वेधसस्त्रिजगतीसारं त्वमेकाकृतिः ॥ ९३ ॥

अत्र विभावानाम् ।

[अभिनवगुप्तस्य—लोचने पृ. २७७— अभिनवभारत्याम् पृ. २८६]

यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं दूनाब्जिनीनालवत् ।
दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥ ९४ ॥

अत्रानुभावानाम् ।

[भट्टेन्दुराजस्य—लोचने पृ. ८१ —अभिनवभारत्याम् पृ. २८६]

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किं चाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ९५ ॥

[अमरु० ४०]

**एकैकस्येति** । विभावानामनुभावानां व्यभिचारिणां वा प्रधानत्वेन विवक्षितानामित्यर्थः । व्यभिचारिणां च प्राधान्यं तद्विभावानुभावप्राधान्यकृत वेदितव्यम् । तत्र विभावप्राधान्ये व्यभिचारिणा प्राधान्य यथा—

आत्तमात्तमधिकान्तमुक्षितुं कातरा शफरशङ्किनी अहो ।
अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरलाञ्छितम् ॥ १६० ॥

[अभिनवभारत्याम् कलशकस्य (वा कालिदासस्य वा)]

1 I, L दृशो भङ्गीभङ्गुर°. Locana (p. 277), too, has the same reading as found in I, L. 2 Locana (p. 277) reads भ्रूनर्म°.

अत्रौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां व्यभिचारिणाम् । तंत्राप्येतेषामौचित्यादन्यतमद्वयाक्षेपकत्वमिति न व्यभिचारः ।

इत्यत्र सुकुमारमुग्धप्रमदाजनभूषणभूतस्य वितर्कत्रासशङ्कादे प्राधान्यं तद्विभावानां सौन्दर्यातिशयकृतां प्राधान्यात् । आत्तमित्याद्यर्पितानुभाववर्गस्तु तदनुयायी । अनुभावप्राधान्ये च तेषां प्राधान्यं '**दूराद्**' (श्लोक ९५)–इत्यादिनोदाहरिष्यते ।

**अन्यतमेति** । विभावापेक्षयानुभावव्यभिचारिणाम्, अनुभावापेक्षया विभावव्यभिचारिणां, व्यभिचार्यपेक्षया विभावानुभावाना चान्यतमत्वम् । तथा हि **कलीकन्दलित** (श्लोक ९३)–इत्यादौ विभावभूतस्य सौन्दर्यस्यानुगतत्वेन केलीविभ्रमभङ्गुरनर्मादिपदमहिम्नानुभाववर्गो भङ्गीक्रमविकारादिशब्दबलाच्च व्यभिचारिवर्गः प्रतिभाति ।

**यद्विश्रम्य** (श्लोक ९४)–इत्यादौ विश्रान्तिलक्षणस्तम्भविलोकनवैचित्र्यगात्रतानवतारतम्यपुलकवैवर्ण्यादेरनुभावस्यानुगतत्वेन विश्रम्येति बहुश इति प्रतिदिनमिति पदसमर्पितोऽभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिव्यभिचारिगण, कृश इत्यादिपदार्पितश्च विभावः प्रतिभाति । **दूरादुत्सुकम्** (श्लोक ९५)–इत्यादौ औत्सुक्यादेर्व्यभिचारिणोऽनुगतत्वेन दूरादित्यादिपदार्पित सहसा प्रसरणादिरूपोऽनुभावः प्रेयसीति विभावश्च प्रकाशत इति एवं द्वयप्राधान्ये सर्वप्राधान्ये चोदाहार्यम्, किं तु समप्राधान्य एव रसास्वादस्योत्कर्ष । तच्च प्रबन्ध एव भवति । वस्तुतस्तु दशरूपक एव । यदाह **वामनः**—(40) 'सदर्भेषु दशरूपकं श्रेय' 'तद्धि चित्रं चित्रपटवद्विशेषसाकल्यात्' । [काव्यालङ्कारसूत्र अधि. १, अ. ३, सू. ३० ३१] इति तद्रूपसमर्पणया तु प्रबन्धे भाषादिप्रवृत्तौचित्यादिकल्पनात् । तद्रूपजीवनेन मुक्तके । तथा च तत्र सहृदयाः पूर्वापरमुचितपरिकल्प 'इदमत्र वक्तास्मिन्नवसरे' इत्यादि बहुतरं पीठबन्धरूपं विदधते ।

1. P, S तथाप्ये. 2 A drops व्यभिचारिणाम्. 3. E drops वानुभा. 4 A drops आदि; E °मर्मादि°. 5. A, B, C, D भङ्गि°. 6. C, D, E स्तु. 7. D drops प्रतिभाति. 8. Abhinavabhāratī has भाषावेषप्रवृत्त्यौचित्यादिकल्पनात् (Vol I, p 287). 9. A, B, C, D तद्रूप°. 10. Abhınavabhāratī (Vol. I, p. 287) reads पूर्वापरं उचितं परिकल्प्य. 11. A drops from त्रत्र to पीठ.

रसभेदानाह

**२७) शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्ता नव रसाः ॥ २ ॥**

तत्र कामस्य सकलजातिसुलभतयात्यन्तपरिचितत्वेन सर्वान् प्रति हृद्यतेति पूर्वं शृङ्गारः । तदनुगामी च हास्यो निरपेक्षभावत्वात् तद्विपरीतस्ततः करुणः । ततस्तन्निमित्तमर्थप्रधानो रौद्रः । ततः कामार्थयोर्धर्ममूलत्वाद्धर्मप्रधानो वीरः । तस्य भीताभयप्रदानसारत्वादनन्तरं भयानकः । तद्विभावसाधारण्यसंभावनात् ततो बीभत्सः । इति ईयद्वीरेणाक्षिप्तम् । वीरस्य पर्यन्तेऽद्भुतः फलमित्यनन्तरं तदुपादानम् । ततस्त्रिवर्गात्मकप्रवृत्तिधर्मविपरीतनिवृत्तिधर्मात्मको मोक्षफलः शान्तः । एते नवैव परम्परासंकीर्णा रसाः । तेनार्द्रतास्थायिकः स्नेहो रस इत्यसत् । तस्य रत्यादावन्तर्भावात् । तथा हि—यूनो मित्रे स्नेहो रतौ, लक्ष्मणादेर्भ्रातरि स्नेहो धर्मवीरे, बालस्य मातापित्रादौ स्नेहो भये विश्रान्तः । एवं वृद्धस्य पुत्रादाविति द्रष्टव्यम् । तथा गर्धस्थायिकस्य लौल्यरसस्य हासे वा रतौ वाऽन्यत्र वान्तर्भावो वाच्यः । एवं भक्तावपि वाच्यम् ।

तत्र शृङ्गारमाह--

**२८) स्त्रीपुंसमाल्यादिविभावा जुगुप्सालस्यौग्र्यवर्ज्यव्यभिचारिका[1] रतिः संभोगविप्रलम्भात्मा शृङ्गारः ॥ ३ ॥**

**नवैवेति** । पुमर्थोपयोगित्वेन रञ्जनाधिक्येन चैषामेवोपदेश्यत्वादिति भावः । तस्येति स्नेहस्य । स्नेहो भक्तिर्वात्सल्यमिति हि रतेरेव विशेषाः । तुल्ययोर्या परस्परं रतिः स स्नेहः । अनुत्तमस्योत्तमे रतिः प्रसक्तिः । सैव भक्तिशब्दवाच्या । उत्तमस्यानुत्तमे रतिर्वात्सल्यम् । एवमादौ च विषये भावस्यैवास्वाद्यत्वमिति ।

**जुगुप्सालस्यौग्र्यवर्जित(वर्ज)व्यभिचारिणीति(व्यभिचारिकेति)।** जुगुप्सा स्थायिन्यपीह निषिद्धा न्यायसिद्धं स्थायिनामपि व्यभिचारित्वमनुज्ञापयति ।

1. I व्यभिचारका.

स्त्रीपुंसौ परस्परं तयोश्चोपयोगिनो माल्यर्तुशैलपुरहर्म्यनदीचन्द्रपवनोद्यानदीर्घिकाजलक्रीडादयश्च श्रूयमाणा अनुभूयमाना वा आलम्बनोद्दीपनरूपविभावा यस्याः सा, जुगुप्सालस्यौग्र्यवर्जितव्यभिचारिका समग्रविषयग्रामसमग्रयोः स्थिरानुरागयोः संप्रयोगसुखैषिणोः कामिनोर्यूनोः परस्परविभाविका द्वयोरप्येकरूपा प्रारम्भादिफलपर्यन्तव्यापिनी सुखोत्तरा आस्थाबन्धात्मिका रतिः स्थायीभावश्चर्वणागोचरं गता शृङ्गारो रसः।

देवमुनिगुरुनृपपुत्रादिविषया तु भाव एव न पुना रसः।

देवविषया यथा

यैः शान्तरागरुचिभिः परमाणुभिस्त्वं
निर्मापितस्त्रिभुवनैकललामभूत।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां
यत्ते समानमपरं न हि रूपमस्ति ॥ ९६ ॥

[भक्तामर० १२]

मुनिविषया यथा—

गृहाणि नाम तान्येव तपोराशिर्भवादृशः।
संभावयति यान्येव पावनैः पादपांसुभिः ॥ ९७ ॥

[काव्यादर्श १.८६]

आलस्यादि च स्वविभावप्रमदादिविषयमेव निषिद्धम्। तेन 'वपुरलसलसद्बाहु लक्ष्म्या' (वेणी० १.२) इति तथा—'कतिचिदहानि वपुरभूत केवलमलसेक्षणं तस्याः।' (विक्रमोर्वशीय ५.८) इत्यादि न विरुपकं मन्तव्यम्।

**प्रारम्भादीति।** एतेन अभिलाषमात्रसारायाः कामावस्थानुवर्तिन्या व्यभिचारिरूपाया रतेर्विलक्षणत्वमाह।

1. I °द्दीपनरूपा विभावा. L °द्दीपनविभावाद्रूपा. 2. P, L °व्यभिचारिणो. 3. P देवगुरुमुनि°. 4. L °विषयानुभाव. 5. S पांसुभिः.

अनुभावास्तु संभोगविप्रलम्भयोः प्रत्येकं वक्ष्यन्त इतीह नोक्ताः ।

संभोगविप्रलम्भात्मेति संभोगविप्रलम्भावात्मा न त्वात्मानौ यस्य स तथा तेन न शृङ्गारस्येमौ भेदौ गोत्वस्येव शाबलेयबाहुलेयौ, अपि तु तद्दशाद्वयेऽप्यनुयायिनी या रतिरास्थाबंधात्मिका तस्याः स्वाद्यमानं रूपं शृङ्गारः । सभोगविप्रलम्भयोस्तु शृङ्गारशब्दो ग्रामैकदेशे ग्रामशब्दवदुपचारात् । तथा हि विप्रलम्भेऽनवच्छिन्न एव संभोगमनोरथः, निराशत्वे तु करुण एव स्यात् । संभोगेऽपि न चेद् विरहाशङ्का तदा स्वाधीनेऽनुकूले चानादर एव स्यात्, वामत्वान्मनोभुवः ।

यदाह **मुनिः**—

(9) यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।
दुर्लभत्वं च यन्नार्याः कामिनः सा परा रतिः ॥
[नाट्यशास्त्र २२.२०७]

अत एव तद्दशाद्वयमीलन एव सातिशयश्चमत्कारः । यथा -

एकस्मिञ् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।

**वामाभिनि वेशित्वमिति** (41) 'मुल्भावमानी हि मदनः' (        ) इति तद्विद । तथा ह्यभिलष्यमाणं वस्तु प्राप्तं चेत् कोऽभिलाषः । तेन प्राप्त प्राप्तमप हारितमिव गते गत प्राप्तमिवेत्येवं परम्पराक्रमेण वर्धिष्णुरयं कामः परमां प्रीतिं तनोति । न ह्यत्र कण्डूयायामिव निवृत्तिः साध्या, अपि तु भोगात्मक सुखमिति रतिहेतुत्वाद् रतिः काम इत्यर्थः ।

1 P, S drop तु. 2. L तद्दशाद्वय. 3. In the Nāṭyaśāstra the fourth quarter runs as follows. सा कामस्य परा रतिः ॥

दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहम् ॥ ९८ ॥
[अमरु० २३]

सैषा विभावादिसामग्री वस्तुतः प्रबन्ध एव प्रथते । मुक्तकेषु तु काल्पनिक्येव ।

तत्र संभोगमाह

**२९) सुखमयधृत्यादिव्यभिचारी रोमाञ्चाद्यनुभावः संभोगः ॥४॥**

लज्जादीनिषिद्धान्यपीष्टानि दर्शनादीनि कामिनौ यत्र संभुङ्क्तः स संभोगः । स च सुखमयधृत्यादिव्यभिचारिरोचितो रोमाञ्चस्वेदकम्पाश्रुसखलास्खलनश्वसितसाध्वसकेशबन्धनवस्त्रसंयमनवस्त्राभरणमाल्यादिसम्यग्विवेशनविचित्रेक्षणचाटुप्रभृतिवाचिककायिकव्यापारलक्षणानुभावः । स च परस्परावलोकनालिङ्गनचुम्बनपानाद्यनन्तभेदः । यथा

**सैषेति** । क्षांपुन ऋतुमाल्यादिका प्रबन्ध एवेति **रत्नावल्यादौ** । ऋतुमाल्यादिर्हि विभाव आलम्बनोद्दीपनतयोभयरूपोऽपि सामस्त्येन शृङ्गारस्य विभावत्वेन मन्तव्यः । युक्तं चैतत, अन्यथैकत्रैव रूपके उद्यानर्तुमाल्यादीना सर्वेषां दर्शनाच्चैको रस स्यात, विभावभेदात ।

**काल्पनिकीति** । विभावादिवर्गस्य तावतस्तत्रानुसंधानं कल्प्यत इत्यर्थः ।

**सुखमयेति** । यद्यपि रतिश्रमकृतं निद्रादि संभोगेऽप्यस्ति, तथापि न तद् रतौ विश्रामाधायि, विप्रलम्भे तु तद् रतिविभावनापरम्परोदितमेवेति युक्तमेवात्र सुखमयत्वम् ।

1 I, L संभुक्तः　2 I कायिकमानसिक.　3 I drops स च.　4 I drops पाना.　5. A, B, C, D अन्यथा अत्रैव.　6. A, B, C, D कल्पत.　7. A, B °कृतं.　8. A drops from संभोगे to परम्परोदि (l. 19)　9. D, E रतिभावना°.

दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरा चुम्बति ॥ ९९ ॥
[ अमरु० १९ ]

विप्रलम्भमाह —

**३०) शङ्कादिव्यभिचारी संतापाद्यनुभावोऽभिलाषमानप्रवासरूपो विप्रलम्भः ॥ ५ ॥**

संभोगसुखास्वादलोभेन विशेषेण प्रलभ्यते आत्माऽत्रेति विप्रलम्भः । स च शङ्कौत्सुक्यमदग्लानिनिद्रासुप्तप्रबोधचिन्तास्मृत्याश्रमनिर्वेदमरणोन्मादजडताव्याधिस्वप्नापस्मारादिव्यभिचारी संतापजागरकार्श्यप्रलाप-

**दृष्ट्वैकासनेति** । एका निजत्वेन स्थिता । अपरा तत्सखी प्रच्छन्ना । कथमन्यथा एकासनसंगतिः । निमील्यमाननयना च न द्रष्ट्री । तत्त्वे हि प्रियतमे इति कथम् । क्रीडामनुबध्नाति यन्नयननिमीलनं तदेवापरनायिकाचुम्बनार्थं विहितं छलं येन स । चुम्बनार्थमीषद्वक्रितकंधरो मनाग्वालितग्रीवः । सपुलकः उत्पन्नसात्त्विकः प्रेमोल्लसन्मानसादौ सपत्नीवञ्चनाभिमान एव हेतुः ।

**शङ्केति** । दुःखप्रायव्यभिचारीत्यर्थः । मरणमचिरकालप्रत्यापत्तिमयमत्र विवक्षितम्, येन शोकोऽवस्थानमपि न लभते । यथा- 'तीर्थे तोयव्यतिकर' (पृ. १४४) इत्यादौ । अत एव सुकविना वाक्यभेदेनापि मरणं नाख्यातम् । प्रतीतिविश्रान्तिस्थानत्वपरिहाराय तृतीयपादेन च विभावानुसंधानं दर्शितम् । पुनर्ग्रहणेन स एवार्थः सुतरां द्योतितः । अथवा चैतन्यावस्थैव प्राणत्यागकर्तृतात्मिका पाशबन्धाद्यवसरगता मन्तव्या, न तु जीवितवियोगः, सुलभोदाहरणं चैतदिति । उन्मादापस्मारव्याधीनां या नात्यन्तं कुत्सिता दशा सा काव्ये प्रयोगे च दर्शनीया, कुत्सिता तु संभवेऽपि नेति **वृद्धाः** । **वयं** तु ब्रूमः — तादृश्यां दशायां स्वजीवितनिन्दात्मिकाया तद्देहोपभोगसागरत्यात्मकास्थाबन्धादि विच्छिद्यत एवेत्यसंभव एवेति ।

1. P सपुलकप्रमो°. 2. S °पुलका. 3 D, E वलित°. 4 शोकावस्थानमपि. 5 A, B, C, D जीवित°

क्षामनेत्रवचोवक्रतादीनसंचरणानुकारकृतिलेखलेखनवाचनस्वभावनिह्नववार्ताप्रश्नस्नेहनिवेदनसात्त्विकानुभवनशीतसेवनमरणोद्यमसंदेशाद्यनुभावास्त्रिधा, अभिलाषमानप्रवासभेदात्। करुणविप्रलम्भस्तु करुण एव। यथा—

हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम्।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः॥ १००॥

[कुमार० ४.९]

इत्यादि रतिप्रलापेषु।

तत्राभिलाषविप्रलम्भमाह —

३१) **दैवपारवश्याभ्यामाद्यो द्वेधा॥ ६॥**

आद्योऽभिलाषविप्रलम्भः। स दैवाद् यथा

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित्॥ १०१॥

[कुमार० ४.७५]

पारवश्याद् यथा -

स्मरनवनदीपूरेणोढा मुहुर्गुरुसेतुभि-
र्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः।

**स्मरेति**। स्मर एव नदीपूर प्रावृषेण्यप्रवाह सरभसमेव प्रबुद्धत्वात्[1]। तेन ऊढा परस्परसांमुख्यमबुद्धिपूर्वमेव नीता, अनन्तरं गुरव एव श्वश्रूप्रभृतयः सेतवः इच्छाप्रसरनिरोधकत्वात्। अथ च गुरवोऽलङ्घ्याः सेतवस्तैर्विधृताः प्रतिहतेच्छा अत एवापूर्णमनोरथास्तिष्ठन्ति[2], तथापि परस्परोन्मुखतालक्षणेनान्योन्यतादात्म्येन स्वदेहे सकलवृत्तिनिरोधाल्लिखितप्रायैरङ्गैर्नयनान्येव नलिनीनालानि तैरानीतं रसं परस्पराभिलाषलक्षणमास्वादयन्ति। परस्पराभिलाषात्मकदृष्टिच्छटामिश्रीकारयुक्त्यापि[3] कालमतिवाहयन्तीति।

1 Locana (p. 309) reads प्रवृद्धत्वात्.  2 A, B, C एव पूर्ण
3 D drops भिलाषा.

तदपि लिखितप्रस्थैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥ १०२ ॥

[ अमरु० १०४ ]

प्रतिज्ञाभङ्गभीत्याऽपि यो न सङ्गः कादम्बर्याश्चन्द्रापीडेन सोऽपि पारवश्यज एव ।

मानविप्रलम्भमाह—

**३२) प्रणयेर्ष्याभ्यां मानः ॥ ७ ॥**

प्रेमपूर्वको वशीकारः प्रणयस्तद्भङ्गे मान प्रणयमानः । स च स्त्रियाः पुंस उभयस्य वा । स्त्रिया यथा –

प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मृत-
त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् ।
नमितशिरसो गङ्गालोके तया चरणाहता-
ववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥ १०३ ॥

[ वाक्पतिराजदेव(श्रीमुञ्ज) ]

पुंसो यथा—

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद् गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥ १०४ ॥

[ उत्तररामचरित ३.३८ ]

उभयस्य यथा—

पणयकुविआण[1] दोण्ह वि अलिअपसुत्ताण[2] माणइत्ताणं ।
निच्चलनिरुद्धणीसासदिण्णकण्णाण को मल्लो ॥ १०५ ॥

[ गाथासप्तशती १.२७ ]

ईर्ष्यामानः स्त्रीणामेव यथा

1 P, I, L °याण 2 P, I, L °अलिय 3 S °ण.

संध्यां यत् प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे
धत्से यच्च नदीं विलज्ज शिरसा तच्चापि सोढं मया ।
श्रीर्जातामृतमन्थने यदि हरेः कस्माद्विषं भक्षितं
मा स्त्रीलम्पट मां स्पृशेत्यभिहितो गौर्या हरः पातु वः ॥ १०६ ॥

[ ]

प्रवासविप्रलम्भमाह—

३३) **कार्यशापसंभ्रमैः प्रवासः ॥ ८ ॥**

प्रवासो भिन्नदेशत्वम् । तत्र कार्यहेतुकः प्रवासो यथा—

याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानता
कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया ।
तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥ १०७ ॥

[ ]

शापहेतुकप्रवासे मेघदूतकाव्यमेवोदाहरणम् ।

संभ्रमो दिव्यमानुषविड्वरादुत्पातवातादिविप्लवात् परचक्रादिविप्लवाद् वा व्याकुलत्वम् । यथा- मकरन्दयुद्धसाहाय्यं कर्तुं गतस्य माधवस्य 'हा प्रिये हा मालति

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्
विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि ।
कलयसि कलितोऽहं वल्लभे देहि वाचं
भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥ १०८ ॥'

[ मालतीमाधव ८ १३ ]

हास्यमाह—

३४) **विकृतवेषादिविभावो नासास्पन्दनाद्यनुभावो निद्रादिव्यभिचारी हासो हास्यः ॥ ९ ॥**

1 S °गिल्ल. 2. I, L °विद्वरा°. 3 P, I, L मकरन्दे युद्ध°.

देशकालवयोवर्णवैपरीत्याद् विकृताः केशबन्धादयो वेषाः । 'आदि'-शब्दाद् नर्तनान्यगत्याद्यनुकरणासत्प्रलापभूषणादीनि विभावा यस्य सः, तथा नासौष्ठकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणाद्यनुभावो निद्रावहित्थत्रपालस्यादिव्यभिचारी हासः स्थायी चर्वणीयत्वमागतो हास्यः । स चोत्मस्थः परस्थश्च ।

तत्रात्मस्थमाह -

**३५) उत्तममध्यमाधमेषु स्मितविहसितापहसितैः स आत्मस्थस्त्रेधा ॥ १० ॥**

स इति हासः ।

यद् **भरतः**—

(10) ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमाना स्मितं भवेत् ॥
आकुञ्चिताक्षिगण्डं यत् सस्वनं मधुरं तथा[1] ।
कालागतं[3] सास्यरागं तद् वै विहसितं भवेत् ॥
अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च ।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥

[नाट्यशास्त्र ६. ५४, ५६, ५८

परस्थमाह --

**३७) एतत्संक्रमजैहसितोपहसितातिहसितैः परस्थोऽपि ॥ ११ ॥**

एतेषा स्मितादीनां संक्रान्त्या जातैर्यथासंख्येनोत्तमादिषु ।

**संक्रान्त्येति**[4] । परं हसन्तं दृष्ट्वा स्वय विभावानपश्यन्नपि हसँल्लोके दृष्टः । तथा विभावादिदर्शनेऽपि गाम्भीर्यादनुदितहासोऽपि परकीयहासावलोकने तत्क्षणं हासविवश संपद्यत एवेति । यथा अम्लदाडिमादिरसास्वादोऽन्यत्रापि दन्तोदक-

1. P, L S omit न 2. P यथा. 3. S कालगतं 4 D °पि.

यद् भरतः—

(11) उत्फुल्लाननेत्रं तु गण्डैर्विकसितैरथ ।
किंचिल्लक्षितदन्तं च हसितं तद्विधीयते ॥
उत्फुल्लनासिकं यत्तु जिह्मदृष्टिनिरीक्षितं ।
निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत् ॥
संरब्धसास्रनेत्रं च विक्रुष्टस्वरमुद्धतम् ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ॥
[ नाट्यशास्त्र ६. ५५, ५७, ५९. ]

तत्रात्मस्थो हासो यथा—

पाणौ कङ्कणमुत्फणः फणिपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कुटितकालकूटकुटिलो वस्त्रं गजेन्द्राजिनम् ।
गौरीलोचनलोभनाय सुभगो वेषो वरस्यैष मे
गण्डोल्लासविभावितः पशुपतेर्हास्योद्गमः पातु वः ॥ १०९. ॥
[ शृङ्गारतिलक ३.९. ]

परस्थो यथा

कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीडाहासः प्रियाहसितो हरिः ॥ ११० ॥
[ कवीन्द्रवचन० ४९., वैद्दोकस्य ]

विकारानुरूपदर्शनात संक्रमणस्वभाव., तथा हासोऽपि संक्रामति, नान्ये । यस्तु स्वामिशोकाद् भृत्यस्य शोक सोऽन्य एव, शोकवत्स्वामिविभावको[2] विभावभेदात् । इह च तद्विभावक एव हास्यः संक्रामतीत्यर्थः । स्मितं हि यदुत्तमप्रकृतौ तत् संक्रान्तं हसितं संपद्यते । एवं विहसितं मध्यमप्रकृतौ संक्रान्तमुपहसितम् । अपहसितमधमप्रकृतौ संक्रान्तमतिहसितमिति । स्मितस्य ईषत्तायां व्यपगतायां हसितं, ततो विशेषेण, ततोऽपि परस्य[3] समीपं गतम्, अन्यदपहसितमतिशयेन च, इत्युपसर्गभेदादेवार्थभेदः ।

1 P, S हसिते　2 A, B कोऽपि　3. C परस्परस.　4. A, B पहस्य.

करुणमाह—

**३७) इष्टनाशादिविभावो दैवोपालम्भाद्यनुभावो दुःखमय-व्यभिचारी शोकः करुणः ॥ १२ ॥**

इष्टवियोगानिष्टसंप्रयोगविभावो दैवोपालम्भनिःश्वासतानवमुखशोषणस्वरभेदाश्रुपातवैवर्ण्यप्रलयस्तम्भकम्पभूलुठनगात्रस्रसाक्रन्दाद्यनुभावो निर्वेदग्लानिचिन्तौत्सुक्यमोहश्रमत्रासविषाददैन्यव्याधिजडतोन्मादापस्मारालस्यमरणप्रभृतिदुःखमयव्यभिचारी चित्तवैधुर्यलक्षणः शोकः स्थायिभावश्चर्वणीयतां गतः करुणो रसः । यथा—

अयि जीवितनाथ जीवसि ॥ १११ ॥

[ कुमार० ४·३ ]

इत्यादि रतिप्रलापेषु ।

रौद्रमाह—

**३८) दारापहारादिविभावो नयनरागाद्यनुभाव औग्र्यादिव्यभिचारी क्रोधो रौद्रः ॥ १३ ॥**

दारापहारदेशजात्यभिजनविद्याकर्मनिन्दासत्यवचनस्वभृत्याधिक्षेपोपहासवाक्पारुष्यद्रोहमात्सर्यादिविभावो नयनरागभ्रुकुटीकरणदन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषताडनपाटनपीडनप्रहरणाहरणशस्त्रसंपातरुधिराकर्षणच्छेदनाद्यनुभाव औग्र्यावेगोत्साहविबोधामर्षचापलादिव्यभिचारी क्रोधः स्थायिभावश्चर्वणीयतां प्राप्तो रौद्रो रसः । यथा

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ ११२ ॥

[ वेणी० १·२१ ]

**चञ्चद्भुजेति ।** चञ्चद्भ्यां वेगावर्तमानाभ्यां भुजाभ्यां भ्रमिता येयं चण्डा दारुणा गदा तया योऽभितः सर्वत ऊर्वोर्घातस्तेन सम्यक् चूर्णितं पुन

1 E भ्रामिका

वीरमाह—

**३९) नयादिविभावः स्थैर्याद्यनुभावो धृत्यादिव्यभिचार्युत्साहो धर्मदानयुद्धभेदो वीरः ॥ १४ ॥**

प्रतिनायकवर्तिनयविनयासंमोहाध्यवसायबलशक्तिप्रतापप्रभावविक्रमाधिक्षेपादिविभावः स्थैर्यधैर्यशौर्यगाम्भीर्यत्यागवैशारद्याद्यनुभावो धृतिस्मृत्यौग्र्यगर्वामर्षमत्यावेगहर्षादिव्यभिचारी उत्साहः स्थायिभावश्चर्वणीयतां गतो धर्मदानयुद्धभेदात्त्रिधा वीरः । यथा

रनुत्थानोपहत कृतमूरुयुगलं युगपदेवोरुद्वयं यस्य त सुयोधनमनादृत्यैव स्त्यानेनावस्यान नया न तु कालान्तरशुष्कतयावनद्ध हस्ताभ्यामविचलद्रूपमत्यन्तमाभ्यन्तरतया घन न तु रसमात्रस्वभावं यच्छ्रोणित रुधिरं तेन शोणौ लोहितौ पाणी यस्य । अत एव स भीम कानरग्रामदायी । **तवेति** । यस्यास्तत्तदपमानजातं कृतं देव्यनुचितमपि, नस्यास्तव कचानुत्तंसयिष्यति उत्तंसवतः करिष्यतीति वेणीत्वमपहरन् करविच्युतशोणितशकलकैर्लोहितकुसुमापीडेनेव योजयिष्यतीत्युत्प्रेक्षा । तव देवीत्यनेन कुलकलत्रखलीकारस्मरणकारिणा क्रोधस्यैवोद्दीपनविभावत्वं कृतमिति नात्र शृङ्गारशङ्का कर्तव्या । सुयोधनस्य चानादरण द्वितीयगदाघातदानाद्यनुद्यम, स च संचूर्णितोरुत्वादेव । स्त्यानग्रहणेन द्रौपदीमन्युप्रक्षालने त्वरा सूचिता ।

**नयेति** । सन्ध्यादिगुणानां सम्यक् प्रयोगो नयः । इन्द्रियजयो विनय । असंमोहेनाध्यवसायो वस्तुतत्त्वनिश्चय इति मन्त्रशक्तिर्दर्शिता । हस्त्यश्वरथपादात बलम् । अवस्कन्दयुद्धादौ सामर्थ्यं शक्तिः । शत्रुविषये संतापकारिणी प्रसिद्धिः प्रताप । अभिजनधनमन्त्रिसंपत् प्रभावः । सामाद्युपायानामेकद्वित्रिचतुरादिभेदैर्यथाविषय नियोजनं वैशारद्यम् ।

**धर्मेति** धर्मादि त्रितयमनुभावात्मकं प्रतिनायकगतं तु विभावरूपमिति तद्भेदाद् वीरस्य त्रैविध्यमित्यर्थः । यदाह **भरतः—**

(42) 'दानवीरं धर्मवीरं युद्धवीरं तथैव च ।
रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि ॥' इति ।
[ नाट्यशास्त्र ६.७३ ]

1 Locana (p.210) reads 'नाड्यानतया 2. A, B 'पीटनैव. 3. D, E 'विषयसं'.

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥ ११३ ॥
[ काव्यादर्श २.२८४ ]

तत्र धर्मवीरो **नागानन्दे** जीमूतवाहनस्य । दानवीरः परशुराम-बलिप्रभृतीनाम् । युद्धवीरो **वीरचरिते** रामस्य ।

इह चापलपङ्कनिमग्नतां स्वल्पसंतोषं मिथ्याज्ञानं चापास्य यस्तत्त्वनिश्चयरूपोऽसंमोहाध्यवसायः स एव प्रधानतयोत्साहहेतुः । रौद्रे तु ममताप्राधान्यादशास्त्रितानुचिन्त्युद्धाद्यपीति मोहविस्मयप्राधान्यमिति विवेकः । भयानकमाह —

**४०) विकृतस्वरश्रवणादिविभावं करकम्पाद्यनुभावं शङ्कादिव्यभिचारि भयं भयानकः ॥ १५ ॥**

पिशाचादिविकृतस्वरश्रवणतदवलोकनस्वजनवधबन्धादि[1]दर्शनश्रवणशून्यगृहारण्यगमनादिविभावं करकम्पचलदृष्टिनिरीक्षणहृदयपादस्पन्दशुष्कौष्ठकण्ठत्वमुखवैवर्ण्यस्वरभेदाद्यनुभावं शङ्कापस्मारमरणत्रासचापलावेगदैन्यमोहादिर्व्यभिचारि स्त्रीनीचप्रकृतीनां स्वाभाविकमुत्तमानां कृतकं भयं स्थायिभावश्चर्वणीयत्वमागतं भयानको रसः । यथा—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्द्धावलीढैः श्रमवितमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ११४ ॥
[ शाकुन्तल १.७ ]

**स्त्रीनीचप्रकृतीनामिति ।** नोत्तममध्यमप्रकृतीनाम् । कृतकमिति । उत्तमा हि अन्तर्भयाभावेऽपि गुरुभ्यो राज्ञश्च भयं दर्शयन्ति । एवं हि सुतरामुत्तमत्व भवति । प्रभुभक्तत्वं चामात्यानां यथा 'स्वेच्छाकारी भीत एवास्मि' (रत्नावली १.७) इति ।

1. I स्वजनबन्धवधादि°.

ननु च राजादिः किमिति गुर्वादिभ्यः कृतकं भयं दर्शयति, दर्शयित्वा किमिति मृदून् करकम्पादीन् दर्शयति, किमिति च भय एव कृतकत्वमुक्तं, सर्वस्य हि कृतकत्वं संभवति—यथा वेश्या धनार्थिनी कृतकां रतिमादर्शयति। उच्यते। भये हि प्रदर्शिते गुरुर्विनीतं तं जानाति मृदुचेष्टिततया चाधमप्रकृतिमेनं न गणयति। कृतकरत्यादेश्चोपदिष्टात्र काचित् पुरुषार्थसिद्धिः। यत्र तु राजानः परानुग्रहाय क्रोधविस्मयादि दर्शयन्ति तत्र व्यभिचारित्वैव तेषां न स्थायितेति।

बीभत्समाह—

४१) **अहृद्यदर्शनादिविभावाङ्गसंकोचाद्यनुभावापस्मारादिव्यभिचारिणी जुगुप्सा बीभत्सः ॥ १५ ॥**

अहृद्यानामुद्भ्रान्तव्रणपूतिकृमिकीटादीनां दर्शनश्रवणादिविभावा अङ्गसङ्कोचहृल्लासनासामुखविकूणनाच्छादननिष्ठीवनाद्यनुभावा अपस्मारौग्र्यमोहगर्दादिव्यभिचारिणी जुगुप्सा स्थायिभावरूपा चर्वणीयतां गता बीभत्सः। यथा --

> उत्कृत्योत्कृत्य कृत्तिं प्रथममथपृथूच्छोफभूयांसि मासा-
> न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।
> आत्तस्नाय्वन्त्रनेत्रात् प्रकटितदशनः प्रेतरङ्कः करङ्का-
> दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ ११५ ॥
>
> [ मालतीमाधव ५.१६ ]

अद्भुतमाह—

४२) **दिव्यदर्शनादिविभावो नयनविस्ताराद्यनुभावो हर्षादिव्यभिचारी विस्मयोऽद्भुतः ॥ १६ ॥**

दिव्यदर्शनेप्सितमनोरथावाप्त्युपवनदेवकुलादिगमनसभाविमान-

---

**दिव्येति**। दिव्या गन्धर्वादयस्तेषां दर्शनम्। शक्यप्राप्तिरर्थ ईप्सित अशक्यप्राप्तिस्तु मनोरथः, तयोः प्राप्तिः। उपवने देवकुलादौ च गमन-

मायेन्द्रजालातिशायिशिल्पकर्मादिविभावो नयनविस्तारानिमिषप्रेक्षणरोमाञ्चाश्रुस्वेदसाधुवाददानहाहाकारचेलाङ्गुलिभ्रमणाद्यनुभावो हर्षावेगजडतादिव्यभिचारी चित्तविस्तारात्मा विस्मयः स्थायिभावश्चर्वणीयतां गतोऽद्भुतो रसः । यथा—

> कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया
> सत्यं कृष्ण क एवमाह मुशली मिथ्याम्ब पश्याननम् ।
> व्यादेहीति विकाशितेऽथ वदने माता समस्तं जगद्
> दृष्ट्वा यस्य जगाम विस्मयपदं पायात् स वः केशवः ॥ ११६ ॥

[ सुभाषितावल्यां चन्द्रकस्य (४०) ]

शान्तमाह

## ४३) वैराग्यादिविभावो यमाद्यनुभावो धृत्यादिव्यभिचारी शमः शान्तः ॥ १७ ॥

वैराग्यसमाग्भीरुत्वातत्त्वज्ञानवीतरागपरिशीलनपरमेश्वरानुग्रहादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृतिस्मृतिनिर्वेदमत्यादिव्यभिचारी

मद्भुतावभावो येन तत्रस्य सरःसंनिवेशादि न क्वचिद् दृष्टम् । सभा गृहविशेषः । विमानानि दिव्यरथाः । माया रूपपरिवर्तनादिका । इन्द्रजालं मन्त्रद्रव्यहस्तयुक्त्यादिनाऽसंभवद्वस्तुप्रदर्शनम् । साध्विति वदनं साधुवादः । दानं धनादेः । हाहाशब्दस्य करणं हाहाकारः । चेलस्य अङ्गुलेश्च भ्रमणमिति ।

**यमेति**। (43) अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ।

[ योगसूत्र २.३० ]

(44) शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ।

[ योगसूत्र २.३२ ]

1 I, L शिशुमुखं 2 I, L समग्र. 3 I यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो.
4 Abhinavabhāratī (Vol 1, p 324) reads सरःसंनिवेशादि. 5 D दिव्यहस्तयुक्तादिना. E द्रव्यहस्त्ययुक्तादिना.

तृष्णाक्षयरूपः शमः स्थायिभावश्चर्वणा प्राप्तः शान्तो रसः । यथा--

**तृष्णाक्षय इति** । तृष्णानां विषयाभिलाषाणां क्षये य आत्मस्वभावः स शमः । अयमर्थः—कालुष्योपरागदायिभिर्भयरत्यादिभिरनुपरक्तं यदात्मस्वरूपं तदेव विरलोऽसितरत्नान्तरालनिर्भासमानसिततरसूत्रवदाभातस्वरूपं रत्यादिषूपरञ्जकेषु तथाभावेनापि सकृद्विभातोऽयमात्मेति न्यायेन भासमानं परोन्मुखतात्मकसकलदुःखजालहीनं परमानन्दलाभसंविदेकघनं तथाविधहृदयसंवादवतो हृदयं विधत्ते ।

एतेन निर्वेदस्यामङ्गलप्रायत्वेऽपि व्यभिचारिषु **यद् मुनिना** प्रथममुपादानं कृतं तत् स्थायिताभिधानार्थमिति यदुक्तम्, तत् प्रतिक्षिप्तम् । तथा हि—कोऽयं निर्वेदो नाम, दारिद्र्यादिप्रभवस्तत्त्वज्ञानप्रभवो वा । तत्राद्यस्य शोकप्रवाहप्रसररूपचित्तवृत्तिविशेषस्य व्यभिचारित्वं वक्ष्यते । अथ तत्त्वज्ञानजो निर्वेदः स्थायी, तर्हि तत्त्वज्ञानमेवात्र विभावत्वेनोक्तं स्यात् । वैराग्यबीजादि तु कथं विभावः । तदुपायत्वादिति चेत् कारणकारणेऽयं विभावताव्यवहारः, स चातिप्रसङ्गावहः । किं च निर्वेदो नाम सर्वत्रानुपादेयताप्रत्ययो वैराग्यलक्षणः । स च तत्त्वज्ञानस्य प्रत्युतोपायः । विरक्तो हि तथा प्रयतते यथास्य तत्त्वज्ञानमुत्पद्यते । तत्त्वज्ञानाद्धि मोक्षो न तु तत्त्वं ज्ञात्वा निर्विद्यते । ननु तत्त्वज्ञानिनः सर्वत्र दृढतरं वैराग्यं दृष्टम् । भवत्ये (? त्वे) वम् । तादृशं तु वैराग्यं, 'ज्ञानस्यैव पराकाष्ठा' (व्यासभाष्य, योगसूत्र १·१६) इति न निर्वेदः स्थायीति ।

यत्तु व्यभिचारिव्याख्यानावसरे 'वृथा दुग्धोऽनड्वान्' (पृ. १३९) इत्यादौ चिरकालविभ्रमविप्रलब्धस्योपादेयत्वनिवृत्तये सम्यग्ज्ञानं वक्ष्यते, तन्निर्वेदस्य खेदरूपस्य विभावत्वेनेति । तस्मात् शम एव स्थायी ।

न च शमशान्तयोः पर्यायत्वमाशङ्कनीयम् । हासहास्ययोरिव सिद्धसाध्यतया लौकिकालौकिकतया साधारणासाधारणतया च वैलक्षण्यात् । यथा च कामादिषु पुरुषार्थेषु समुचिताश्चित्तवृत्तयो रत्यादिशब्दवाच्याः कविनटव्यापारेणास्वादयोग्यताप्रापणद्वारेण तथाविधहृदयसंवादवतः सामाजिकान् प्रति रसत्वं शृङ्गारादितया नीयन्ते, तथा मोक्षाभिधानपरपुरुषार्थोपचितापि शमरूपा चित्तवृत्ती रसतां नीयत इति ।

तथा हि तत्त्वज्ञानस्वभावस्य शमस्य स्थायिनः समस्तोऽयं लौकिकालौकिकचित्तवृत्तिकलापो व्यभिचारितामभ्येति । तदनुभावा एव च यमनियमाद्युपकृता

1. Abhinavabhāratī (Vol. I, p. 340) reads विरलोम्भित. विरलोऽसित is, obviously, incorrect. विरलासित might be the original reading. 2. E °शोक°. 3. D °षु. 4. C, D °र्थोपचितापि.

गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्येषु ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः शृङ्गकण्डूं विनेतुम् ॥ ११७ ॥

[ भर्तृहरि : वैराग्यशतक १८ ]

अनुभावाः, विभावा अपि परमेश्वरानुग्रहप्रभृतयः, प्रक्षयोन्मुखाश्च रत्यादयोऽत्रास्वाद्यन्ते । केवल यथा विप्रलम्भ औत्सुक्यं संभोगेऽपि वा 'प्रेमाऽसमाप्तोत्सवम्' (तापसवत्सराज १·१४) इति । यथा च रौद्र औग्र्यम्, यथा च करुणवीरभयानकाद्भुतेषु निर्वेदधृतित्रासहर्षा व्यभिचारिणोऽपि प्राधान्येनावभासन्ते, तथा शान्ते जुगुप्साया सर्वथैव रागप्रतिपक्षत्वात् । स्वात्मनि च कृतकृत्यस्य परमार्थघटनायामेवोद्यम इत्युत्साहोऽस्य परोपकारविषयेच्छाप्रयत्नरूपो दयापरपर्यायोऽभ्यधिकोऽन्तरङ्ग । अत एव केचिद् दयावीरत्वेन व्यपदिशन्त्यन्ये धर्मवीरत्वेन ।

ननूत्साहोऽहंकारप्राणः शान्तस्त्वहंकारशैथिल्यात्मक । ननु किमत., व्यभिचारित्व हि विरुद्धस्यापि नानुचितं, रताविव निर्वेदादे । 'शय्या शाड्वलम्' (पृ. २४४) इत्यादौ हि परोपकारकरणे उत्साहस्यैव प्रकर्षो लक्ष्यते, न तूत्साहशून्या काचिदप्यवस्था । ईच्छाप्रयत्नव्यतिरेकेण पाषाणतापत्तेः । यत एव च परिहृतपरापरत्वेन स्वात्मोद्देशेन कर्तव्यान्तरं नावशिष्यते, अत एव शान्तहृदयाना परोपकाराय शरीरसर्वस्वादिदानं न शास्त्रविरोधि । 'आत्मानं यो गोपायेत्' इत्यादिनाकृतकृत्यविषयं शरीररक्षणमुपदिश्यते, संन्यासिनां तद्रक्षादितात्पर्याभावात् । तथा हि—

(45) धर्मार्थकाममोक्षाणा प्राणाः संस्थितिहेतवः ।
तान्निघ्नता कि न हत रक्षता कि न रक्षितम् ॥ इति—

[ ]

अतिप्रसिद्धचतुर्वर्गसाधकत्वमेव देहरक्षाया निदानं दर्शितम् । कृतकृत्यस्य 'जलेऽग्नौ श्वभ्रे वा पतेन' इति संन्यासित्वे श्रवणात् । तद्यथाकथंचित्त्याज्यं

1 I हिमवति. 2 E. °न्येन विभा°. 3. Abhinavabhārati (Vol. I, p 337) reads तथा न जुगुप्सायाम । सर्वथैव रागप्रतिपक्षत्वात् । 4. E इच्छायत्न°. 5 The Gautamadharmasūtra (I. 9. 34) reads . सर्वत एवऽऽत्मानं गोपायेत् । 6. A drops कृत. 7 A, B कृतकृतस्य C, E कृतप्रेत्यस्य. 8. E °सित्वेन.

न चास्य विषयजुगुप्सारूपत्वाद् बीभत्सेऽन्तर्भावो युक्तः। जुगुप्सा ह्यस्य व्यभिचारिणी भवति न तु स्थायितामेति। पर्यन्तनिर्वाहे तस्या

शरीर, यदि परार्थे तत्त्यज्यते तत्किमिव न संपादित भवति। जीमूतवाहनादीना न यतित्वमिति चेत्, किं तेन। तत्त्वज्ञानित्व तावदवश्यमस्ति, अन्यथा परार्थे त्यागस्यासंभाव्यत्वात। युद्धेऽपि हि न वीरस्य देहत्यागायोद्यमः परावजयोद्देशेनैव प्रवृत्तः। भृगुपतनादावपि शुभतमदेहान्तरसंपिपादयिषैवाधिकं विजृम्भते। तत् स्वार्थानुद्देशेन परार्थसंपत्त्यै यद्यच्चेष्टितं देहत्यागपर्यन्तमुपदेशदानादि तत्सदलब्धात्मतत्त्वज्ञानानामसंभाव्यमेवेति तेऽपि तत्त्वज्ञानिनो 'ज्ञानिनां सर्वेष्वाश्रमेषु मुक्तिः' इति स्मार्ते श्रुतौ च। यथोक्तम्—

(46) देवार्चनरतस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धं कृत्वा ददद् द्रव्यं गृहस्थोऽपि हि मुच्यते॥ इति।

[　　　　]

केवल परार्थाभिसंधिज्ञानाद्धर्मात् परोपकारफलत्वेनैवाभिसंहितात् पुनरपि देहस्य तदुचितस्यैव प्रादुर्भावो बोधिसत्त्वाना तत्त्वज्ञानिनामपि। दृष्टश्चाङ्गेष्वपि विश्रान्तिलाभः, स्वभावौचित्यात। यथा रामस्य वीराङ्गे पितुराज्ञा परिपाल्यत। एवं शृङ्गाराद्यङ्गेष्वपि मन्तव्यम्। अत एव शान्तस्य स्थायित्वेऽप्यप्राधान्यम्। जीमूतवाहने त्रिवर्गसंपत्तेरेव परोपकृतिप्रधानायाः फलत्वात्। तदत्र सिद्धं दयालक्षणोऽप्युत्साहोऽत्र प्रधानम्। अन्ये तु व्यभिचारिणो यथायोगं भवन्तीति।

एव च यत् कैश्चिज्जीमूतवाहनस्य धीरोदात्तत्वं प्रतिष्ठितं [दशरूपक २·४-५] तत् प्रत्युक्तमेव। न च तदीया पर्यन्तावस्था व्यावर्णनीया येन सर्वचेष्टोपरमानुभावभावेनाप्रतीयमानता स्यात। शृङ्गारादेरपि हि फलभूमावव्यावर्णनीयतैव। पूर्वभूमौ तु

(47) प्रशान्तवाहिता संस्कारात्।

[योगसूत्र ३-१०]

(48) तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः।

[योगसूत्र ४-२७]

इति सूत्रद्वयनीत्या चित्राकारा यमनियमादिचेष्टा वा राज्यधुरोद्वहनादिलक्षणा वा शान्तस्यापि जनकादेर्दृष्टैवेत्यनुभावसद्भावाद् यमादिमध्यसंभाव्यमानभूयोव्यभि-

1. E drops ज्ञानिनो. 2. E °र्थाभिसंधिजाद्धर्मोपरो°; the Abhinavabhārati (p. 338) reads °र्थाभिसन्धिजाद्धर्मात्परो°. 3. Abhinavabhārati (Vol. I, p. 339) reads क्षणो ह्युत्साहो. 4. A, B, C व्यावर्तनीया. 5. A drops मानभूयोव्य.

मूलत एवोच्छेदात् । न च धर्मवीरे । तस्याभिमानमयत्वेन व्यवस्थानात् । अस्य चाहङ्कारप्रशमैकरूपत्वात् । तथापि तयोरेकत्वपरिकल्पने वीर-रौद्रयोरपि तथाप्रसङ्गः । धर्मवीरादीनां चित्तवृत्तिविशेषाणां सर्वाकार-महङ्काररहितत्वे शान्तरसप्रभेदत्वम्, इतरथा तु वीररसप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः । तदेवं परस्परविविक्ता नवापि रसाः । एषां क्रमेण स्थायिभावान् संगृह्णाति--

**४४) रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः ॥ १८ ॥**

भावयन्ति चित्तवृत्तय एवालौकिकवाचिकाद्यभिनयप्रक्रियारूढतया स्वात्मानं लौकिकदशायामनास्वाद्यमप्यास्वाद्यं कुर्वन्ति, यद् वा भावयन्ति व्याप्नुवन्ति सामाजिकानां मन इति भावाः, -- स्थायिनो व्यभिचारिणश्च । तत्र स्थायित्वमेतावतामेव ।

जात एव हि जन्तुरियतीभिः संविद्भिः परीतो भवति । तथा हि दुःखविद्वेषी सुखास्वादनलालसः सर्वो रिरंसया व्याप्त स्वात्मन्युत्कर्ष-

चारित्सद्भावाच्च प्रतीयत एव, न न प्रतीयते । ननु प्रतीयते, सर्वस्य तु श्लाघास्पदं न भवति । तर्हि वीतरागाणां शृङ्गारो न श्लाघ्य इति सोऽपि रसत्वाच्च्यवताम् । अयमर्थः---यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति, नैतावतासावलोक-सामान्यमहानुभावचित्तवृत्तिविशेषवत् प्रतिक्षेप्तुं शक्यः ।

ननु धर्मप्रधानोऽसौ वीर एव संभाव्यत इत्याशङ्क्याह---

**अभिमानमयत्वेनेति** । उत्साहो ह्यहमेवंविध इत्येवंप्राण इत्यर्थः ।

**अस्य चेति** । शान्तस्य ।

**तथापीति** । ईहामयत्वनिरीहत्वाभ्यामत्यन्तं विरुद्धयोरपीत्यर्थः । वीर-रौद्रयोस्तु धर्मार्थकामार्जनोपयोगित्वेन तुल्यरूपत्वादत्यन्तविरोधोऽपि नास्ति ।

**संगृह्णातीति** । संकलयति, न तु लक्षयति । शृङ्गारादिरसलक्षण एवं स्थायिस्वरूपस्य निरूपितत्वादिति भावः ।

1. I परिकल्पनेन 2 I दुःखद्वेषी. 3 D शृङ्गारो[ऽ]श्लाघ्य. 4. A, B, C, D °जनानुभाव°. 5. A, B, C, D शक्या. 6 E एवास्था°.

मानितया परमुपहसति, उत्कर्षापायशङ्कया शोचति, अपायं प्रति क्रुध्यति, अपायहेतुपरिहारे समुत्सहते, विनिपाताद् बिभेति, किंचिदयुक्ततयाभिमन्यमानो जुगुप्सते, तत्तत्स्वपरकर्तव्यवैचित्र्यदर्शनाद् विस्मयते। किंचिज्जिहासुस्तत्र वैराग्याच्छमं[1] भजते। न ह्येतच्चित्तवृत्तिवासनाशून्यः प्राणी भवति। केवलं कस्यचित् काचिदधिका[2] चित्तवृत्तिः काचिदूना। कस्यचिदुचितविषयनियन्त्रिता कस्यचिदन्यथा। तत् काचिदेव पुरुषार्थोपयोगिनीत्युपदेश्या। तद्विभागकृतश्चोत्तमप्रकृत्यादिव्यवहारः।

ये पुनरमी धृत्यादयश्चित्तवृत्तिविशेषास्ते समुचितविभावाभावाज्जन्ममध्ये न भवन्त्येवेति व्यभिचारिणः। तथा हि रसायनमुपयुक्तवतो ग्लान्यालस्यश्रमप्रभृतयो न भवन्त्येव। यस्यापि वा भवन्ति विभावबलात्तस्यापि हेतुप्रक्षये क्षीयमाणाः संस्कारशेषता नावश्यमनुबध्नन्ति[3]। रत्यादयस्तु संपादितस्वकर्तव्यतया प्रलीनकल्पा अपि संस्कारशेषतां नातिवर्तन्ते। वस्त्वन्तरविषयस्य रत्यादेरखण्डनात्। यदाह पतञ्जलिः[4]—

(21) "न हि चैत्र एकस्यां स्त्रियां रक्त[5] इत्यन्यासु विरक्तः।"

[व्यासभाष्य योगसूत्र २.४ (पृ. ६०)]

इत्यादि।

तस्मात् स्थायिरूपचित्तवृत्तिसूत्रस्यूता एवामी स्वात्मानमुदयास्तमयवैचित्र्यशतसहस्रधर्माणं प्रतिलभमानाः स्थायिनं विचित्रयन्तः प्रतिभासन्त इति व्यभिचारिण उच्यन्ते। तथा हि—ग्लानोऽयमित्युक्ते कुत इति हेतु[6]प्रश्नेनाऽस्थायितास्य सूच्यते। न तु राम उत्साहशक्तिमानित्यत्र

1. I प्रशम. 2 I °का भवति. 3. I °मुपबध्नन्ति. 4 The quotation (21) is, however, found in the commentary known as Vyāsabhāṣya. Abhinava Gupta, and after him Hemacandra cite the quotation with the remark यदाह पतञ्जलिः. Does it mean they regard the Bhāṣya as Svopajña? 5. I विरक्त. 6. Abhinavabhāratī (Vol I, p 283) reads °प्रश्नेन स्थायी सूच्यते।

हेतुप्रश्नमाहुः। अत एव विभावास्तत्रोद्बोधकाः सन्तः स्वरूपोपरञ्जकत्वं विदधाना रत्युत्साहादेरुचितानुचितत्वमात्रमावहन्ति, न तु तदभावे ते सर्वथैव निरुपाख्याः। वासनात्मना सर्वजन्तूनां तन्मयत्वेनोक्तत्वात्। व्यभिचारिणा तु स्वविभावाभावे नामापि नास्तीति।

तत्र परस्परास्थाबन्धात्मिका रतिः। चेतसो विकासो हासः। वैधुर्यं शोकः। तैक्ष्ण्यप्रबोधः क्रोधः। संरम्भः स्थैर्यमुत्साहः। वैक्लव्यं भयम्। संकोचो जुगुप्सा। विस्तारो विस्मयः। तृष्णाक्षयः शमः।

रसलक्षण एव स्थायिस्वरूपे निरूपिते पुनर्निर्देशः क्वचिदेषां व्यभिचारित्वख्यापनार्थः। तथा हि विभावभूयिष्ठत्वं एषां स्थायित्वम्, अल्पविभावत्वे तु व्यभिचारित्वम्। यथा रावणादावन्योन्यानुरागाभावाद् रतिर्व्यभिचारिणी। तथा गुरौ प्रियतमे परिजने च यथायोगं वीरशृङ्गारादौ रोषो व्यभिचार्येव। एवं भावान्तरेषु वाच्यम्। शमस्य तु यद्यपि क्वचिदप्राधान्यं, तथापि न व्यभिचारित्वं, सर्वत्र प्रकृतित्वेन स्थायितमत्वात्।

व्यभिचारिणो ब्रूते

**४५) धृतिस्मृतिमतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्यावहित्थशङ्काचापलालस्यहर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्मादमोहचिन्तामर्षत्रासापस्मारनिर्वेदावेगवितर्कासूयामृतयः स्थित्युदयप्रशमसन्धिशबलत्वधर्माणस्त्रयस्त्रिंशद्व्यभिचारिणः ॥१९॥**

**प्रकृतित्वेन स्थायितमत्वादिति।** रत्यादयो हि तत्तत्कारणान्तरोदयप्रलयोत्पद्यमाननिरुध्यमानवृत्तयः किञ्चित् कालमपेक्षकतया स्थायिरूपात्मभित्तिसंश्रयाश्च स्थायिन इत्युच्यन्ते। तत्त्वज्ञानं तु सकलभावान्तरभित्तिस्थानीयं सर्वस्थायिभ्यः स्थायितमं सर्वा रत्यादिकाः स्थायिचित्तवृत्तीर्व्यभिचारीभावयद् निसर्गत एव सिद्धस्थायिभावमिति।

1 I स्तत्र बोधकाः. 2 P तैक्ष्ण्य प्र. L तीक्ष्णः प्र° 3 I स्थैर्यानुत्साहः.

तत्र धृतिः संतोषः । स्मृतिः स्मरणम् । मतिरर्थनिश्चयः । व्रीडा चित्तसंकोचः । जाड्यमर्थाप्रतिपत्तिः । विषादो मनःपीडा । मद आनन्दसंमोहसंभेदः । व्याधिर्मनस्तापः । निद्रा मनःसंमीलनम् । सुप्तं निद्राया गाढावस्था । औत्सुक्यं कालाक्षमत्वम् । अवहित्थमाकारगुप्तिः । शङ्कानिष्टोत्प्रेक्षा । चापलं चेतोऽनवस्थानम् । आलस्यं पुरुषार्थेष्वनादरः । हर्षश्चेतःप्रसादः । गर्वः परावज्ञा । औग्र्यं चण्डत्वम् । प्रबोधो विनिद्रत्वम् । ग्लानिर्बलापचयः । दैन्यमनौजस्यम् । श्रमः खेदः । उन्मादश्चित्तस्य विप्लवः । मोहो मूढत्वम् । चिन्ता ध्यानम् । अमर्षः प्रतिचिकीर्षा । त्रासश्चित्तचमत्कारः । अपस्मार आवेशः । निर्वेदः स्वावमाननम् । आवेगः संभ्रमः । वितर्कः संभावना । असूयाऽक्षमा । मृतिर्म्रियमाणता । एते च स्थित्युदयप्रशमसन्धिशबलत्वधर्माणः ।

स्थितिर्यथा -

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
ना हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनी
सा चात्यन्तमगोचरं नयनयोर्यातेति[2] कोऽयं विधिः ॥ ११७ ॥

[ विक्रमोर्वशीय ४.२ ]

अत्र विप्रलम्भरससद्भावेऽपि इयति वितर्कस्थितिचमत्कारकृत आस्वादातिशयः ।

उदयो यथा -

याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया
निध्यातं परिवर्तनं पुनरपि प्रारब्धमङ्गीकृतम्[3] ।

1 I °दः चित्तविप्लवः. 2 P, L जातेति. 3. P प्रारब्धु°.

भूयस्तत्प्रकृतं कृतं च शिथिलक्षिप्तैकदोर्लेखया
तन्वङ्ग्या न तु पारितः स्तनभरो नेतुं प्रियस्योरसः ॥ ११८ ॥
[ अमरु० १५१ ]

अत्र मानस्योदयः ।

प्रशमो यथा –

दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्त्रव-
न्न्यग्भूतं बहिरासितं पुलकवत् स्पर्शे समातन्वति ।
नीवीबन्धवदागतं शिथिलतां संभाषमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥ ११९ ॥
[ अमरु० १६० ]

अत्र मानस्य प्रशमः ।

संधिर्यथा–

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥ १२० ॥
[ महावीरचरित २.२२ ]

अत्रावेगहर्षयोः सन्धिः ।

शबलत्वं यथा –

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतःस्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥ १२१ ॥
[ सुभाषितावल्यां कालिदासस्य (१३४३) ]

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलत्वम् ।

विविधमाभिमुख्येन स्थायिधर्मोपजीवनेन स्वधर्मार्पणेन च चरन्तीति व्यभिचारिणः । भावा इत्यनुवर्तते । संख्यावचनं नियमार्थं

1. S शिथिलं क्षि

तेनान्येषामत्रैवान्तर्भावः । तद् यथा—दम्भस्यावहित्थे, उद्वेगस्य निर्वेदे क्षुत्तृष्णादेर्ग्लानौ । एवमन्यदप्यूह्यम् । अन्ये त्वाहुः—एतावत्स्वेव सहचारिषु अवस्थाविशेषेषु प्रयोगे प्रदर्शितेषु स्थायी चर्वणायोग्यो भवति । एषां विभावानुभावानाह—

**४६) ज्ञानादेर्धृतिरव्यग्रभोगकृत् ॥ २० ॥**

ज्ञानबाहुश्रुत्यगुरुभक्तितपःसेवाक्रीडार्थलाभादिविभावा धृतिः संतोषः । सा च लब्धानामुपभोगेन नष्टानामननुशोचनेन च योऽव्यग्रो भोगस्तं करोति । तेनानुभावेन धृतिं वर्णयेदित्यर्थः । यथा—

वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
  सम इह परितोषे निर्विशेषा विशेषा ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
  मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥ १२२ ॥

[ भर्तृहरि : वैराग्यशतक ५३ ]

**४७) सदृशदर्शनादेः स्मृतिर्भ्रूक्षेपादिकृत् ॥ २१ ॥**

सदृशदर्शनस्पर्शनश्रवणाभ्यासप्रणिधानादिभ्यः सुखदुःखहेतूनां स्मरणं स्मृतिः । तां भ्रूक्षेपशिरःकम्पमुखोन्नमनशून्यावलोकनाङ्गुलीभङ्गादिभिर्वर्णयेत् । यथा—

**विभावानुभावानिति** । न तु व्यभिचारिणः । एवं हि तदास्वादे रसान्तरमपि स्यात् । यत्रापि च व्यभिचारिणि व्यभिचार्यन्तरं संभाव्यते—तद् यथा पुरूरवस उन्मादे वितर्कचिन्तादि [ विक्रमोर्वशीय, अङ्क ४ ]—तत्रापि रतिस्थायिभावस्यैव व्यभिचार्यन्तरयोगः । स केवलममात्यस्थानीयो नोन्मादेन कृतोपराग इति ।

1. I, L प्रयोगप्रदर्शिषु. 2. I, L drop च 3. I repeats some words from कः खलु युवा etc after सदृशदर्श. 4. A, B, C drop व्यभिचारिणि. 5. The Abhi Bhā.(Vol. I, p. 345) reads स्थानीयेनोन्मादेन.

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
 शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
 आ ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥ १२३ ॥

[हनुमन्नाटक ४.९]

**४८) शास्त्रचिन्तादेर्मतिः शिष्योपदेशादिकृत् ॥ २२ ॥**

शास्त्रचिन्तनोहापोहादिभ्योऽर्थनिश्चयो मतिः । तां शिष्योपदेशार्थविकल्पनसंशयच्छेदादिभिर्वर्णयेत् । यथा

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ १२४ ॥

[शाकुन्तल १.१९]

**४९) अकार्यकरणज्ञानादेर्व्रीडा वैवर्ण्यादिकृत् ॥ २३ ॥**

अकार्यकरणज्ञानगुरुव्यतिक्रमप्रतिज्ञाभङ्गादेश्चेतःसंकोचो व्रीडा । तां वैवर्ण्याधोमुखविचिन्तनभूविलेखनवस्त्राङ्गुलीयकर्णस्पर्शननखनिस्तोदनादिभिर्वर्णयेत् । यथा—

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि न चकार लज्जया ॥१२५॥

[कुमार० ८.११]

**५०) इष्टानिष्टदर्शनादेर्जाड्यं तूष्णींभावादिकृत् ॥ २४ ॥**

इष्टानिष्टदर्शनश्रवणव्याध्यादिभ्योऽर्थापत्तिर्जाड्यम् । तत्तूष्णींभावानिर्मिषनयननिरीक्षणादिभिर्वर्णयेत् । यथा—

एवमालि निगृहीतसाध्वसं शङ्करो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला नास्मरत् प्रमुखवर्तिनि प्रिये ॥ १२६ ॥

[कुमार० ८.५]

1 P, S °लीयकस्पर्श; L °लीयस्पर्श. 2. S drops तत्.

**५१) कार्यभङ्गाद् विषादः सहायान्वेषणमुखशोषादिकृत् ॥ २५ ॥**

उपायाभावनाशाभ्यां प्रारब्धस्य कार्यस्य भङ्गान्मनःपीडा विषादः। तं सहायान्वेषणोपायचिन्तनोत्साहविघातवैमनस्यादिना उत्तममध्यमानां मुखशोषजिह्वासृक्कलेहननिद्राश्वसितध्यानादिभिरधमानां वर्णयेत्। यथा—

व्यर्थं यत्र कपीन्द्रसख्यमपि मे क्लेशः कपीनां वृथा
प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वापि मे ॥ १२७ ॥

[ उत्तरराम० ३.४६ ]

**५२) मद्योपयोगान्मदः स्वापहास्यास्मरणादिकृत् ॥ २६ ॥**

मद्यपानादानन्दसंमोहयोः संगमो मदः। तं स्वापस्मितगानकिंचिदाकुलवाप्पस्खलद्गतिमञ्जुभाषणरोमोद्गमादिभिरुत्तमानां हास्यगीतिस्रस्ताकुलभुजक्षेपव्याविद्धकुटिलगत्यादिभिर्मध्यमानाम्, अस्मरणघूर्णनस्खलद्गमनरुदितछर्दितसन्नकण्ठनिष्ठीवनादिभिरधमानां वर्णयेत्। तथा च—

(13) उत्तमाधममध्येषु वर्ण्यते प्रथमो मदः।
द्वितीयो मध्यनीचेषु नीचेष्वेव तृतीयकः ॥ [ ]

यथा—

सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु।
गन्तुमुद्यतमकारणतः स्म द्योतयन्ति मदविभ्रममासाम् ॥ १२८ ॥

[ शिशुपाल० १०.१६ ]

**५३) विरहादेर्मनस्तापो व्याधिर्मुखशोषादिकृत् ॥ २७ ॥**

1. I हास्यगीत. 2. P व्याबद्धकुटिल°. L व्याविकुटिल°.

विरहाभिलाषादिभ्यो मनस्तापो व्याधिहेतुत्वाद् व्याधिः । तं मुख-शोषत्रस्ताङ्गतागात्रविक्षेपादिभिर्वर्णयेत् । यथा—

मनोरोगस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मा तातस्त्रातुं प्रभवति न चाम्बा न भवती ॥ १२९ ॥

[ मालतीमाधव २.१ ]

## ५४) क्लमादेर्निद्रा जृम्भादिकृत् ॥ २८ ॥

क्लमश्रममदालस्यचिन्तात्याहारस्वभावादिभ्यो मनःसंमीलनं निद्रा । तां जृम्भावदनगौरवशिरोलोलननेत्रघूर्णनगात्रमर्दोच्छ्वसितनिःश्वसितसन्न-गात्रताक्षिनिमीलनादिभिर्वर्णयेत् । यथा—

निद्रानिमीलितदृशो मदमन्थराणि
नाप्यर्थवन्ति न च यानि निरर्थकानि ।
अद्यापि मे मृगदृशो मधुराणि तस्या-
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥ १३० ॥

[ सुभाषितावल्याम् (३२८०) कलशकस्य ]

## ५५) निद्रोद्भवं सुप्तमुत्स्वप्नायितादिकृत् ॥ २९ ॥

निद्रोद्भवमित्यनेन निद्राया एव गाढावस्था सुप्तमित्याह । तदुत्स्व-प्नायितोच्छ्वसितनिःश्वसितस्वंमोहादिना वर्णयेत । यथा—

एते लक्ष्मण जानकीविरहितं मां खेदयन्त्यम्बुदा
मर्माणीव विघट्टयन्त्यलममी क्रूराः कदम्बानिलाः ।
इत्थं व्याहृतपूर्वजन्मचरितो यो राधया वीक्षितः
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः ॥ १३१ ॥

[ सदुक्तिकर्णामृते शुभाङ्कस्य ]

1 P, I, L गात्राणि 2 I बलीयानित L गरीयानित.

**५६) इष्टानुस्मरणादेरौत्सुक्यं त्वरादिकृत् ॥ ३० ॥**

इष्टानुस्मरणदर्शनादेर्विलम्बासहत्वमौत्सुक्यम् । तत् त्वरानिःश्वसितोच्छ्वसितकार्श्यमनःशून्यतादिगवलोकनरणरणकादिभिर्वर्णयेत् । यथा—

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धुं न संभावित एव तावत् करेण रुद्धोऽपि हि केशपाशः ॥ १३२ ॥
[ रघु० ७.६; कुमार० ७.५७ ]

**५७) लज्जादेरवहित्थमन्यथाकथनादिकृत् ॥ ३१ ॥**

लज्जाजैह्म्यभयगौरवादिभ्यो भ्रूविकारमुखरागादीनामाच्छादनकारिणी चित्तवृत्तिरवहित्थमवहित्था वा । न बहिःस्थं चित्तं येनेति पृषोदरादित्वात् । तदन्यथाकथनावलोकितकथाभङ्गकृतकधैर्यादिभिर्वर्णयेत् । यथा —

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ १३३ ॥
[ कुमार० ६.८४ ]

**५८) चौर्यादेः स्वपरयोः शङ्का पार्श्वविलोकनादिकृत् ॥३२॥**

चौर्यपारदार्यादेर्विरुद्धाचरणादनिष्टोत्प्रेक्षा शङ्का । सा च कदाचित् स्वस्मिन् यदा समापराधयोरात्मपरयोः परो राज्ञा दण्ड्यते । कदाचित् परस्मिन् यदा विकाराकुलतया कृतदोषत्वेन परः संभाव्यते । सा च पार्श्वविलोकनमुखौष्ठकण्ठशोषणगात्रप्रकम्पस्वरास्यवर्णभेदावगुण्ठनादिभिर्वर्ण्यते । स्वस्मिन् यथा -

दूराद्दर्वीयो धरणीधराभं यस्ताडकेयं तृणवद् व्यधूनोत् ।
हन्ता सुबाहोरपि ताडकारिः स राजपुत्रो हृदि बाधते माम् ॥१३४॥
[ महावीरचरित २.१ ]

1 L बद्ध. 2 I राज्ञादिना.

परस्मिन् यथा—समुद्रदत्तस्य नन्दयन्त्यामन्यानुरागशङ्का (      ), दुर्योधनस्य वा भानुमत्याम् (वेणी. २)।

**५९) रागादेश्चापलं वाक्पारुष्यादिकृत् ॥ ३३ ॥**

रागद्वेषमात्सर्यामर्षेर्ष्यादिभ्यश्चेतोनवस्थानं चापलम्। अविमृश्य कार्यकरणमिति[1] यावत्। तच्च वाक्पारुष्यनिर्भर्त्सनप्रहारवधबन्धादिभिर्वर्णयेत्। यथा—

कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम्।
रजोभिरन्तः परिवेशबन्धि लीलारविन्दं भ्रमयांचकार ॥ १३५ ॥
[रघु० ६.१३]

**६०) श्रमादेरालस्यं निद्रादिकृत् ॥ ३४ ॥**

श्रमसौहित्यरोगगर्भस्वभावादिभ्यः पुरुषार्थेष्वनादर आलस्यम्। तच्च निद्रातन्द्रासर्वकर्मविद्वेषशयनासनादिना वर्णयेत। यथा—

चलति कथंचित् पृष्टा यच्छति वाचं कदाचिदालीनाम्।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः ॥ १३६ ॥
[धनिकस्य, दशरूपकावलोके (प्र. ४ सू. २७)]

**६१) प्रियागमनादेर्हर्षो रोमाञ्चादिकृत् ॥ ३५ ॥**

प्रियागमनबन्धुहर्षदेवगुरुराजभर्तृप्रसादभोजनाच्छादनधनलाभोपभोगमनोरथावाप्त्यादिभ्यश्चेतःप्रसादो हर्षः। तं च रोमाञ्चाश्रुस्वेदनयनवदनप्रसादप्रियभाषणादिभिर्वर्णयेत्। यथा—

आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां[2]
गेहिन्या परितोषबाष्पसलिलामासज्य[3] दृष्टिं मुखे।

1 P कार्यकारणमिति. 2. P दुर्लङ्घताम्. 3 P परितोऽथ.

दत्त्वा पीलुशमीकरीरकवलान् स्वेनाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभागाग्रलग्नं रजः ॥ १३७ ॥
[ सुभाषितावल्यां (२०७५) अद्भुतपुण्यस्य ]

### ६२) विद्यादेर्गर्वोऽसूयादिकृत् ॥ ३६ ॥

विद्याबलकुलैश्वर्यवयोरूपधनादिभ्यः परावज्ञा गर्वः । तमसूयामर्षपारुष्योपहासगुरुलङ्घनाधिक्षेपनेत्रगात्रविकृत्यनुत्तरदानशून्यावलोकनाभाषणैर्वर्णयेत । यथा —

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥ १३८ ॥
[ महावीरचरित २.१० ]

### ६३) चौर्यादेरौग्र्यं वधादिकृत् ॥ ३७ ॥

चौर्यद्रोहासत्प्रलापादिभ्यश्चण्डत्वमौग्र्यं तद्वधबन्धताडननिर्भर्त्सनादिभिर्वर्णयेत् । यथा —

उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसंतानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंशान् ।
पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमान-
क्रोधाग्नेः कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥ १३९ ॥
[ महावीरचरित २.४८ ]

### ६४) शब्दादेः प्रबोधो जृम्भादिकृत् ॥ ३८ ॥

शब्दस्पर्शस्वप्नान्तस्वप्नजल्पननिद्राच्छेदाहारपरिणामादिभ्यो विनिद्रत्वं प्रबोधः । स जृम्भणाक्षिमर्दनभुजक्षेपाङ्गुलिस्फोटनशय्यात्यागग्रीवाङ्गवलनादिभिर्वर्ण्यते । यथा —

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा जृम्भणैः साङ्गभङ्गः ।

1 I स्वप्नान्तःस्व°.

नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानम्
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ १४० ॥

[ मुद्राराक्षस ३.२१ ]

६६) व्याध्यादेर्ग्लानिर्वैवर्ण्यादिकृत् ॥ ३९ ॥

व्याधिमनस्तापनिधुवनोपवासक्षुत्पिपासाध्वलङ्घननिद्राच्छेदातिपानतपोजराकलाभ्यासादिभ्यो बलापचयो ग्लानिस्ता वैवर्ण्यक्षामनेत्रकपोलोक्तिश्लथाङ्गत्वप्रवेपनदीनसंचारानुत्साहादिभिर्वर्णयेत् । यथा

किसलयमिव मुग्धं बन्धनाद् विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ १४१ ॥

[ उत्तररामः ३.५ ]

६५) दौर्गत्यादेर्दैन्यममृजादिकृत् ॥ ४० ॥

दौर्गत्यमनस्तापादिभ्योऽनौजस्यं दैन्यम् । तन्मृजात्यागगुर्वङ्गताशिरःप्रावरणादिभिर्वर्णयेत् । यथा

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां प्रेमप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतः परं न खलु तत् स्त्रीबन्धुभिर्याच्यते ॥ १४२ ॥

[ शाकुन्तल ४.१६ ]

६७) व्यायामादेः श्रमोऽङ्गभङ्गादिकृत् ॥ ४१ ॥

व्यायामाध्वगत्यादिभ्यो मनःशरीरखेदः श्रमः । सोऽङ्गभङ्गमर्दनमन्दक्रमास्यविकूणनादिभिर्वर्णयेत् । यथा—

1. P दर्श्यते

अलसलुलितमुग्धान्यध्वसंतापखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
मृदुमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ १४३ ॥

[ उत्तररामः १.२४ ]

**६८) इष्टवियोगादेरुन्मादोऽनिमित्तस्मितादिकृत् ॥ ४२ ॥**

इष्टवियोगधननाशाभिघातवातसन्निपातग्रहादिभ्यश्चित्तविप्लव उन्मादः। तमनिमित्तस्मितरुदितोत्कुष्टनृत्तगीतप्रधावितोपवेशनोत्थानासंबद्धप्रलापभस्मपांशूद्धूलननिर्माल्यचीरघटचक्रशरावाभरणादिभिर्वर्णयेत् । यथा—

हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।
संभावितैकदेशेन देयं यदभियुज्यते ॥ १४४ ॥

[ विक्रमोर्वशीय० ४.१७ ]

**६९) प्रहारादेर्मोहो भ्रमणादिकृत् ॥ ४३ ॥**

प्रहारमत्सरभयदैवोपघातपूर्ववैरस्मरणत्रासनादिभ्यश्चित्तस्य मूढत्वं मोहः । मोहस्य प्रागवस्थापि मोहशब्देनोच्यते । तं भ्रमणदेहघूर्णनपतनसर्वेन्द्रियप्रमोहवैचित्त्यादिभिर्वर्णयेत् । यथा

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ १४५ ॥

[ कुमार० ४.७३ ]

सुखजन्मापि मोहो भवति । यथा –

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्
तद्वासः श्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।

1 I गीतनृत्त. 2 I, S चीवर°. 3 In the corresponding text of the Nāṭyaśāstra (vol I, p.372) the reading is found to be घटकपाल. 4. P पूर्वसारण.

एतावत् सखि वेद्मि सांप्रतमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं तु किं कथमिति स्वल्पापि मे न स्मृतिः ॥१४६॥
[अमरु० १०१]

७०) दारिद्र्यादेश्चिन्ता संतापादिकृत् ॥ ४४ ॥

दारिद्र्येष्टद्रव्यापहारैश्वर्यभ्रंशादिभ्यो ध्यानं चिन्ता। सा च स्मृतेरन्या। असनाददनवत्, खेलनाद्गमनवच्च। तां संतापशून्यचित्तत्वकार्श्यश्वासाधोमुखचिन्तनादिभिर्वर्णयेत्। सा च वितर्कात् ततो वा वितर्क इति वितर्कात् पृथग्भवति चिन्ता। यथा —

पश्यामि तामित इतश्च पुरतश्च पश्चा-
दन्तर्बहिः परित एव विवर्तमानाम्।
उद्बुद्धमुग्धकनककाञ्जनिभं वहन्ती-
मासज्य तिर्यगपवर्तितदृष्टिवक्त्रम् ॥ १४७ ॥
[मालतीमाधव १.४०]

७१) आक्षेपादेरमर्षः स्वेदादिकृत् ॥ ४५ ॥

विद्यैश्वर्यबलाधिककृतेभ्य आक्षेपावमानादिभ्यः प्रतिचिकीर्षारूपोऽमर्षः। स च स्वेदध्यानोपायान्वेषणशिरःकम्पाधोमुखविचिन्तनादिभिर्वर्ण्यते। यथा—

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥ १४८ ॥
[वेणी० १.८]

७२) निर्घातादेस्त्रासोऽङ्गसंक्षेपादिकृत् ॥ ४६ ॥

निर्घातगर्जितभूपर्वतकम्पशिलोल्काशनिविद्युत्पातरक्षःस्थूलपशुकुष्ठादिभ्यश्चेतश्चमत्कृतिरूपस्त्रासो भयात् पूर्वापरविचारवतो भिन्न एव। सोऽङ्गसंक्षेपस्तम्भरोमोद्गमगद्गदप्रलयोत्कम्पनिःस्पन्दवीक्षितैर्वर्ण्यः। यथा—

परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥ १४९ ॥

## ७३) ग्रहादेरपस्मारः कम्पादिकृत् ॥ ४७ ॥

ग्रहभूतदेवयक्षपिशाचब्रह्मराक्षसशून्यारण्यश्मशानसेवनोच्छिष्टगमनधातुवैषम्यादेरावेशरूपोऽपस्मारः । तं कम्पितस्फुरितस्विन्न[1]धावितश्वसितभूमिपतनारावमुखफेनादिभिर्वर्णयेत् । अयं च प्राय आभासेष्वेव शोभते । यथा—

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ १५० ॥

[ शिशुपाल० ३.७२ ]

## ७४) रोगादेर्निर्वेदो रुदितादिकृत् ॥ ४८ ॥

रोगाधिक्षेपताडनदारिद्र्येष्टवियोगावमाननतत्त्वज्ञानादिभ्यः स्वावमाननारूपो निर्वेदः । स रुदितश्वसितानुपादेयतादिभिर्वर्ण्यते[2] । यथा—

**तत्त्वज्ञानादिभ्य** इति । चिरकालविभ्रमविप्रलब्धस्य उपादेयत्वनिर्णये यत् सम्यग्ज्ञानं तन्निर्वेदं जनयति, न त्वात्मस्वभाव, तस्य शान्तस्थायित्वेनोक्तत्वात् । यथा—

वृथा दुग्धोऽनड्वान् स्तनभरनता गौरिति चिरं
परिष्वक्तः षण्ढो युवतिरिति लावण्यरहितः ।
कृता वैडूर्याशा विकचकिरणे काचशकले
मया मूढेन त्वां कृपणमगुणज्ञं प्रणमता ॥ १६१ ॥ इति ॥

[ सुभाषितावली ४४९ ]

अयं च निर्वेदः स्वयं पुरुषार्थसिद्धये वा, उत्साहरत्यादिवदत्यन्तानुरञ्जनाय वा हासविस्मयादिवच्च प्रभवतीत्यन्यमुखप्रेक्षित्वाद्[3] व्यभिचार्येवेति ।

1. L खिन्न. 2. I, L वर्ण्यः. 3. A, B, C, D प्रेक्षितत्वाद्°.

किं करोमि क गच्छामि कमुपैमि दुरात्मना ।
दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः ॥ १५१ ॥

[ ]

## ७५) उत्पातादिभ्य आवेगो विस्मयादिकृत् ॥ ४९ ॥

उत्पातवातवर्षाग्निगजप्रियाप्रियश्रवणव्यसनादिभ्यः संभ्रम आवेगः । तं विस्मयावगुण्ठनच्छत्त्रश्रयणधूमान्ध्यत्वरितापसर्पणपुलकविलापसंनहनादिभिर्यथासंख्यं वर्णयेत् ।

**उत्पातवातेति ।** आदिशब्दः प्रत्येकमभिसंबध्यते । ततश्चोत्पातादेर्वातादेर्वर्षादेरग्न्यादेर्गजादेः प्रियश्रवणादेरप्रियश्रवणादेर्व्यसनादेश्च विभावादित्यर्थः । एवं विस्मयादिना अवगुण्ठनादिना च्छत्त्रश्रयणादिना धूमान्ध्यादिना त्वरितापसर्पणादिना पुलकादिना विलापादिना संनहनादिना चानुभावेनेति प्रतिपत्तव्यम् । तत्र उत्पातावेगः 'किं किं सिंह' (पृ० १४१-४२) इत्यादिना निदर्शितः । वातावेगो यथा

वाताहतं वसनमाकुलमुत्तरीयम् ॥ १६२ ॥ इत्यादि ।

[ ]

वर्षावेगो यथा -

देवे वर्षत्यशनपचनव्यापृता वह्निहेतो-
गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः ।
नीव्रप्रान्तानविरलजलान् पाणिभिस्ताडयित्वा
सर्पच्छत्रस्थगितशिरसो योषितः संचरन्ति ॥ १६३ ॥

[ ]

अग्न्यावेगो यथा 'क्षिप्तो हस्तावलग्नः' (पृ० १६४) इत्यादि ।

गजावेगो यथा—

स च्छिन्नबन्धद्रुतयुग्यशून्यं
भग्नाक्षपर्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥ १६४ ॥ [रघु० ५.४९]

प्रियदर्शनाद्यावेगो यथा -

एह्येहि वत्स रघुनन्दन पूर्णचन्द्र
चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम् ।

1 E दिछन्नश्र. 2. E संहननां. 3 C, E हेतो. 4 The corresponding reading found in the DR (p. 87) is नीध्र. 5. A, B नविरतजलान्. 6. E drops यथा.

तत्र उत्पातादावेगो यथा --

किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो
नैवेदृक्कोऽपि जीवोऽद्भुतमुपनिपतन् पश्य संग्राम एव ।

आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते ॥ १६५ ॥

[ महावीरचरित १.५५ ]

अप्रियदर्शनश्रवणावेगो यथा उदात्तराघवे---

चित्रमायः (ससम्भ्रमम् ।) भगवन् कुलपते रामभद्र, परित्रायतां परित्रायताम् । (इत्याकुलतां नाटयति ।) ' इत्यादि ॥ १६६ ॥

पुनश्चित्रमायः -

मृगरूपं परित्यज्य विधाय विकटं वपुः ।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥ १६७ ॥

रामः --

वत्सस्याभयवारिधेः प्रतिभयं मन्ये कथं राक्षसात्
त्रस्तश्चैष मुनिर्विरौति मनसश्चास्त्येव मे सम्भ्रमः ।
मा हासीर्जनकात्मजामिति मुहुः स्नेहाद् गुरुर्याचते
न स्थातुं न च गन्तुमाकुलमतेर्मूढस्य मे निश्चयः ॥ १६८ ॥

[ उदात्तराघवे ]

व्यसनं राजविद्रवादि, तद्धेतुरावेगो यथा--

आगच्छागच्छ, शस्त्रं कुरु, वरतुरगं संनिधेहि द्रुतं मे
खड्गः क्वासौ, कृपाणी(णी)मुपनय, धनुषा किं किमङ्गप्रविष्टे(ष्टम्) ।
संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योन्यमेवं प्रतीत्य
नादः स्वप्नाभिदृष्टे त्वयि चकितदृशां विद्विषामाविरासीत् ॥ १६९ ॥

[ धनिकस्य—दशरूपके (प्र ४ मृ २८) ]

1. I उत्पातावेगो. 2 The DR (p 187) reads चित्रमय 3 Cf f. n 2, *supra*. 4. E याचिते. 5. A, B, C, E विद्रवादि, which is obviously incorrect. The correct reading must be विद्रवादि. Cf DR (p 87) from where this verse is taken 6. A, B drop गच्छ. 7. The reading in the DR is found to be सज्ज: 8. A, B, C, D कृपानी ' E कृपाणा°.

शस्त्रं शस्त्रं न शस्त्री त्वरितमहह हा कर्कशत्वं नखानाम्
इत्थं दैत्याधिनाथो निजनखकुलिशैर्येन भिन्नः स पायात् ॥ १५२ ॥
[ कवीन्द्रवचन० ४० ]

एवं वातावेगादिषूदाहार्यम् ।

## ७६) संदेहादेर्वितर्कः शिरःकम्पादिकृत् ॥५०॥

संदेहविमर्शविप्रतिपत्त्यादिभ्यः संभावनाप्रत्ययो वितर्कः । स शिरःकम्पभ्रूक्षेपसंप्रधारणकार्यकलापमुहुर्ग्रहणमोक्षणादिभिर्वर्ण्यः । यथा—

अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः ।
इत्यसंभाव्यमथ वा विचित्रा वस्तुशक्तयः ॥ १५३ ॥
[ ]

## ७७) परोत्कर्षादेरसूयावज्ञादिकृत् ॥ ५१ ॥

परस्य सौभाग्यैश्वर्यविद्यादिभिरुत्कर्षाद्वादिशब्दादपराधमुहुर्द्वेषादिभ्यश्चाक्षमारूपासूया । तामवज्ञाभ्रुकुटिक्रोधमेर्प्योक्त्यालोकितदोषापवर्णनादिभिर्वर्णयेत् । यथा –

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।

**संदेहेति** । संदेहः किंस्विदित्युभयावलम्बी प्रत्ययः संशयरूपः । विमर्शो विशेषप्रतीत्याकाङ्क्षात्मिका इच्छा । बाधकप्रमाणेन पक्षान्तराभावप्रतीतिमात्रं विप्रतिपत्तिरित्याहुः । एभ्योऽनन्तरं भवितव्यताप्रत्ययस्वभावः एकतरपक्षाशैथिल्यदायी पक्षान्तरतुल्यकक्षभावाच्च्यावयन्नुन्मज्जनामन्यस्य दर्शयंस्तर्कः । स च संशयात् पृथगेव । संदेहेन तत्त्वबुभुत्सादिरूपस्य विमर्शादेः स्वीकारेऽपि कविशिक्षार्थं भङ्ग्य निरूपणम् । अन्ये तु—

(49) "धर्मिणि संदेहो धर्मे तु विमर्शो भ्रान्तिज्ञानं विप्रतिपत्तिः" इत्याहुः । [ ]

1 I संभवनीय. L drops from संभावना to वर्ण्यः 2 D, E संशयः रूपविमर्शः. 3. A, B, C drop रित्याहुः 4 E एभ्यो. 5 पक्षात.

यानि त्रीणि कुतोमुखान्यपि पदान्यासन् खरायोधने
　　यद् वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ १५४ ॥
[ उत्तररामः ५.३५ ]

**७८) व्याध्यभिघाताभ्यां मृतिर्हिक्काकार्श्यादिकृत् ॥ ५२ ॥**

व्याधिर्जरादिः प्रतीतः, सर्पविषशस्त्रगजादिसंभवोऽभिघातस्ताभ्यां मृतेः प्रागवस्था मृतिः । साक्षान्मृतावनुभावाभावात् । तत्र व्याधिजां मृतिं हिक्काश्वासाङ्गभङ्गाक्षिमीलनाद्यैः, अभिघातजां तु कार्श्यवेपथुदाहहिक्काफेनाङ्गभङ्गजडतामरणादिभिर्वर्णयेत् । यथा—

स गतः क्षितिमुष्णशोणितार्द्रा खुरदंष्ट्राग्रनिपातदारिताश्मा
　　असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे ॥ १५५ ॥
[ किरात० १३.३१ ]

शृङ्गारे तु मरणाध्यवसायो मरणादूर्ध्वं झटिति पुनर्योगो वा निबध्यते । अन्यत्र तु स्वेच्छा । यथा—

संप्राप्तेऽवधिवासरे क्षणममुं तद्वर्त्मवातायनं
　　वारंवारमुपेत्य निष्क्रियतया निश्चित्य किंचिच्चिरम् ।
संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभ्यः शिशो-
　　र्माधव्याः सहकारकेण करुणः पाणिग्रहो निर्मितः ॥ १५६ ॥
[ ]

---

**प्रागवस्थेति ।** म्रियमाणावस्थैव अनेन व्याधिना मे न निवर्तितव्यमित्येवंविधचित्तवृत्तिरूपा ।

**कार्श्येति ।** अष्टौ हि विषवेगा. । यदाह **भरतः**—

(50) कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुं तथा ।
　　दाहं तृतीये हिक्कां च चतुर्थे संप्रयोजयेत् ॥
　　फेनं च पञ्चमे कुर्यात् स्यात् षष्ठे स्कन्धभञ्जनम् ।
　　जडतां सप्तमे कुर्यादष्टमे मरणं तथा ॥
[ नाट्यशास्त्र ७.७९–८० ]

1 P, I, L व्याधे°.

तथा

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ १५७ ॥

[रघु० ८.९५]

अथ सात्त्विकानाह

७९) **स्तम्भस्वेदरोमाञ्चस्वरभेदकम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः ॥ ५३ ॥**

सीदत्यस्मिन्मन इति व्युत्पत्तेः सत्त्वगुणोत्कर्षात् साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वं, तत्र भवाः सात्त्विकाः । भावा इति वर्तते । ते च प्राणभूमिप्रसृतरत्यादिसंवेदनवृत्तयो बाह्यजडरूपभौतिकनेत्रजलादिविलक्षणाः

आदिग्रहणात् सहसाभूमिपतनविकम्पनस्फुरणादयो ज्ञेयाः ।

**प्राणभूमीति ।** अयं भावः । रत्यादयश्चित्तवृत्तिविशेषाः पूर्वं संविद्रूपाः समुल्लसन्ति । ततः आभ्यन्तरप्राणान् ते स्वरूपाध्यासेन कलुषयन्ति । न चैतदसंवेद्यम् । तथा हि क्रोधावेशे अन्तरा ज्वलनेव पूर्वमुन्मिषति ततः स्वेदः । अनेनैवाशयेन **भट्टबाणेनो**क्तम् –

(51) 'पूर्वं तपो गलति पश्चात् स्वेदसलिलम्' इति ।

[हर्षचरित १, पृ. १३]

तथा तदवस्थाप्राप्तोऽपि बाह्यस्थादिना भावो बहिर्विकारपर्यन्ततामप्राप्ते परिरक्ष्यमाणोऽपि लोके दृष्टः । यथा—

पिअमुहसमकदसणचलिअ रसाअर पिआहिअअ ।
गरुअकमसम्भिमसंअमुहपसर पि हु ण ठाइ ॥ १७० ॥

[ ]

1 P drops तथा 2 S drops अथ to ह 3 A omits ज्ञेया . 4 A, B आभ्यतरप्राणान्तरूपणा . C, E आभ्यतर प्राण ते स्वरूपा० 5 A, B क्रोधावसरे 6 C पर्यन्ताप्राप्ते 7 E ह्रिअय.

विभावेन रत्यादिगतेनैवातिचर्वणागोचरेणाहता अनुभावैश्च गम्यमाना भावा भवन्ति । तथा हि पृथ्वीभागप्रधाने प्राणे संक्रान्तश्चित्तवृत्तिगणः स्तम्भो विष्टब्धचेतनत्वम् । जलभागप्रधाने तु बाष्पः । तेजसस्तु प्राणनैकट्यादुभयथा तीव्रातीव्रत्वेन प्राणानुग्रह इति द्विधा

प्रियमुखदर्शनेन रतिविषये सादरं सत् प्रियाहृदयं चलितं गुरुविषयं मा सकमीदिति निरुद्धस्वेदप्रभृति बाह्यप्रसरमपि न विश्राम्यति, आन्तरस्वेदादि सात्त्विकक्षोभमयमेवेत्यर्थः । निदर्शनं चात्र प्रतीयमानम् । तथा हि— प्रियं मुखं यस्य तादृशस्य शशाङ्कस्य दर्शने आहृदयमपि चलितो रयी वेगवान्सागरो गुरुणा सेतुना रुद्धा सेकप्रारम्भकाः प्रसरा यस्य तादृशोऽपि स्खल्वित्याश्चर्यं न तिष्ठति न निस्तरङ्गीभवति । सागरशब्द उभयलिङ्गः । प्राकृतं वा लिङ्गविपर्यासः । तदत्र रतिर्मनोऽल्पत्वादन्युता बाह्यभौतिकविकारपर्यवसायिना च न जातेति प्राणभूमावेव विश्रान्ता वर्णिता ।

**रत्यादिगतेनैवेति ।** न तु विभावान्तरेण, तेषां बाह्यविषयविशेषाभिमुख्यनिरपेक्षत्वादित्यर्थः । ग्लान्यालस्यश्रममूर्छादीनां तु यद्यप्यालम्बनविषयशून्यता, तथापि बाह्यहेतुकाः सन्तो व्यभिचारिषु गणिता[1] । अबाह्यहेतुकास्तु स्तम्भादय इति सात्त्विकाः ।

**स्तम्भो विष्टब्धचेतनत्वमिति ।** मनसा हर्षादिपरवशेनानिन्द्रियप्रदेशचारिणा विकल्पपर्यन्तनागमनरहितानिर्विकल्पकबहिर्वृत्तिमात्रानिष्ठानामिन्द्रियाणामनधिष्ठानादित्यर्थः । यथा–

> तं ताण हयच्छायं णिच्चललोअणसिहं पउत्थपयावं[5] ।
> आलिक्खपईवाण व णिययं पयइचडुलत्तणं पि विअलिअं ॥ १७० ॥
>
> [ सेतुबन्ध २.४५ ]

एव बाष्पहेतुत्वाद् बाष्पो यथा—

> उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
> बाष्पं कुरु स्थिरतया विहितानुबन्धम् ।
> अस्मिन्नलक्षितनतोन्नतभूमिभागे
> मार्गे पदानि खलु ते विषमीभवन्ति ॥ १७१ ॥
>
> [ शाकुन्तल ४.१४ ]

**तीव्रातीव्रत्वेनेति ।** तीव्रत्वेन प्राणानुग्रहस्वेदो यथा —

1. C बाह्या. 2 C, E `का अतो. 3. E गुणिता. 4. C, E पर्यन्तागमन.
5 A, B, C, D पया; E वायं. The reading as found in the N. S. edition of the Setubandha is °पयावं and adopted here

स्वेदो वैवर्ण्यं च । तद्धेतुत्वाच्च तथा व्यवहारः । आकाशानुग्रहे गतचेतनत्वं प्रलयः । वायुस्वातन्त्र्ये तु तस्य मन्दमध्योत्कृष्टावेशात् त्रेधा रोमाञ्चवेपथुस्वरभेदभावेन स्थितिरिति **भरतविदः** ।

आश्लेषे प्रथमं क्रमादथ जिते हृद्येऽधरस्यार्पणे
केलिद्यूतविधौ पणं प्रियतमे कान्ता पुनः पृच्छति ।
सान्तर्हासनिरुद्धसम्भ्रमरसोद्भिदुरस्फुरद्गण्डया
तूष्णीं शारिविसारणाय[1] निहितः स्वेदाम्बुगर्भः करः ॥ १५२ ॥
[ ]

धर्मान्तरेण तु वैवर्ण्यं यथा
सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ १५३ ॥
[रघुवंश ६.६७]

**प्रलय इति** प्रकर्षेण प्राणानां लीनानामिन्द्रियेषु लयः प्रलयः । यथा - 'तीव्राभिषङ्गप्रभवेण -' (पृ. १३७) इति ।

**तस्येति** । प्राणस्य ।

**मन्देति** । प्राणस्य मन्दावेशाद् **रोमाञ्चो** यथा -

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयो-
स्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।
पाणिभ्यां च तिरस्कृतः सपुलकः[2] स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा यत् कञ्चुके संधयः ॥ १५४ ॥
[अमरु० ११]

मध्यावेशाद् **वेपथुर्यथा**
मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं सखि न भाजनमीदृशानां
वैरी न चेद् भवति वेपथुरन्तरायः ॥ १५५ ॥
[ ]

उत्कृष्टावेशात् **स्वरभेदो** यथा 'याते द्वारम(?व)तीम् -'(पृ. ११३)इति ॥

1 A शारीविस्मारणाय. B शारिविसारणाय. 2 E सपूर्णं.

बाह्यास्तु स्तम्भादयः शरीरधर्मा अनुभावाः । ते चान्तरालिकान् सात्त्विकान् भावान् गमयन्तः परमार्थतो रतिनिर्वेदादिगमका इति स्थितम् । एवं च नव स्थायिनस्त्रयस्त्रिंशद् व्यभिचारिणोऽष्टौ सात्त्विका इति पञ्चाशद्भावाः । रसभावानभिधाय तदाभासानाह --

**८०) निरिन्द्रियेषु तिर्यगादिषु चारोपाद् रसभावाभासौ ॥ ५४ ॥**

निरिन्द्रिययोः संभोगारोपणात् संभोगाभासो यथा -

पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालौष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ १५८ ॥

[कुमार ३.३०]

विप्रलम्भारोपणाद् विप्रलम्भाभासो यथा

वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिः शीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ १५९ ॥

[मेघदूत ( पूर्व ) २९]

भावाभासो यथा ---

गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।
अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥ १६० ॥

तिरश्चोः संभोगाभासो यथा --

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ १६१ ॥

[कुमार० ३.३६]

एते च सात्त्विकाः प्रतिरसं संभवन्तीति राजानुगतविवाहप्रवृत्तभृत्यन्यायेनापि व्यभिचारिवच्च स्वातन्त्र्यगन्धमपि भजन्त इति सुलभोदाहरणत्वाच्च वृत्तौ[1]-- उदाहरणानि न प्रदर्शितानि ॥

1. E puts न before वृत्तौ

यथा च—

दद‍ौ सरःपङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥ १६२ ॥
[ कुमार० ३.३७ ]

विप्रलम्भाभासो यथा—

आपृष्टासि व्यथयति मनो दुर्बला वासरश्री-
रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि ।
नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवाशक्तस्तदिह भवतीमस्वतन्त्रस्त्यजामि ॥ १६३ ॥

यथा वा—

नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात् सरसः करोति कवलानावर्जितैः शैवलैः ।
दानास्वादि(१द)निषण्णमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥ १६४ ॥

भावाभासो यथा—

त्वत्कटाक्षावलीलीला विलोक्य सहसा प्रिये ।
वनं प्रयात्यसौ व्रीडाजडदृष्टिर्मृगीजनः ॥ १६५ ॥

आदिशब्दान्निशाचन्द्रमसोर्नायकत्वाध्यारोपात् संभोगाभासो यथा—

अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ १६६ ॥
[ कुमार० ८.६३

1 S 'युक्तेन

भावाभासो[1] यथा—

त्वदीयं मुखमालोक्य लज्जमानो निशाकरः ।
मन्ये घनघटान्तर्धिं समाश्रयति सत्वरः ॥ १६७ ॥
[ ]

रसाभासस्य भावाभासस्य[2] च समासोक्त्यर्थान्तरन्यासोत्प्रेक्षारूपकोपमाश्लेषादयो जीवितम् ।

८१) अनौचित्याच्च ॥ ५५ ॥

अन्योन्यानुरागाद्यभावेनानौचित्याद् रसभावाभासौ । रसाभासो यथा—

दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुति
चेतः कालकलामपि प्रसहते नावस्थितिं तां विना ।
एतैराकुलितस्य विक्षततरैरङ्गैरनङ्गातुरैः
संपद्येत कथं तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम् ॥ १६८ ॥
[ ]

अत्र सीताया रावणं प्रति रत्यभावाद् रसाभासः ।

**रसाभास इति ।** परस्परास्थाबन्धात्मिकाया हि रतेः शृङ्गारत्वमुक्तम् । अत्र तु कामनाभिलाषमात्ररूपा रतिर्व्यभिचारिभावो न स्थायी तस्य तु स्थायिकल्पत्वेनाभाति । अतश्च स्थाय्याभासत्वं रतेः । यतो रावणस्य सीता द्विष्टा मय्युपेक्षिका चास्ति हृदयं नैव स्पृशति । तत्स्पर्शे ह्यभिमानोऽस्य लीयेतैव, मय्यपि रक्तेति तु निश्चयोऽप्यनुपयोगी कामजमोहसारत्वात्, शुक्तौ रूप्याभासवत् । तस्माद् विभावाद्याभासाद रत्याभासे प्रतीते चर्वणाभाससारः शृङ्गाराभास इति ।

एवं हास्याभासो यथा—

लोकोत्तराणि चरितानि न लोक एष
संमन्यते यदि किमङ्ग वदाम नाम ।
यस्त्वत्र[3] हासमुखरत्वममुष्य तेन
पार्श्वोपपीडमिह को न विजाहसीति ॥ १७६ ॥
[ अभिनवभारत्यां वामनगुप्तस्य ]

अत्र यदभिनन्दनीयेऽपि वस्तुनि लोकस्य हासमुखरत्वं स हास्याभासः । किंशब्द[4]वाच्यस्य तु हास्यत्वमेव[5] । एवं रसान्तरेषूदाहार्यमिति ।

1. S adds चन्द्रे. 2. P, S drop भावाभासस्य. 3 A, B, C, D यस्त्वत्तु. 4 C, D, E किंशब्दस्य वाच्यस्य तु एवं रसान्तरे. 5. A हास्य एव.

यथा वा —

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्री कस्यैषा मदननगरि ध्यायसि तु यम् ॥ १६९ ॥

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

भावाभासो यथा —

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
कान्तिः प्रावरणं तनोर्मधुमुचो यस्याश्च वाचः किल ।
विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावण-
स्ता द्रष्टुं जनकात्मजां हृदय हे नेत्राणि मित्रीकुरु ॥ १७० ॥
[बालरामायण १.४०]

अत्रौत्सुक्यम् ॥

काव्यस्य लक्षणमुक्त्वा भेदानाह —

## ८२) व्यङ्ग्यस्य प्राधान्ये काव्यमुत्तमम् ॥ ५६ ॥

वाच्यादर्थाद् व्यङ्ग्यस्य वस्त्वलङ्काररसादिरूपस्य प्राधान्य उत्तम काव्यम । यथा —

वल्मीकः किमुतोद्धृतो गिरिरियत् कस्य स्पृशेदाशयं
त्रैलोक्यं तपसा जितं यदि मदो दोष्णां किमेतावता ।
सर्वं साध्वथ वा रुणत्सि विरहक्षामस्य रामस्य चेत्
त्वद्दन्ताङ्कितवालिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम् ॥ १७१ ॥
[ ]

1 1 प्राधान्ये काव्यमुत्तमम्.

अत्र दन्ताङ्कितपदेन तदवजयस्तत्कक्षपरिग्रहस्तथैव चतुर्णवभ्रमणं पुनः कृपामात्रेण त्यागस्तत्राप्रतीकारः पुनरप्यभिमानदर्प इत्यादि व्यज्यते ।

**दन्ताङ्कितपदेनेति ।** वस्तुस्वभावेन ।

**अभिमानदर्प इत्यादीति ।** वस्त्वित्यर्थः ।

एवमलङ्कारे रसादौ च प्राधान्येन व्यङ्ग्ये काव्यस्योत्तमत्वं विज्ञेयम् । तद् यथा

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
　स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
　सुव्यक्तमेव जलराशिरयं पयोधिः ॥ १७७ ॥

[ ध्वन्यालोके आनन्दवर्धनस्य ]

अत्र रूपकालङ्कारो व्यङ्ग्यः । तथा हि । लावण्यं सम्स्थानमुग्धिमा, कान्तिः प्रभा, ताभ्यां परिपूरितानि संविभक्तानि हृद्यानि सपादितानि दिङ्मुखानि येन । अधुना कोपकषाय कालुष्यादनन्तरं प्रसादोन्मुखत्वेन स्मेरे ईषद्विहसनशीले तरलायते प्रसादान्दोलनविकास-सुन्दरे अक्षिणी यस्यास्तस्या आमन्त्रणम् । अथ चाधुना कोपादनन्तरं प्रसादोदये न एति, त्वन्ने तु क्षणान्तरे क्षोभमगमत । कोपकषायपाटलस्मेरं च तव मुखं संध्यारुण पूर्णशशधरमण्डलमेवेति भाव्यं, क्षोभेण चलितचित्तवृत्तितया सहृदयस्य न चैति तत् सुव्यक्तमन्वर्थतयायं जलराशिर्जाड्यसंचयः । जलादयः शब्दा भावार्थप्रधाना इत्युक्तं प्राक् । अत्र क्षोभो मदनविकारात्मा सहृदयस्य त्वन्मुखावलोकने भवतीति इयताभिधाया विश्रान्तत्वाद् रूपकं व्यङ्ग्यमेव । तदाश्रयेण च काव्यस्य चारुत्वं व्यवतिष्ठत इति तस्यैव प्राधान्यम् ।

रसप्राधान्ये यथा—

कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
　मध्येऽस्यास्त्रिवलीतरङ्गविषमे निस्पन्दतामागता ।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
　साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥ १७८ ॥

1. P ˚कक्षा. 2. E ˚वाधुना 3. A, B ˚गमन. 4. A, B ˚भिधायां. 5. E ˚प्रस्य˚.

## ८३) असत्संदिग्धतुल्यप्राधान्ये मध्यमं त्रेधा ॥ ५७ ॥

असति संदिग्धे तुल्ये च प्राधान्ये व्यङ्ग्यस्य मध्यमं काव्यम्। तत्रासत्प्राधान्यं क्वचिद् वाच्यादनुत्कर्षेण यथा

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए वहूए सीयंति अंगाइं ॥ १७२ ॥

[ सप्तशतकम् ८७४ ]

अत्र 'दत्तसंकेतः कश्चिल्लतागहनं प्रविष्टः' इति व्यङ्ग्यात् 'सीदन्त्यङ्गानि' इति वाच्यमेव सातिशयम्।

क्वचित् पराङ्गत्वेन यथा

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ १७३ ॥

[ महाभारत-स्त्रीपर्व २४.१०. ]

अत्र हि नायिकाकारानुवर्तमानस्वात्मप्रतिकृतिपार्वतीप्रतिच्छन्दफलकावलोकनाद् वत्सराजस्य परस्पराग्रथाबन्धरूपो रतिस्थायिभावो विभावानुभावसंयोजनावशेन चर्वणामारूढ इति प्राधान्येनात्र रसो व्यङ्ग्य । एवं भावतदाभासादीनामुत्तमकाव्यप्रभेदतयोदाहरणानि ज्ञेयानीति।

**सातिशयमिति** । तथा हि । गृहकर्मव्यापृताया इत्यन्यपराया अपि । वध्वा इति सातिशयलज्जा पारतन्त्र्यबद्धाया अपि । अङ्गानीत्येकमपि न तादृशमङ्गं यद् गाम्भीर्यावहित्थवशेन संवरीतुं पारितम् । सीदन्तीत्यास्तां गृहकर्मसंपादनं स्वात्मानमपि धर्तुं न प्रभवन्ति । गृहकर्मयोगे च स्फुटं लक्ष्यमाणानीति अस्माद् वाच्यादेव सातिशयमदनपरवशताप्रतीतिरित्यर्थः ।

**पराङ्गत्वेनेति** । परस्य रसभावतदाभासभावप्रशमभावोदयभावसंधिभावशबलतारूपस्य वाच्यस्य वाक्यार्थीभूतस्य अङ्गं रसादिवस्त्वलङ्काररूपं वा व्यङ्ग्यं तस्य भावस्तत्त्वम् । तेनेति रसेन ।

**रसनोत्कर्षीति** । रसना मेखला संभोगावसरे ऊर्ध्वं कर्षतीति ।

1 I वाक्यात् 2 P, I, L विश्रमनः. 3 A, B, C. D °बन्धर्मा. 4 C, D चर्वणा इति मारूढ इति. E चर्वणा इति 5 E drops न 6. E मान्यस्य 7 E drops रसेन

अत्र शृङ्गारः करुणस्याङ्गम् ।

**शृङ्गार इति ।** समरभुवि पतितकरावलोकनेन प्राक्तनसंभोगवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया यतः शोकविभावतां प्रतिपद्यते, अतः करुणस्याङ्गतां याति । यथा च -

तव शतपत्रपत्रमृदुताम्रतलश्चरणश्चलकलहंसनूपुरकलध्वनिना मुखरः ।
महिषमहासुरस्य शिरसि प्रसभं निहितः कनकमहामहीध्रगुरुतां कथमम्ब गतः ॥ १७९ ॥
[ देवीस्तोत्रे ]

अत्र वितर्कविस्मयादयो भावा देवताविषयाया रतेरङ्गम् । यथा च—

समस्तगुणसंपदः सममलङ्क्रियाणां गणै
भवन्ति यदि भूषणं तव तथापि नो शोभसे ।
शिव हृदयवल्लभं यदि तथा यथा रञ्जये—
स्तदेव ननु वाणि ते जगति सर्वलोकोत्तरम् ॥ १८० ॥
[ अभिनवगुप्तस्य ]

अत्र शृङ्गारनाम्नो भावस्याङ्गम् । यथा च

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥ १८१ ॥
[ ]

अत्र राजविषयस्य रतिभावस्य भावप्रशमोऽङ्गम् ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥ १८२ ॥ [ ]

अत्र त्रासस्योदयः ।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ १८३ ॥
[ ]

अत्रावेगधैर्ययोः संधिः ।

पश्येत् कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर ह ह हा व्युत्क्रमः क्वासि यासि ।

1 A drops one पत्र.
2 E adds
स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु ।
लावण्ययुक्तेष्वपि वित्रसन्ति दैवा ( ? दैत्याः ) स्वकान्तानयनोत्पलेषु ॥
अत्र रौद्रप्रकृतीनामसुचितत्रासो भगवत्प्रतापकारणकृत इति भावाभास इति स्व ( ? सं ? स च ) देवताविषयरतिभावस्याङ्गम् । यथा च—.
3 D drops from प्रमोद to नयने.

यथा च —

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिदिशमुदश्रु प्रलपितम् ।
कृता लंकाभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ १७४ ॥

[ कविकण्ठाभरणे–भट्टवाचस्पते: ]

अत्र व्यङ्ग्य उपमानोपमेयभावो रामत्वमिति वाच्यस्याङ्गतां नीतः ।

यथा वा --

भ्रमिमरतिमलसहृदयता प्रलयं मूर्च्छा तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम ॥१७५॥

[ ]

इत्थ पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्ते
कन्या कश्चित् फलकिसलयान्याददानाभिधत्ते ॥ १८४ ॥

[ ]

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्याना शबलता ।

एते च रसवदाद्यलङ्काराः । यद्यपि भावोदयसंधिशबलत्वानि नालङ्कारतयोक्तानि तथापि कश्चिद् ब्रूयादित्येवमुक्तम् ।

इदानीं वाच्य प्रत्यलङ्कारस्य व्यङ्ग्यस्याङ्गतामाह---

**यथा चेति । जनस्थाने इति ।** जनाना स्थानं, दण्डकारण्य च । कनकमृगतृष्णा, भ्रान्तिश्च । वैदेही सीता; वै देहि इति पदद्वयं च । लङ्काभर्तु रावणस्य, अल्पमीषद्रूपत्वात् कुत्सितस्य भर्तुश्च । वदनेषु दशसु । इषुघटना शरयोजना, विचित्रोक्तिपरम्परासु च । कुशलवौ सुतौ यस्याः सा सीता, शुभधनता च ।

**प्रलयेति ।** प्रलय इन्द्रियाणामल्पं सामर्थ्यम् । मूर्च्छा मनस इन्द्रियाणा च शक्तिनिरोधः । तमः–सत्येव तमसि इन्द्रियाणामशक्तिः । मरणमिति । प्राणत्यागकर्तृनात्मिका पूर्वाक्रियैव वं पाशबन्धाद्यवमरगता मरणशब्देनात्र विवक्षिता । विषमिति जल कालकूटं च ।

1. I, L प्रतिपदमु॑. 2. E कनकमृगतुला कनकमृगे. 3. A, B, C, D drop च. 4. C, D, E सत्येव मनसि, A, B सत्येव मतसि. Obviously the correct reading is सत्येव तमसि. म and त have interchanged their places. 5 E drops च.

अत्र हालाहलं वस्तु व्यङ्ग्यं भुजगरूपणलक्षणस्य वाच्यस्याङ्गम्। क्वचिदस्फुटत्वेन यथा—

अहयं उज्जुअरूआ तस्स वि उम्मंथराइं पिम्माइं ।
सहिआअणो अ निउणो अलाहि किं पायराएण ॥ १७६ ॥

[ गाथासप्तशती २.२७ ]

अत्र स मा पुरुषायितेऽर्थयते, अहं च निषेद्धुमशक्ता, तत् सख्यः पादमुद्रया तर्कयित्वा मा मां हँसिषुरिति (³मां मा हसिषुरिति) व्यङ्ग्यमस्फुटम्। क्वचिदतिस्फुटत्वेन यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ १७७ ॥

[ सुभाषितावलौ (२८५४) रविगुप्तस्य ]

अत्राप्रयासेन शिक्षादानलक्षणं वस्तु व्यङ्ग्यमतिस्फुटत्वेन प्रतीयमानममत्प्राधान्यमेव कामिनीकुचकलशवत् तद्गूढं चमत्करोति नागूढम्। संदिग्धप्राधान्ये यथा—

महिलासहस्सभरिए तुह हिअए सुहय सा अमायंती ।
अणुदिणमणण्णकम्मा अंगं तणुयं पि तणुएइ ॥ १७८ ॥

[ गाथासप्तशती २.८२ ]

**गूढमिति।** यथा—

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा ⁴गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
⁵बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ १७९ ॥

[ ]

अत्र विकसितशब्देन बाधितव्याकोशात्मकमुख्यार्थेन सच्छायत्वप्रसरणादिसादृश्यात् स्मितं लक्षयता हृद्यत्वसुरभित्वबहुमानास्पदत्वनित्यसुलभत्वादिधर्मसहस्रं

1. I उज्जुअरूआ. 2. I ˈद्धु न शक्ता. 3. I, L हासिषुरिति. 4 D drops गति.. मतिः. 5 A, B तवेन्दु.

अत्र अङ्गं तनुकमपि तनूकरोतीति किं वाच्यं, किं वा तनूभावप्रकर्षाधिरोहेण यावदत्याहितं नाप्नोति तावदुज्झित्वा दौर्जन्यं सानुनीयतामिति व्यङ्ग्यं प्रधानमिति संदिग्धम्।

तुल्यप्राधान्ये यथा 'ब्राह्मणातिक्रम' (पृ. १३५) इति। अत्र जामदग्न्यः सर्वेषां क्षत्राणामिव रक्षसा क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्।

यथा वा

> पङ्क्तौ विशन्तु गणिताः प्रतिलोमवृत्त्या
> पूर्वे भवेयुरियताप्यथवा त्रपेरन्।

ध्वन्यते। वशिनशब्देन निश्चेतनं वाक्रमणि असंभवत्पारतन्त्र्यात्मकस्वार्थेन किंकरत्वतन्मुखप्रेक्षित्वादिसादृश्याद् वक्रिमाणं लक्षयता ऐकान्तिकस्तदनुसरणं न कदाचिदप्यन्यत्र सद्भाव स्वेच्छया यत्र कुत्रचिदविचरणमित्यादि ध्वन्यते। समुच्छलितशब्देनानुपपद्यमानस्यामस्योद्वेल्लनात्मकस्वार्थेनाकस्मादुत्कल्लोलीभवनसादृश्याद् विभ्रमं लक्षयता प्रौढप्रौढनरत्वबद्धास्पदत्वमत्र जनाभिलषणीयत्वादि ध्वन्यते। अपास्तशब्देनामूर्तायामत्याश्रितमर्यादायामसंभवत्प्रक्षेपणात्मकस्वार्थेन सर्वत्वनिवृत्तिसादृश्यात् संस्था लक्षयता पुनरस्वीकारानवलोकनादि ध्वन्यते। मुकुलितशब्देनासंभवत्कोरकात्मकस्वार्थेनाभिनवोद्भेदसादृश्यात् स्तनयुग्मं लक्षयता स्पृहणीयत्वरमणीयकास्पदत्वमनोभवसमुद्दीपकत्वादि ध्वन्यते। उद्धुरशब्देन बाधितधुरीन्मुख्यस्वार्थेनोत्थितत्वसादृश्यादसंबन्धवज्जघनं लक्षयतोपाचितत्वस्पृहणीयत्वमनोभवनिकेतनत्वादि ध्वन्यते। इन्दुवदनेत्यत्र यद्यप्यवास्तदा इन्दुशब्देन बाधितस्वार्थेन पारिमाण्डल्यादिसादृश्याद् वदनं लक्षयता जगज्जीवयितृत्वादि ध्वन्यते। उद्गमशब्देन बाधितोदयात्मकस्वार्थेनाभिनवोद्भेदसादृश्यात् तरुणिमानं लक्षयता स्पृहणीयत्वादि ध्वन्यते। मोदते शब्देन बाधितहर्षात्मकमुख्यार्थेनार्द्रीवनर्दकत्वसादृश्याद्द्रुमं लक्षयता उच्छृङ्खलत्वस्पृहणीयत्वादि ध्वन्यते।

1 E ऐकान्तिकस्तद . 2. Here a few lines in B are not legible. A number of words are omitted. 3 E °मूर्च्छायां 4. E सत्वनिर्वृत्ति° 5. E लक्षणता 6 A, B, C, D °लोकादि°. 7 E °स्वार्थे प°. 8. A, B, C नार्दवत

सन्तोऽप्यसन्त इति (? इव) चेत् प्रतिभान्ति भानो-
र्भासावृते नभसि शीतमयूखमुख्याः ॥ १७९ ॥
[ भल्लटशतक ११ ]

अत्र प्राकरणिकाप्राकरणिकयोः समं प्राधान्यम् । यथा वा

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवता नृपतिः पणेन ॥ १८० ॥
[ वेणी० १.१५ ]

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यतुल्यभावेन स्थितम् । इति त्रयो मध्यमकाव्यभेदा न त्वष्टौ ।

**८४) अव्यङ्ग्यमवरम् ॥ ५८ ॥**

शब्दार्थवैचित्र्यमात्रं व्यङ्ग्यरहितं अवरं काव्यम् । यथा

अघौघं नो नृसिंहस्य घनाघनघनध्वनिः ।
हताद्धुरुधुराघोषः सुदीर्घो घोरघर्घरः ॥ १८१ ॥

यथा च

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।

**न त्वष्टाविति** । यथाह **मम्मटः**—

(52) अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ॥ इति ॥
[काव्यप्रकाश ५. ४५, ४६]

1 L हताधुरु° 2 L नाम कस्य

नीचाः सदैव सविलासमलीकलग्ना
ये कालता कुटिलतामिव न त्यजन्ति ॥ १८२ ॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानं, तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत् काव्यमुक्तम् ।

इत्याचार्य**श्रीहेमचन्द्रविरचितायामलङ्कारचूडामणि**संज्ञस्वोपज्ञ**काव्यानुशासन**वृत्तौ रसभावतदाभासकाव्यभेदप्रतिपादनो द्वितीयोऽध्यायः ॥

ननु यत्र रसादीनामावस्य स काव्यप्रकारोऽपि न भवत्येव । यस्मादवस्तुसंस्पर्शिता काव्यस्य नावलोपपद्यते । वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद् रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते । अन्ततो विभावत्वेन चित्तवृत्तिविशेषा हि रसादयः । न च तदस्ति वस्तु यत् कञ्चित् चित्तवृत्तिविशेषमुपजनयति । तदनुत्पादने वा कविविषयतैव तस्य न स्यादित्याशङ्क्याह—**यद्यपीति** ॥

इति **आचार्यश्रीहेमचन्द्रविरचिते विवेके** द्वितीयोऽध्यायः ।

[1] I omits श्री 2 S drops तदाभास 3 E पद्येत 4 E अनन्ततो
5 D drops न्त

## तृतीयोऽध्यायः

अदोषौ शब्दार्थौ काव्यमित्युक्तम् । तत्र दोषाणां रसापकर्षहेतुत्वं सामान्यलक्षणमुक्तम् । विशेषलक्षणमाह—

**८५) रसादेः स्वशब्दोक्तिः क्वचित् सञ्चारिवर्जं दोषः ॥ १ ॥**

रसस्थायिव्यभिचारिणां स्वशब्देन वाच्यत्वं दोषः । सञ्चारिणस्तु क्वचित् स्वशब्दाभिधानेऽपि न दोषः । तत्र रसस्य स्वशब्देन शृङ्गारादिना चाभिधानं यथा

शृङ्गारी गिरिजानने सकरुणो रत्या प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया ।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसात्मकः पशुपतिर्भूयात् सतां भूतये ॥ १८३ ॥

[ शृङ्गारतिलक १.१ ]

स्थायिभावानां यथा

**वाच्यत्वमिति ।** वाच्यत्वं हि रसादीनां स्वशब्दनिवेदितत्वेन वा स्याद् विभावादिप्रतिपादनमुखेन वा । पूर्वस्मिन् पक्षे स्वशब्दानिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः । न च सर्वत्रैतेषां स्वशब्दनिवेद्यत्वं यथा—' याते गोत्र'(पृ १०४) इति । अत्रानुभावविभावबोधानन्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वणागोचरोऽर्थात्मा अभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिशब्दाभावेऽपि स्फुरत्येव । न च केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति । यथा—'शृङ्गारहास्यकरुणा' (नाट्यशास्त्र ६.१५) इत्यादौ । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम् । न त्वभिधेयत्वं कथञ्चिदिति स्वशब्दोक्तिदोष इत्यर्थः । द्वितीयश्च पक्षोऽस्माकमप्यभिमत एव । एतेन—

(53) रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम् ।
स्वशब्दस्थायिसंचारिविभावाभिनयास्पदम् ॥

[ काव्यालङ्कारसारसंग्रह ४.३ ]

इत्येतद्व्याख्यानावसरे यद् **भट्टोद्भटेन** 'पञ्चरूपा रसाः' इत्युपक्रम्य तत्र 'स्वशब्दाः शृङ्गारादेर्वाचकाः शृङ्गारादयः शब्दाः' इत्युक्तं, तत् प्रतिक्षिप्तम् ।

1. S adds न after वर्जं 2 A, B, C °वासनारञ्जित°. 3. Locana's reading गोचरोऽर्थो रसात्मा (p 81) yields better sense. 4. D, E drop तत्र.

संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥ १८४ ॥
[ ]

अत्रोत्साहस्य स्थायिनः ।

यत्रापि स्वशब्देन निवेदितत्वमस्ति तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैव रसादीनां प्रतीतिः, स्वशब्देन सा केवलमनूद्यते । यथा 'याते द्वारवतीम्' (पृ. ११३) इत्यादि । अत्र विभावानुभावबलादुत्कण्ठा प्रतीयत एव । सोत्कण्ठ शब्दः केवलं सिद्धं साधयति । उत्कमित्यनेन तूक्तानुभावाकर्षणं कर्तुं सोत्कण्ठशब्दः प्रयुक्त इत्यनुवादोऽपि नानर्थकः ।

व्यभिचारिणो यथा

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ १८५ ॥
[सुभाषितावली ७८]

अत्र व्रीडादीनाम् ।

क्वचित् सञ्चारिवर्जमिति वचनात् क्वचिन्न दोषो यथा
औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ १८६ ॥
[रत्नावली १.२]

**नानर्थक इति** । शब्दोपात्तस्यैव ह्यनुवादो भवति न प्रतीयमानस्येत्यर्थः ।

1. I, P छणत्कारैः 2. I त्साहस्य 3. I सुताविलोकन

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत्। अत एव 'दूरादुत्सुकम्' (पृ. १०४) इत्यादौ व्रीडाद्यनुभावानां विवलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसा प्रसरणादिरूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम्।

**८६) अबाध्यत्वे आश्रयैक्ये नैरन्तर्येऽनङ्गत्वे च विभावादिप्रातिकूल्यम् ॥ २ ॥**

अबाध्यत्वादिषु सत्सु **विभावादिप्रातिकूल्यं** रसादेर्दोषः। यथा---

प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
　प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते[3] सिञ्चतु वचः।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
　न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ १८७ ॥

[सुभाषितावलौ (१६२९) चन्द्रकस्य]

अत्र कालहरिणश्चपलः शीघ्रमेव प्रयाति न च पुनरागच्छतीत्यादिवैराग्यकथाभि प्रियानुनयनं निर्विण्णस्येव कस्यचिदिति शृङ्गारप्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावो निबद्ध इति विभावप्रातिकूल्यं, तत्प्रकाशितो निर्वेदश्च स्वदत इति व्यभिचारिप्रातिकूल्योदाहरणमप्येतत्।

एवं शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोरप्युदाहार्यम्। यथा च --

निहुअ[6]रमणम्मि लोअण[7]पहम्मि पडिए गुरूण मज्झम्मि।
सयलपरिहारहिअया वणगमणं चेअ[8] महइ वहू ॥ १८८ ॥

[　　　　]

1. I प्रातिकौल्यम्. 2 I, L वर्तयस्व. 3. I मे. 4. P, S कालो हरिणचपलः 5 I प्रातिकौल्यम्. 6. P, I, L निहुय°. 7. I, P लोयणवहम्मि. 8. I चेव.

अत्र सकलपरिहारवनगमने शान्तानुभावौ। इन्धनाद्यानयनव्याजेनोपभोगार्थं[1] वनगमनं चेन्न दोषः।

**अबाध्यत्वे**–इति। अबाध्यत्वमशक्याभिभवत्वम्। तदभावे न केवलं न दोषो यावत् प्रकृतस्य रसस्य परिपोषः। यथा–'क्वाकार्यं शशलक्ष्मणः' (पृ. १२८) इत्यादि। अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने परस्परबाध्यबाधकभावेन भवन्ती चिन्तायामेव पर्यवस्यन्ती परमास्वादस्थानम्।

सत्यं मनोरमाः कामाः[2] सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ १८९ ॥

[व्यासस्य, औचित्यविचारचर्चायां, सुभाषितावलौ (श्लो. ३२६६)]

अत्र त्वाद्यमर्धं बाध्यत्वेनैवोक्तम्। द्वितीयं तु प्रसिद्धास्थिरत्वापाङ्गभङ्गोपमानेन जीवितस्यास्थिरत्वं प्रतिपादयद् बाधकत्वेनोपात्तं शान्तमेव पुष्णाति, न पुनः शृङ्गारस्यात्र प्रतीतिः, तदङ्गस्याप्रतिपत्तेः।

**ध्वनिकारस्तु—**

(14) विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥

[ध्वन्यालोक ३.३०]

इति विरोधपरिहारमाह।

**नाश्रयैक्ये**–इति। एकाश्रयत्वे दोषो भिन्नाश्रयत्वे तु वीरभयानकयोः परस्परविरुद्धयोरपि नायकप्रतिनायकगतत्वेन निवेशितयोर्न दोषः। यथा **अर्जुनचरिते—**

समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनो
महानुपप्लवोऽभवत् पुरे पुरन्दरद्विषाम्।
श्रवेण तस्य तु ध्वनेर्विलुप्तमूलबन्धनं
अशेषदैत्ययोषितां श्लथीबभूव जीवितम् ॥ १९० ॥

इत्यादि। [अर्जुनचरिते]

1 I adds क च कुलम 2 The reading in the Dhvanyāloka (p. 99) and the Kāvyaprakāśa (p 448) is, however, रामाः. It may be noted that Hemacandra's reading agrees with that of Abhinavagupta (Locana, p. 298).

**नैरन्तर्ये**–इति । एकाश्रयत्वेऽपि शान्तशृङ्गारयोः परस्परविरुद्धयोर्निरन्तरत्वे दोषो न तु रसान्तरान्तरितयोः । यथा **नागानन्दे** शान्तरसस्य –

'अहो गीतमहो वादितम्' ॥ १९.१ ॥ [ नागानन्द १ (पृ. १०) ]

इत्यद्भुतमन्तरे निवेश्य जीमूतवाहनस्य मलयवतीं प्रति शृङ्गारो निबद्धः ।

न केवलं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधानाद् विरोधो निवर्तते । यथा —

भूरेणुदिग्धान् नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ॥ १९.२ ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकसुगन्धिभिः कल्पलतादुकूलैः ॥ १९.३ ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानाँल्ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥ १९.४ ॥
[ ]

अत्र बीभत्सशृङ्गारयोरन्तरा वीररसनिवेशान्न विरोधः । वीराः स्वदेहानित्यादिना उत्साहाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया

**शान्तरसस्येति** ।

रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्यय
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ ।
इत्थं निन्द्यमपीदमिन्द्रियवशं प्रीत्यै भवेद्यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे ॥ १८६ ॥
[नागानन्द १.५]

इत्यादिनोपक्षेपात् प्रभृति परार्थशरीरवितरणात्मकनिर्वहणपर्यन्तं प्रतिपादितस्य ।

1. The Locana (p. 389) and the Kāvyaprakāśa (p. 450) read वादित्रम्. 2. The Dhvanyāloka (p. 395) and the Kāvyaprakāśa (p. 452) read वारिसेकैः सुगन्धिभिः. 3. I, L, P °मानाल°.

प्रतीतिरिति मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायकता। स्वदेहानित्यत्वेन चैकत्वाभिमानादाश्रयैक्यम् ।

**अनङ्गत्वे**—इति। द्वयोर्विरुद्धयोरङ्गित्वे दोषः, नाङ्गभावप्राप्तौ। सा हि नैसर्गिकी समारोपकृता वा। तत्र येषा नैसर्गिकी तेषां तावदुक्ताविरोध एव। यथा विप्रलम्भे तदङ्गानां व्याध्यादीनाम्। ते हि निरपेक्षभावतया सापेक्षभावविरोधिन्यपि करुणे सर्वथाङ्गत्वेन दृष्टाः। यथा—'भ्रमिमरतिमलसहृदयताम्' (पृ. १५४) इत्यादि। समारोपितायामप्यदोषो यथा 'कोपात्कोमललोलबाहुलतिका' (पृ. ४०) इत्यादि। अत्र बद्ध्वा हन्यत इति च रौद्रानुभावाना रूपकबलादारोपितानां तदनिर्वाहादेवाङ्गत्वम्।

इयं चाङ्गभावप्राप्तिरन्या। यदाधिकारिकत्वात् प्रधान एकस्मिन् काव्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोरङ्गभावस्तत्रापि न दोषः। यथा

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ १०५ ॥

[ अमरुशतक २ ]

अत्र त्रिपुररिपुप्रभावातिशयवर्णने प्रकृते करुण इव शृङ्गारोऽप्यङ्गमिति न तयोर्विरोधः।

---

**एकत्वाभिमानादिति**। अन्यथा विभिन्नविषयत्वात् को विरोध स्यादित्यर्थ। ननु वीर एवात्र रसो न शृङ्गारो न बीभत्स, किं तु रतिजुगुप्से वीरं प्रति व्यभिचारीभूते। भवत्वेवम्। तथापि प्रकृतोदाहरणता तावदुपपन्ना रतिजुगुप्सयोरपि हि न विरोधः।

**करुण इवेति**। तथा हि—हस्तावलग्नस्य वह्नेः क्षेपो विधूननं भयहेतुकमिति करुणाङ्गम्। उपलालनाप्रवृत्तस्य तु वल्लभस्य करग्रहणासहनं क्षेपो

1 I, L व्यवधायिकता 2 The Amaruśataka (p. 4) and the Dhvanyāloka (p 196) read साश्रु°. 3. I तयोर्न विरोधः. 4 E °करुणाङ्गत्वे.

पराङ्गत्वेऽपि कथं विरोधिनोर्विरोधनिवृत्तिरिति चेत्, उच्यते। विधौ विरुद्धसमावेशस्य दुष्टत्वं, नानुवादे। यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥ १९६॥

[सुभाषितावली (१३६८) व्यासमुनेः]

नायिकान्तरसम्पर्कसमुत्थेर्ष्याकोपनिमित्तो विप्रलम्भसंसूचकः। पटाञ्चलावलग्नस्य वह्नेः प्रसभाभिहननं दाहनिमित्तदुःखजनितमवधूननं जलादिप्रक्षेपरूपं चेति करुणरसपरिपोषकम्। करावधूननेन करग्रहणासम्पन्नावञ्चलावलम्बिनो वल्लभस्य प्रसभमभिहननमवनाडनमसूयावशावज्ञानिमित्त विप्रलम्भपरिपोषकम्। इतश्चेतश्च प्रवर्तमानस्य वह्नेः कवरीकलापाश्लिष्टत्रासहेतुकः ससम्भ्रमकरयुगलजनितः प्रक्षेपोऽपामनमभिव्यञ्जकमिह करुणस्य। पटाञ्चलावताडनपूर्वकत्वरितगतिनायिकावेणीलग्नावग्रहोपायहठचुम्बनप्रवृत्तवल्लभस्यापासनमपक्षेपणा मयि निर्लज्ज तथा नाम व्यलीकशतानि कृत्वा सम्प्रतीत्थमाचरसीत्येवरूपोपालम्भवचनादिमय कृतककोपशर्मार्ष्यारोषाभिव्यञ्जकम्। केशावलग्नस्य वह्नेर्मेन्धनस्य प्रक्षेपे च संभ्रमवशेनानालोचितदेशतया पादपतनमवज्वालितस्य वा सर्वतोदिकस्य पादाक्रमणमिति तथाभूतस्य संभ्रमवशेनानिरीक्षणमनालोचनम्। वेल्लद्वेणीविलग्ननायकावलोकनजनितरोषावेगारुणितनयनस्फुरिताधरसरब्धकान्तादर्शननिश्चितमानग्रहण. प्रणामान्तो मान इति वल्लभः पादपतितो न विगणितस्तदपराधामुखीकरणविस्मृततदपराधया नायिकया। वह्न्याक्रान्तपादतया पलायनासमर्थत्रिपुरनारीसमाश्लेषकारी वह्निरतितीव्रतरावेगवशेन सर्वाङ्गप्रकम्पनेनावधूनः क्षिप्तो दुःसहदुःखावस्थावद्योतकः। पादपतनप्रसादितवल्लभालिङ्गनप्रवृत्तः कान्तजनोऽसहनया हठकोपनया झगिति प्रसादमव्रजन्त्या गर्वगरिममन्थरितयावधूतस्तदा मोटनेन निवारित इति संस्कारशेषेर्ष्याविप्रलम्भसंसूचनम्। अत एव परित्यक्तप्रायेर्ष्याकोपतया वल्लभकृतापराधानुस्मरणजनिताश्रुबाधाविलीकृतकुवलयदलसदृशलोचनतया शृङ्गारोद्दीपनम्। वह्निदाहजनितवल्लभसुतादिविनाशानुस्मरणहेतुकदुःखसंभारवशोद्गताश्रुप्रवाहविसंस्थुलीकृतसुन्दरतरनयनतया शोकावेगपोषणम्। आर्द्रापराधः प्रत्यग्रप्रेमस्खलितादिप्रमाद-

1 E °वदापन°. 2. C °स्यापोसन°. 3. E °ग्रहणप्र°. 4. A, B तदुपरोधया.
5 C, D, E °प्रसादितवल्लभो वल्लभा°. 6. E °तकान्त°. 7. D °र इति शे°.
8. E लोचनया.

न ह्यत्र विधिस्तदैव तदेव कुरु माकार्षीरितिवदेकदा प्राधान्यलक्षणोऽपि त्वन्याङ्गतालक्षणोऽनुवादः। एहीति क्रीडन्ति, गच्छेति क्रीडन्तीति क्रीडाङ्गयोरागमनगमनयोर्न विरोधः, न च रसेषु विध्यनुवादव्यवहारो नास्तीति शक्यं वक्तुम्। तेषां वाक्यार्थत्वेनाभ्युपगमात्। वाक्यार्थस्य च वाच्यस्य यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसानामपि भवतः। अथवा त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं, तस्य तु शृङ्गारस्तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव। अथवा प्राग् यथा कामुक आचरति स्म तथा

युक्त'। अत एवेर्ष्याकोपनिमित्तना। वह्नेरपि प्रत्यग्रापराधता दाहजनिता तथा च शोकावेगहेतुना – इति सदृशार्थवाचकपदनिकुरम्बजनितरसद्वयप्रतीतिभूषितकाव्यार्थाभोग. सहृदयानां परं चमत्कारमावहतीति।

**उच्यत इति।** (पृ. १६५, पङ्क्ति १) अयं भाव –सामग्रीविशेषपरिपतितत्वेन भावानां विरोधाविरोधौ, न स्वभावमात्रनिबन्धनौ। भिन्नदेशयो शीतोष्णयोरपि विरोधाभावात्।

ननु प्रधानतया यद् वाच्यं तत्र विधिः, अप्रधाने तु वाच्येऽनुवादः, न च रसस्य वाच्यत्व सह्यत इत्याशङ्कमान परिहरति—**न चेति**। प्रधानाप्रधानत्वकृतौ विध्यनुवादौ, तौ च व्यङ्ग्यतायामपि भवत एवेति भाव'। मुख्यतया च रस एव काव्यवाक्यानामर्थ। तेन यत्रामुख्यतया सोऽर्थस्तत्रानूद्यमानत्व रसस्यापि युक्तम्। यदि चानूद्यमानविभावादिसमाक्षिप्तत्वाद् रसस्यानूद्यमानता। तदाह–**वाक्यार्थस्य च** (पृ. १६६, पङ्क्ति ४) इति। **अस्त्येवाविरोधित्वम्** (पृ. १६७, पङ्क्ति ८) इति। अत्रायं भाव --पूर्वं पक्षद्वये विप्रलम्भकरुणयोरन्यत्राङ्गभावगमनाभ्यिर्विरोधित्वमुक्तम्। अधुना तु स विप्रलम्भ' करुणस्यैवाङ्गता प्रतिपन्नो न विरोधीति। तथा हि-- करग्रहणासहनादिना ईर्ष्याविप्रलम्भवृत्तान्त स्मर्यमाण इदानीं विध्वस्ततया शोकविभावतां प्रकृष्टां प्रतिपद्यत इति वाक्यार्थीभूतस्य करुणस्य विरोधिनापि शृङ्गारेण परिपोष एव विधीयते। परनस्तु शृङ्गारपोषितेन करुणेनात्र मुख्य एवार्थ उपोद्बल्यते। उक्तं हि—

(54) गुण' कृतात्मसंस्कारः प्रधान प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते॥ इति॥

[ ]

1. I त्वन्योद्गता. 2. E तया. 3. D °वाक्यार्थाना°.

शराग्निरिति स्मर्यमाणशृङ्गारेणेदानीं विध्वस्ततया शोकविभावतां प्रतिपद्यमानेन पोषितः करुणो रसः प्रधानमेव वाक्यार्थमभिधत्ते। यतः प्रकृतिरमणीयाः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः स्मर्यमाणैर्विलासैरधिकतरं शोकावेगमुपजनयन्ति। यथा—'अयं स रसनोत्कर्षी' (पृ. १५२) इति। इदं हि भूरिश्रवसः समरभुवि पतितं बाहुं दृष्ट्वा तत्कान्तानामनुशोचनम्। तथात्रापि त्रिपुरयुवतीनां शाम्भवः शराग्निरार्द्रापराधः कामी यथा व्यवहरति स्म तथा व्यवहृतवानित्यनेनापि प्रकारेणास्त्येवाविरोधित्वम्। एवं च --

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवत शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥ १०७ ॥
[ ]

इत्यादावपि शृङ्गारः शान्तस्याङ्गम्। तथा हि—यथा कश्चिन्मनोरथशतप्रार्थितप्रेयसीसंभोगावसरे जातपुलकस्तथा त्वं परार्थसम्पादनाय स्वशरीरदान इति शृङ्गारेण शान्त रैस एव पोष्यत इति। यत्र तु न पोष्यते तत्रानङ्गत्वाद्दोष एव। यथा—

**दन्तक्षतानीति।** बोधिसत्त्वस्य सिंहीं स्वकिशोरभक्षणप्रवृत्तां प्रति निजशरीरं वितीर्णवतः केनचिच्चाटुकं क्रियते। प्रोद्भूतः सान्द्रः पुलकः परार्थसम्पत्तिजेनानन्दभरेण यत्र। रक्ते रुधिरे मनोऽभिलाषो यस्याः, अनुरक्तं च मनो यस्याः। मुनयश्चोद्बोधितमदनावेशाश्चेति विरोधः। जातस्पृहैरिति च वयमपि यदि कदाचिदेवं कारुणिकपदवीमधिरोक्ष्यामस्तदा सत्यतो मुनयो भविष्याम इति मनोराज्ययुक्तैः।

1. The Dhvanyāloka (p. 376) and the Samketa of Someśvara (p 194) read शोकावेश°. 2. I adds पीनस्तनविमर्दनः. 3. P, L, I drop रस. 4. E निज. 5. E कृत°.

रामन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद् रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ १९८ ॥

[रघु० ११.२०]

अत्र प्रकृतस्य करुणरसस्य विरुद्धः शृङ्गारो न पोषकः ।

**न पोषक इति ।** अपि त्वङ्गितयैव प्रतिभासते । ननु यत्रैकतात्पर्येणेतरेषां विरुद्धानामविरुद्धानां च न्यग्भूतत्वेनोपादानं तत्र भवत्वङ्गत्वेनाविरोधः । यत्र तु समप्रधानत्वेनानेकस्य भावस्योपनिबन्धनं तत्र कथम् । यथा–

एक्कत्तो रुअइ पिआ अण्णत्तो समरतूरनिग्घोसो ।
नेहेण रणरसेण य भडस्स दोलाइयं हिअअं ॥ १८७ ॥

[ ]

इत्यादौ रत्युत्साहयोः, ' मात्सर्यमुत्सार्य विचार्य कार्यम् '(पृ १६३)– इत्यादौ रतिशमयोः,

इयं सा लोलाक्षी त्रिभुवनललामैकवसतिः
स चायं दुष्टात्मा स्वसुरपकृतं येन मम तत् ।
इतस्तीव्रः कामो गुरुरयमितः क्रोधदहनः
कृतो वेषश्चायं कथमिदमिति भ्राम्यति मनः ॥ १८८ ॥

[ ]

इत्यादौ रतिक्रोधयोः,

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सरसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ १८९ ॥

[मालतीमाधव ५.१८]

इत्यादौ रतिजुगुप्सयोः,

एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १९० ॥

[ ]

इत्यादौ शमरतिक्रोधानाम्,

1. D हिअय. 2 A, B, C, D वेश॰. 3 D drops मनः

**८७) विभावानुभावक्लेशव्यक्तिपुनःपुनर्दीप्त्यकाण्डप्रथाच्छेदाङ्गाति-विस्तराङ्ग्यननुसन्धानानङ्गाभिधानप्रकृतिव्यत्ययाश्च ॥ ३ ॥**

एते चाष्टौ रसस्य दोषाः । तत्र विभावानुभावयोः क्लेशव्यक्तिर्यथा—

परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः ।
इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥ १९० ॥

[                    ]

एकेनाक्ष्णा प्रविततरुषा वीक्षते व्योमसंस्थं
भानोर्बिम्बं सजललुलितेनापरेणात्मकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ १९१ ॥

[ सुभाषितावली (१३१६) चन्द्रकस्य ]

इत्यादौ रतिशोकक्रोधानां समप्राधान्येनोपनिबन्धस्तत्र कथं न विरोधः ।

अत्रोच्यते—अत्राप्येक एव स्थायी । तथा हि—'एक्कत्तो रुअइ पिआ—' (पृ. १६८) इत्यादौ स्थायिभूतोत्साहव्यभिचारिवितर्कलक्षणभावहेतुसन्देहकारणतया करुणसङ्ग्रामतूर्ययोरुपादानं वीरमेकं पुष्णातीति भटस्येत्यनेन पदेन प्रतिपादितम् । न च द्वयोः समप्रधानयोरन्योन्यमुपकार्योपकारकभावरहितयोरेकवाक्यभावो युज्यते । किं च—उपक्रान्ते सङ्ग्रामे सुभटानां कार्यान्तरकरणेन प्रस्तुतसंग्रामौदासीन्येन महदनौचित्यम् । अतो भर्तुः सङ्ग्रामैकरसिकतया शौर्यमेकं प्रकाशयन् प्रियतमाकरुणो वीरमेव पुष्णाति । एवं 'मात्सर्यम्' (पृ. २६३)—इत्यादावपि चिरप्रवृत्तरतिवासनाया हेयतयोपादानाच्छमैकपरत्वम् 'आर्याः समर्यादम्'—इत्यनेन प्रकाशितम् । 'इयं सा लोलाक्षी'— (पृ. १६८) इत्यादावपि रावणस्य प्रतिपक्षनायकतया निशाचरत्वेन मायाप्रधानतया च रौद्रव्यभिचारिविषादविभाववितर्कहेतुतया रतिक्रोधयोरुपादानं रौद्रपरमेव । 'अन्त्रैः कल्पित मङ्गलप्रतिसराः'— (पृ. १६८) इत्यादौ हास्यरसैकपरत्वम् । 'एकं ध्याननिमीलनान्मुकुलितम्'— (पृ. १६८) इत्यादौ तु शम्भोर्भावान्तरैरनाक्षिप्ततया शमस्तस्यापि योग्यन्तरशमाद् वैलक्षण्यप्रतिपादनेन शमैकपरतैव 'समाधिसमये' इत्यनेन स्फुटीकृता । 'एकेनाक्ष्णा'— (पृ. १६९) इत्यादौ तु समस्तमपि वाक्यं भविष्यद्विप्रलम्भविषयमिति न क्वचिदनेकतात्पर्यम् । तदेवमुक्तप्रकारेण रत्याद्युपनिबन्धे सर्वत्राविरोध इति ।

1. D एत ना'. 2. E वीक्ष्यते. 3. C एक्तो. 4. The Avaloka on the Daśarūpaka (p. 92) reads 'लक्षणवितर्क'. 5. D drops भाव. 6. D, E एतेना'.

अत्र रतिपरिहारादीनामनुभावाना करुणादावपि संभवात् कामिनीरूपो विभावः क्लेशप्रतिपाद्यः ।

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यून ।
लीलाशिरोंऽशुकनिवेशविशेषकॢप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ २०० ॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावापर्यवसायिनः स्थिता इति क्लेशव्यक्तिः ।

**पुनः पुनर्दीप्तिर्यथा कुमारसंभवे** रतिप्रलपेषु (सर्ग ४) उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमान परिम्लानकुसुमकल्पः कल्पत इति ।

**अकाण्डे प्रथनं वेणीसंहारे** द्वितीयेऽङ्के दुर्योधनस्य धीरोद्धतप्रकृतेरपि तथाभूतभीष्मप्रमुखमहावीरलक्षक्षयकारिणि समरसंरम्भे प्रवृत्ते शृङ्गारवर्णने ।

**अनुभावापर्यवसायिन** इति शृङ्गारे चेद्युवा, संभवन्ति तथाविधा अनुभावा. । शान्तश्चेत् , न संभवन्ति । त प्रति परपक्षरूपत्वात्तथाविधाना विभावानामिति शृङ्गारित्वनिश्चयाभावे सत्स्वपि तथाविधेषु विभावेषु लीलादयोऽनुभावा क्लेशेन व्यज्यन्त इति ।

**पुनः पुनः परामृश्यमान** इति । तथा हि—विभावानुभावसामग्रीपरिघटितशरीरस्यापि रसयितृरसनयोग्यस्य रसस्य पुन पुनरान्दोलनं मालतीकुसुमपरिमर्दनवदननुगुणमेव । धाराप्राप्ते हि रसे तदाविष्टानां तत्परवशानामुक्तिरल्पीयस्येव । तथा च तस्यां दशायां महाकवीनामेको द्वित्रा वा श्लोका निर्यान्ति । अत एव **तापसवत्सराजे** धाराप्राप्तः करुणरस सर्वाल्पो द्वितीयोऽङ्कः कविना निबद्धः ।

1. I क्लेशेन प्रतिपाद्य· 2 P, L अकाण्डप्रथनम्. 3. A, B अनुभावापर्यवसायिन·. 4. E प्रतिपक्ष रूप°. 5. E °योग्यरसस्य. 6. E drops पुनः.

**अकाण्डे छेदो** यथा वत्सराजस्य **रत्नावल्यां** चतुर्थेऽङ्के रत्नावलीनामधेयमप्यगृह्णतो विजयवर्मवृत्तान्ताकर्णने। यथा वा **वीरचरिते** द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ।

**अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं** यथा **हयग्रीववधे** हयग्रीवस्य। यथा वा विप्रलम्भशृङ्गारे नायकस्य कस्यचिद् वर्णयितुमनुक्रान्ते कवेर्यमकाद्यलङ्कारनिबन्धनरसिकतया महाप्रबन्धेन समुद्रादेः। तथा हि **हरिविजये**-- ईर्ष्याकुपितसत्यभामानुनयनप्रवृत्तस्य हरेः पारिजातहरणव्यापारेणोपक्रान्तविप्रलम्भस्य वर्णनप्रस्तावे गलितकनिबन्धनरसिकतया कविना समुद्रवर्णनमन्तरा गडुस्थानीय विस्तृतम्। तथा **कादम्बर्यां** 'रूपविलास' (का. पृ. १३) इत्यादिना महाविप्रलम्भबीजेऽप्युपक्षिप्ते तदनुपयोगिनीष्वटवीशबरेशाश्रममुनिनगरीनृपादिवर्णनास्वतिप्रसङ्गाभिनिवेशः। तथा **हर्षचरिते** 'जयति ज्वलद्' (ह. च. श्लो. २१, पृ. ६) इत्यादिना हर्षोत्कर्षवद् विजयबीजे **बाणान्वयवर्णनम्**, तत्रापि चानन्वितप्राय एव सारस्वतोत्पत्तिपर्यन्तो महान् ग्रन्थसन्दर्भः। **शिशुपालवधादौ** चादितः कृतप्रतिद्वन्द्विविजयबीजोपक्षेपावगाढव्यासिमद्वीररसानुबन्धेऽपि (सर्ग १–२) तदसङ्गतशृङ्गाराङ्गभूततत्तदृतुपवनविहारपुष्पावचायमज्जनादिवर्णनास्वत्यासक्तिः (सर्ग ३–११)। तदित्थमप्रस्तुतवस्तुविस्तृतिः प्रस्तुतरसप्रतीतिव्यवधानकारिण्यपि महाकविलक्ष्येषु भूयसा दृश्यत इति तत्त्वं त एव विदन्ति।

**अङ्गिनः प्रधानस्याननुसन्धानं** यथा **रत्नावल्यां** चतुर्थेऽङ्के बाभ्रव्यागमनेन सागरिकाया विस्मृतिः। अनुसन्धिर्हि सर्वस्वं सहृदयतायाः,

1. P, L °मानुनाथनप्र°. 2. °प्रतिबन्धि°.

यथा **तापसवत्सराजे** षट्स्वप्यङ्केषु वासवदत्ताविषयः प्रेमबन्धः कथावशादाशङ्क्यमानविच्छेदोऽप्यनुसंहितः ।

**अनङ्गस्य रसानुपकारकस्य वर्णनं** यथा **कर्पूरमञ्जर्यां** नायिकया स्वात्मना च वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य तस्य राज्ञा प्रशंसनम् ।

[ जवनिका १ ]

**षट्स्वप्यङ्केष्विति** । तथा हि प्रथमे तावदङ्के--

तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा
तद्गोष्ठ्यैव निशापि मन्मथकृतोत्साहैस्तदङ्गार्पणैः ।
तां सम्प्रत्यपि मार्गदत्तनयनां द्रष्टुं प्रवृत्तस्य मे
बद्धोत्कण्ठमिदं मनः किमथवा प्रेमासमाप्तोत्सवम् ॥ १९.२ ॥

[ तापस० १.१८ ]

इत्यनेन । द्वितीये --

दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दि वक्त्रं न किं
नार्द्रार्द्रं हृदयं न चन्दनरसस्पर्शानि चाङ्गानि वा ।
कस्मिँल्लब्धपदेन ते कृतमिदं क्रूरेण दग्धात्मना
नूनं वज्रमयोऽन्य एव दहनस्तस्येदमाचेष्टितम् ॥ १९.३ ॥

[ तापस० २.९ ]

इत्यादिना । तृतीये

सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते
श्वासोत्कम्पविहस्तया प्रतिपदं देव्या पतन्त्या तथा ।
हा नाथेति मुहुः प्रलापपरया दग्धं वराक्या तया
शान्तेनापि वयं तु तेन दहनेनाद्यापि दह्यामहे ॥ १९.४ ॥

[ तापस० ३.१० ]

इत्यादिना । चतुर्थे --

देवीस्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे
तद्गोत्रग्रहणादियं सुवदना यायात् कथं न व्यथाम् ।
इत्थं यन्त्रणया कथं कथमपि क्षीणा निशा जाग्रतो
दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ॥ १९.५ ॥

[ तापस० ४ ]

1 S प्रेमस्वन्धः 2. I वसन्तस्य. 3. E °स्वङ्के. 4 C, E प्रदोष
5 C, E कृतात्मिना. 6. C, E कथा.

**प्रकृतिव्यत्यय** इति । प्रकृतिर्दिव्या मानुषी दिव्यमानुषी पातालीया

इत्यादिना । पञ्चमे समागमप्रत्याशया विप्रलम्भेऽङ्कुरिते—

तथाभूते तस्मिन् मुनिवचसि जातागसि मयि
प्रयत्नान्तर्गूढा रुषमुपगता मे प्रियतमा ।
प्रसीदेति प्रोक्ता न खलु कुपितेत्युक्तिविधुरं
समुद्भिन्ना पीतैर्नयनसलिलैः स्थास्यति पुरः ॥ १९६ ॥

[ तापस० ५.२२ ]

इत्यादिना । षष्ठे च

त्वत्सम्प्राप्तिविलोभितेन सचिवैः प्राणा मया धारिता-
स्तन्मत्वाऽत्यजतः शरीरकमिदं नैवास्ति निःस्नेहता ।
आसन्नोऽवसरस्तवानुगमने जाता धृतिः किं त्वयं
खेदो यच्च तवानुगं न हृदयं तस्मिन् क्षणे दारुणे ॥ १९७ ॥

[ तापस० ६.३ ]

इत्यादिना च वासवदत्ताविषयो जीवितसर्वस्वाभिमानात्मा प्रेमबन्धस्तत्तद्विभावैश्चित्यात करुणविप्रलम्भादिभूमिकां गृह्णन् विच्छिन्नविच्छिन्नोऽपि समस्तेतिवृत्तव्यापितया दर्शितः । राज्यप्रत्यापत्त्या हि सचिवनीतिमहिमोपनतया तदङ्गभूतपद्मावतीलाभानुगतयानुप्राप्यमानरूपा वासवदत्ताधिगतिरेव तत्र फलम् । निर्वहणे हि—

दृष्टा यूयं निर्जिता विद्विषश्च प्राप्ता देवी भूतधात्री च भूयः ।
सम्बन्धोऽभूद् दर्शकेनापि सार्धं किं तद् दुःखं यत्नतः शान्तमद्य ॥ १९८ ॥

[ तापस० ६.९ ]

इति देवीलाभप्राधान्यं निर्वाहितम् ॥

**दिव्येति** । दिव्यः स्वभाव इत्यर्थः । एवं मानुष्यादिष्वपि व्याख्येयम् । तत्र दिव्या यथा—

स्मृत्वा यन्निजवारवासरतया वीणासमं तुम्बुरो
रुद्गीतं नलकूबरस्य विरहादुत्कण्ठलं रम्भया ।
तेनैरावणकर्णचापलमुषा शक्रोऽपि निद्रां जहद्
भूयः कारित एव हासिनि शचीवक्त्रे दृशां संभ्रमम् ॥ १९९ ॥

[ ]

1. C drops इत्यादिना. 2. E गुढारुष'' 3. C प्रीतै. 4. E तुम्बरो- 5. D, E कण्ठुलं. The KM (p. 42) reads कञ्चुलं

मर्त्यपातालीया दिव्यपातालीया दिव्यमर्त्यपातालीया चेति सप्तधा।

मानुषी यथा—

वध्वः श्वश्रूस्थाने व्यवहरति पुत्रः पितृपदे
पदे रिक्ते रिक्ते विनिहितपदार्थान्तरमिति।
नदीस्रोतोन्यायादकलितविवेकक्रमघन
न च प्रत्यावृत्तिः प्रवहति जगत् पूर्णमथवा॥ २००॥

[ ]

**दिव्यमानुषी** तु चतुर्धा। दिव्यस्य मर्त्यागमने मर्त्यस्य च स्वर्गगमन इत्येको भेद। दिव्यस्य मर्त्यभावे मर्त्यस्य च दिव्यभाव इति द्वितीय। दिव्यैर्निवृत्तपरिकल्पनया तृतीय.। प्रभावाविर्भूतदिव्यरूपतया चतुर्थ।

तत्र दिव्यस्य मर्त्यागमन यथा—

श्रिय पतिः श्रीमति शासितु जग-
जगन्निवासो वसुदेवसद्मनि।
वसन् ददर्शावतरन्तमम्बरा-
द्धिरण्यगर्भाङ्गभुवं मुनिं हरिः॥ २०१॥

[शिशुपाल० १ १]

मर्त्यस्य स्वर्गमन यथा—

पाण्डोर्नन्दननन्दन वनमिद संकल्पजैः सीधुभि
क्लृप्तापानककेलिकल्पतरुषु द्वन्द्वैः सुधालेहिनाम्।
अप्यत्रेन्दुशिलालवालवलयं सन्तानकाना तले
ज्योत्स्नासंगलदच्छनिर्झरजलैर्यत्नं विना पूर्यते॥ २०२॥

[ ]

दिव्यस्य मर्त्यभावो यथा—

इति विकसति तस्मिन्नन्ववाये यदूना
समजनि वसुदेवो देवकी यत्कलत्रम्।
त्रिभुपरमथ तस्मान् षोडशस्त्रीसहस्र-
प्रणिहितपरिरम्भ पद्मनाभो बभूव॥ २०३॥

[ ]

1 S drops सप्तधा. 2 C drops one रिक्ते. 3. A drops तु चतु
4 E स्वर्गगमने° 5 E °वृत्ते परि°. 6. E स्वर्गगमनं. 7. E शीधुभिः.
8. C drops °कानां त 9. C, E drop इति. 10. E विकसित.

मर्त्यस्य दिव्यभावो यथा—

आकाशयानतटकोटिकृतैकपादा-
स्तद्धेमदण्डयुगलान्यवलम्ब्य हस्तैः ।
कौतूहलात्तव तरङ्गविघट्टितानि
पश्यन्ति देवि मनुजाः स्वकलेवराणि ॥ २०४ ॥ [ ]

दिव्येतिवृत्तपरिकल्पना यथा—

ज्योत्स्नापूरप्रसरविशदे सैकतेऽस्मिन् सरय्वा
वादद्यूतं चिरतरमभूत् सिद्धयूनो: कयोश्चित् ।
एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥ २०५ ॥

प्रभावाविर्भूतदिव्यभावो यथा—

मा गा: पातालमुर्वि स्फुरसि किमपरं पाट्यमान. कुर्देत्य
त्रैलोक्य पादपीतप्रथिम न हि बले पूरयस्यूनमङ्घ्रे. ।
इत्युत्स्वप्नायमाने भुवनभृति शिशावङ्कसुप्ते यशोदा
पायाच्चकाङ्कपादप्रणतिपुलकितस्मेरगण्डस्थला व. ॥ २०६ ॥

**पातालीया** यथा—

कर्कोट कोटिकृत्व. प्रणमति पुरतस्तक्षके देहि चक्षु:
सज्ज सेवाञ्जलिस्ते कपिलकुलिकयो: स्तौति च स्वस्तिकस्त्वाम् ।
पद्मः सद्मैष भक्तेरवलगति पुनः कम्बलोऽयं बलोऽयं
सोत्सर्प: सर्पराजो व्रजतु निजगृहं प्रेष्यतां शङ्खपाल. ॥ २०७ ॥

**मर्त्यपातालीया** यथा—

आर्द्रावले व्रज न वेत्स्यपकर्ण कर्ण
द्विः संदधाति न शरं हरशिष्यशिष्य. ।
तत साम्प्रत समिति पश्य कुतूहलेन
मर्त्यैः शरैरपि किरीटिकिरीटमाथम् ॥ २०८ ॥ [ ]

इहापि दिव्यमानुषवन्मिश्रभेदानुगमः ।

**दिव्यपातालीया** यथा—

स पातु वो यस्य शिखाश्मकर्णिकं
स्वदेहनालं फणपत्रसंचयम् ।
बिभाति जिह्वायुगलोलकेसरं
पिनाकिनः कर्णभुजङ्गपङ्कजम् ॥ २०९ ॥ [ ]

1. E बार°. 2. D °भाव:. 3. The KM (p. 43) reads पुर: 4. A, B, C, D काम्बलो. 5. A, B, C, D, E सर्पराज. The reading in the text is adopted from the KM.

वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ता उत्तमाधममध्यमा च ।

तत्र रतिहासशोकाद्भुतानि मानुषोत्तमप्रकृतिवद् दिव्यादिष्वपि ।

**दिव्यमर्त्यपातालीया** यथा --

आस्तीकोऽस्ति मुनिः स्म विस्मयकृत पारीक्षितीयान्मखात्
त्राता तक्षकलक्ष्मणः फणभृतां वंशस्य शक्रस्य च ।
उद्बुद्ध्यन्मलयाद्रिचन्दनलतास्वान्दोलनप्रक्रमे
यस्याद्यापि सविभ्रमं फणिवधूवृन्दैर्यशो गीयते ॥ २१० ॥

**धीरोदात्तेति** । धर्मयुद्धवीरप्रधानो धीरोदात्त[1] । धीरोद्धतादिषु त्रिष्वपि यथाक्रमं रौद्रशृङ्गारशान्तलक्षणनियतरसप्राधान्येऽपि अवश्यभावित्वादुत्साहस्य वीररसप्राधान्यमपि प्रतिपत्तव्यम् । ततो वीररौद्रप्रधानो धीरोद्धतः । वीरशृङ्गारप्रधानो धीरललितः । दानधर्मवीरशान्तप्रधानो धीरप्रशान्त[2] इति ।

ननु यद्युत्साहादिभाववर्णने कथञ्चिद् दिव्यमानुषाद्यौचित्यपरीक्षा क्रियते तत् क्रियताम् । रत्यादौ तु किं तया प्रयोजनम् । रतिर्हि भारतवर्षोचितेनैव व्यवहारेण दिव्यानामपि वर्णनीयेति स्थितिः । तथा चाह --

(55) कस्माद्भारतमिष्टं वर्षेष्वन्येषु देशविहितेषु ।
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात् ॥
उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः ।
तेषु हि वर्षेषु सदा न तत्र दुःखं न वा शोकः ॥ [नाट्यशास्त्र १८ ९८-९९]

इत्याशङ्क्याह **मानुषोत्तमप्रकृतिवदिति** । न वयं दिव्यमौचित्यं शृङ्गारविषयमन्यत् किञ्चिद् ब्रूमः । किं तर्हि, भारतवर्षविषयं यथोत्तमनायकेषु राजादिषु शृङ्गारोपनिबन्धस्तथा दिव्याश्रयोऽपि शोभते । न च राजादिषु प्रसिद्धग्राम्यसंभोगोपवर्णनं प्रसिद्धं नाटकादौ तथैव दिव्येषु तत् परिहर्तव्यम् । नाटकादेरभिनेयत्वादभिनयस्य संभोगशृङ्गारविषयस्यासभ्यत्वात् तत्र परिहार इति चेत् -- ननु[4] यद्यभिनयस्यैवंविषयस्यासभ्यता तत् काव्यस्यैवंविषयस्य सा केन वार्यते[5] । तस्मादभिनेयार्थेऽनभिनेयार्थे च काव्ये यदुत्तमप्रकृतेः राजादेरुत्तमप्रकृतिभिः सह ग्राम्यसंभोगवर्णनं तदसभ्यं तथैव दिव्यादिविषयम् । न च संभोगस्य सुरतलक्षण एवैकः प्रकारो यावदन्येऽपि परस्परप्रेमदर्शनादयः प्रभेदाः संभवन्ति । त एव चोत्तमप्रकृतिविषये वर्णयितुमुचिताः । एवं हासादिष्वप्यौचित्यं योज्यमिति ।

1. A, B, E omit धीरोदात्तः. 2. E drops प्रशान्त. 3 The Nāṭyaśāstra (Vol 2, p. 446) reads देव'. 4 The Dhvanyāloka (p. 332) reads न in place of ननु. 5. D, E drop विषयस्याभ्यता तत्काव्यस्यैवं.

किं तु रतिः संभोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया । तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम् । यत्तु **कुमारसंभवे** हरगौरीसंभोगवर्णनं तत् कविशक्तितिरस्कृतत्वाद् भूम्ना न दोषत्वेन प्रतिभासते ।

क्रोधोऽपि भ्रुकुट्यादिविकारवर्जितः सद्यः फलदो निबद्धव्यः । यथा —

क्रोधं प्रभो संहर संहरेति यावद् गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ २०० ॥

[ कुमार० ३.७२ ]

स्वःपातालगमनसमुद्रलङ्घनादावुत्साहस्तु मानुषेभ्योऽन्येषु । मानुषेषु

दिव्यादिषु रतेः संभोगविप्रलम्भोभयरूपाया वर्णनीयत्वेन सामान्येनाभिधाने उत्तमदेवताविषयत्वेनापि तथा प्रसक्तौ विशेषमाह–**किं त्विति ।** संभोग. परस्परावलोकनप्रणयकलहसगीन(१ संगत)कादि । स चासौ शृङ्गारश्च, तद्रूपा । अनुचितमिति । आस्वादयितॄणां हि यत्र चमत्कारविघातस्तदेव रससर्वस्वम्, आस्वादायत्तत्वात् । उत्तमदेवतासंभोगपरामर्शे च पितृसंभोग इव लज्जातन्द्रादिना कश्चमत्कारावकाश इत्यर्थः । शक्तितिरस्कृतत्वादिति । संभोगोऽपि ह्यसौ प्रतिभानवता कविना तथा वर्णितो यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति । यथा निर्व्याजपराक्रमस्य पुरुषस्याविषयेऽपि युध्यमानस्य तावत्तस्मिन्नवसरे साधुवादो वितीर्यते, न तु पौर्वापर्यपरामर्शः । तथात्रापीति भावः । यदाह **ध्वनिकारः**—

(56) अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य स झगित्यवभासते ॥ इति ।

[ ध्वन्यालोक ३ (पृ ३१६) ]

**अन्येष्विति** । दिव्यादिषु । तथा च केवलमनुष्यस्य राजादेर्वर्णने सप्तार्णवलङ्घनादिलक्षणा व्यापारा उपनिबध्यमाना वर्णनामहिम्ना सौष्ठवभृतोऽपि नीरसा एव नियमेन भवन्ति ।

1. L पातालगमन. 2. The Locana (p. 317) reads लज्जातङ्कादिना. 3 The Locana (p. 317) reads °परामर्शे. 4. The Locana (p. 316) reads झटित्य°.

तु यावदवदानं प्रसिद्धमुचितं वा तावदेव वर्णनीयम्। अधिकं तु निबध्यमानमसत्यप्रतिभासेन नायकवद् वर्तितव्यं, न प्रतिनायकवदित्युपदेशे न पर्यवस्येत्। एवमुक्तानां प्रकृतीनामन्यथावर्णनं व्यत्ययः।

तथा तत्रभवन् भगवन्निति उत्तमेन वाच्यं, नाधमेन, मुनिप्रभृतौ न राजादौ। भट्टारकेति न राजादौ। परमेश्वरेति न मुनिप्रभृतौ। प्रकृतिव्यत्ययापत्तेः। यदाह--

(15) तत्रभवन् भगवन्निति नार्हत्यधमो गरीयसो वक्तुम्।
भट्टारकेति च पुनर्नैवैतानुत्तमप्रकृतिः॥
तत्रभवन् भगवन्निति नैवार्हत्युत्तमोऽपि राजानम्।
वक्तुं नापि कथञ्चिन्मुनिं च परमेश्वरेशेति॥

[रुद्रट. ६. १९-२०]

ननु नागलोकगमनादयः सातवाहनप्रभृतीनां श्रूयन्ते। तदलोकसामान्यप्रभावातिशयवर्णने किमनौचित्यं सर्वोर्वीभरक्षमाणां भूभुजामित्याशङ्कयाह-- **मानुषेष्विति**। न वयं ब्रूमो यत्प्रभावातिशयवर्णनं न समुचितं राज्ञां, किं तु केवलमनुष्याश्रयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यादिकर्मौचित्यं न योजनीयम्। दिव्यमानुषादौ तु तद्योजनमविरुद्धमेव। यथा पाण्डवादिकथायाम्। सातवाहनादिषु तु येषु यावदवदानं श्रूयते तावदेवोपनिबद्धव्यमित्यर्थः। अवदानमिति। सातिशयं कर्म।

**अधिकं त्विति**। अयमर्थः--यत्र विनेयानां प्रतीतिखण्डना न जायते तादृग् वर्णनीयम्। तत्र केवलमानुषस्य एकपदे सप्तार्णवलङ्घनमसंभाव्यमानतया कृतमिति हृदयं स्फुरदुपदेश्यस्य चतुर्वर्गोपायस्यालीकतां बुद्धौ निवेशयति। रामादेस्तु चरितं तथाविधमपि पूर्वप्रसिद्धपरम्परोपचितसंप्रत्ययोपारूढं नासत्यतया चकास्ति। अत एव तस्यापि यदा प्रभावान्तरमुत्प्रेक्ष्यते तदा तादृशमेव न त्वसंभावनास्पदं वर्णनीयमिति।

1 I बध्यमानम्. 2 A, B (and the Locana p. 330) °वर्णनमनुचितं. 3 The Locana (p 330) reads यावदपदानं. 4 C, E यत्र च नेयानां. 5 The reading in the Locana (p. 331) is °यानृतामिति. 6. A, B रूढमासत्यतया, the Locana (p 331) reads °रूढमसत्यतया न.

एवं देशकालवयोजात्यादीनां वेषव्यवहारादि समुचितमेवोपनिबद्धव्यम् ।

**देशकालवयोजात्यादीनामिति** । तत्र जगज्जगदेकदेशश्च देश· । द्यावापृथिव्यात्मकमेकं जगदित्येके यथा—

हलमगु बलस्यैकोऽनड्वान् हरस्य न लाङ्गल
क्रमपरिमिता भूमिर्विष्णोर्न गौर्न च लाङ्गलम् ।
प्रभवति कृषिर्नाद्याप्येषां द्वितीयगवं विना
जगति सकले नेदृग् दृष्टं दरिद्रकुटुम्बकम् ॥ २११ ॥
[ ]

दिवस्पृथिव्यौ द्वे जगतीत्यपरे । यथा —

रुणद्धि रोदसी चास्य यावन् कीर्तिरनश्वरी ।
तावत् किलायमध्यास्ते सुकृती वैबुधं पदम् ॥ २१२ ॥
[भामह १·७]

स्वर्गमर्त्यपातालभेदात् त्रीणि जगन्तीत्यपरे । यथा—

त्वमेव देव पातालमाशानां त्वं निबन्धनम् ।
त्व चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ २१३ ॥
[ ]

तान्येव भूर्भुव· स्व·–इत्यन्ये । यथा—

नमस्त्रिभुवनाभोगभृतिखेदभरादिव ।
नागनाथाङ्कपर्यङ्कशायिने शार्ङ्गधन्विने (² धन्वने) ॥ २१४ ॥
[ ]

महर्जनस्तपः सत्यमित्येतैः सह सप्तेत्यपरे । यथा—

संस्तम्भिनी पृथुनितम्बतटैर्धरित्र्याः
संवाहिनी जलमुचां चलकेतुहस्तै· ।
**हर्षस्य** सप्तभुवनप्रथितोरुकीर्तेः
प्रासादपङ्क्तिरियमुच्छिखरा विभाति ॥ २१५ ॥
[ ]

तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दशेति केचित् । यथा—

1 D, E, drop यथा. 2. C, E मृत्यु. 3. The Kāvyamīmāṁsā (p. 90) reads 'भृति°. 4. A, B, C, D तरैर्ध'.

निरवधि च निराश्रयं च यस्य स्थितमनुवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ २१६ ॥

तानि सप्तभिः पातालैः सहैकविंशतिरिति केचित् । यथा —

हरहासहरावासहरहारनिभप्रभाः ।
कीर्तयस्तव लिम्पन्तु भुवनान्येकविंशतिम् ॥ २१७ ॥

[ ]

सामान्यविवक्षा एकत्वमिति, विशेषविवक्षा त्वनेकत्वमिति सर्वमुपपन्नम् । तत्र भूर्लोकः पृथ्वी, तत्र च सप्त महाद्वीपाः ।

(57) जम्बूद्वीपः सर्वमध्ये ततश्च प्लक्षो नाम्ना शाल्मलोऽतः कुशोऽतः ।
क्रौञ्चः शाकः पुष्करश्चेत्यथैषां बाह्या बाह्या संस्थितिर्मण्डलीभिः ॥
लावणो रसमयः सुरोदकः सार्पिषो दधिजलः पयःपयाः ।
स्वादुवारिरुदधिश्च सप्तमस्तान् परीत्य त इमे व्यवस्थिताः ॥

एक एवायं लावणः समुद्र इत्येके । तदाहुः -

द्वीपान्यष्टादशात्र क्षितिरपि नवभिर्विस्तृता स्वाङ्गखण्डै-
रेकोऽम्भोधिर्दिगन्तप्रसृमरसलिलः प्राज्यमेतत् सुराज्यम् ।
कस्मिन्नप्याजिकेलिव्यतिकरविजयोपार्जिते वीरवर्ये
पर्याप्तं मे न दातुमन्तदिदमिति धिया वेधसे यश्चुकोप ॥ २१८ ॥

[ ]

त्रय इत्यन्ये । यथा—

आकम्पितक्षितिभृता महता निकाम
हेलाभिभूतजलधित्रितयेन यस्य ।
वीर्येण संहतिभिदा विहितोन्नतेन
कल्पान्तकालविस्रुतः पवनोऽनुचक्रे ॥ २१९ ॥

चत्वार इत्यपरे । यथा—

चतुःसमुद्रवेलोर्मिरचितैकावलीलतम् ।
मेरुमप्यद्रिमुल्लङ्घ्य यस्य क्वापि गतं यशः ॥ २२०॥

[ ]

1. A °हासहास°. 2. A, B कुशो. E. कशो. 3. E शाकः 4 D सुरोदय.°.
5 The KM (p 91) reads प्रविसृत

संभत्यन्ये । यथा—

अगस्त्यचुलकोत्क्षिप्तसप्तवारिधिवारिणि ।
मुहूर्तं केशवेनापि तेरता पूतरायितम् ॥ २२१ ॥
[ ]

कविप्रसिद्धया वाऽविमृष्टपरमार्थं सर्वमुपपन्नम् ।

मध्ये जम्बूद्वीपमाद्यो गिरीणां मेरुर्नाम्ना काञ्चन. शैलराज ।
यो मूर्तानामौषधीनां निधान यश्चावास सर्ववृन्दारकाणाम् ॥ २२२ ॥
[ ]

तमेनमवधीकृत्य ब्रह्मणा पुण्यकर्मणा ।
तिर्यगूर्ध्वमधस्ताच्च विश्वस्य रचना कृता ॥ २२३ ॥

मेरोश्चतुर्दिशमिलावृतं वर्षम । तच्चोत्तरेण (? तस्योत्तरेण) त्रयो वर्षगिरय । नील श्वेत शृङ्गवाँश्च । रम्यकं हिरण्मयमुत्तरा कुरव इति च क्रमेण त्रीणि तेषां[2] वर्षाणि । दक्षिणेनापि त्रय एव । निषधो हेमकूटो हिमवाँश्च । हरिवर्षं किंपुरुषं भारतमिति त्रीणि वर्षाणि । तत्रेदं भारतं वर्षमन्त्यम् । अस्य च नव भेदा — इन्द्रद्वीप कसेरुमांस्ताम्रपर्णो गभस्तिमान नागद्वीपः सौम्यो गन्धर्वो वरुण कुमारीद्वीपश्च । पञ्च शतानि जल, पञ्च स्थलमिति विभागेन प्रत्येकं योजनसहस्रावधयो दक्षिणात् समुद्राद हिमवन्त यावत परस्परमगम्यास्ते । तान्येतानि यो जयति स सम्राडित्युच्यते । कुमारीपुरात प्रभृति बिन्दुसरोऽवधि योजनानां दशशती चक्रवर्तिक्षेत्रम । तां विजयमानश्चक्रवर्ती भवति । चक्रवर्तिचिह्नानि तु—

(58) चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
प्रोक्तानि सप्त रत्नानि सर्वेषां चक्रवर्तिनाम् ।
[ ]

कुमारीद्वीपे च—

(59) विन्ध्यश्च पारियात्रश्च शुक्तिमानृक्षपर्वत ।
महेन्द्रसह्यमलयाः सप्तैते कुलपर्वता ॥

तत्र विन्ध्यादयः प्रतीतस्वरूपा. । मलयविशेषास्तु चत्वार । तेषु प्रथमो यथा—

आमूलयष्टेः फणिवेष्टितानां सचन्दनानां जननन्दनानाम् ।
कक्कोलकैलामरिचैर्वृतानां[4] जातीतरूणां च स जन्मभूमि ॥ २२४ ॥

1 The KM (p. 91) reads तदन्तः पूतरायितम् (?). The editor of the KM would like to read प्रस्तरायितम् instead of पूतरायितम् (vide Notes to page 91) 2 D drops तेषां and दक्षिणेन to वर्षाणि. 3 A, B, C, D, E नग°. The reading in the text is adopted from the KM. 4. The KM (p. 92) reads °र्यूतानां.

द्वितीय —

यस्योत्तमा मौक्तिककामधेनुरुपत्यकामञ्चति ताम्रपर्णी ।
रत्नेश्वरो रत्नमहानिधानं कुम्भोद्भवस्तं मलयं पुनाति ॥ २२५ ॥
[ ]

तत्र द्रुमा विद्रुमनामधेया वंशेषु मुक्ताफलजन्म तत्र ।
मदोत्कटैः केसरिकण्ठनादैः स्फुटन्ति तस्मिन घनसारवृक्षा ॥ २२६ ॥
[ ]

तृतीय —

विलासभूमिः सकलामराणां पदं नृणां गौर्मुनिपुङ्गवस्य ।
सदा फलैः पुष्पलताविनानैराश्चर्यमूलं मलयः स तत्र ॥ २२७ ॥
[ ]

चतुर्थ —

सा तत्र चामीकररत्नचित्रैः प्रासादमालावलभीविटङ्कैः ।
द्वारार्गलाबद्धसुरेश्वराङ्का लङ्केति या रावणराजधानी ॥ २२८ ॥
[ ]

प्रवर्तते कोकिलनादहेतुः पुष्पप्रसूः पञ्चमजन्मदायी ।
तेभ्यश्चतुर्भ्योऽपि वसन्तमित्रमुदङ्मुखो दक्षिणमातरिश्वा ॥ २२९ ॥
[ ]

पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तरमार्यावर्तः । तस्मिंश्चातुर्वर्ण्यं चातुराश्रम्यं च । तन्मूलश्च सदाचारः । तत्रत्यो व्यवहारः प्रायेण कवीनाम् । तत्र वाराणस्याः पुरतः पूर्वदेशः । यत्राङ्गकलिङ्गकोसलतोसलोत्कलमगधमुद्गरकविदेहनेपालपुण्ड्रप्राग्ज्योतिषताम्रलिप्तकमलदमल्लवर्तकसुह्मब्रह्मोत्तरप्रभृतयो जनपदाः । बृहद्गृहलोहितगिरिचकोरदर्दुरनेपालकामरूपादयः पर्वताः । शोणलोहितौ नदौ । गङ्गाकरतोयाकपिशा(? शा)द्याश्च नद्यः । लवलीग्रन्थिपर्णिकागुरुद्राक्षाकस्तूरिकादीनामुत्पादः । माहिष्मत्याः परतो दक्षिणापथः । यत्र महाराष्ट्रमाहिष्मकाश्मकवैदर्भकुन्तलक्रथकैशिकसूर्पारककाञ्चिकेरलकावेरमुरलवानवासकसिंहलचोडदण्डकपाण्ड्यपल्लवगाङ्गनासिक्यकोङ्कण-

1 A, B तत्र यो 2. C, E परतः. 3. E मगरमुद्गधक°. 4. C, E °कमलज°.
5 A, B लोहितारि°. C लोहितगिर°. We have emended the readings.
6. C, E °त्यौ नद्यौ. 7. E कल्पमा°. 8. C पतो (for परतो). 9. A, B °शमवैदर्भ. E काश्यक°. 10. C कुन्तल°. 11. A कौशिक. 12. C किरलि°.
13. A, B कावेल°. 14. B °लवासकसिंहल°. 15 C चोष. 16. A, B दण्ड्यपल्लव.

कोल्लगिरिवेल्लरप्रभृतयो जनपदाः । विन्ध्यदक्षिणपादमहेन्द्रमलयमेकलपालमञ्जरसह्यश्रीपर्वतादयः पर्वताः । नर्मदातापीपयोष्णीगोदावरीकावेरीभैमरथी वेणीकृष्णवेणीवञ्जुरातुङ्गभद्राताम्रपर्ण्युपलावतीरावणगङ्गाद्या नद्यः । तदुत्पत्तिर्मलयोत्पत्त्या व्याख्याता ।

देवसभायाः परतः पश्चाद्देश । तत्र देवसभसुराष्ट्रदशेरकत्रवणभृगुकच्छकच्छीयानर्तार्बुदब्राह्मणवाहयवनप्रभृतयो जनपदाः । गोवर्धनगिरिनगरदेवसभमाल्यशिखरार्बुदादयः पर्वताः । सरस्वतीश्वभ्रवतीवार्तघ्नीमहीहिण्डिबाद्या नद्यः । करीरपीलुगुग्गलुखर्जूरकरभादीनामुत्पादः ।

पृथूदकात् परत उत्तरापथः—यत्र शककेकयवोक्काणहूणवाणायुजकम्बोजवाह्लीकबहूवलम्पाककुलूतकीरतङ्गणतुषारतुरुष्कबर्बरहरहूरहुहुकसहूडहंसमार्गरमठकरकण्ठप्रभृतयो जनपदाः । हिमालयजालन्धरकलिन्द्रेन्द्रकीलचन्द्राचलादय पर्वताः । गङ्गासिन्धुसरस्वतीशतद्रुचन्द्रभागायमुनैरावतीवितस्ताविपाशाकुहूदेविकाद्या नद्यः । सरलदेवदारुद्राक्षाकुङ्कुमचमराजिनसौवीरस्रोतोञ्जनसैन्धववैडूर्यतुरगाणामुत्पादः । तेषां मध्ये मध्यदेश इति कविव्यवहार इति । यदाहु.—

(60) हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः स कीर्तितः ॥

[ मनु० २.२१ ]

तत्र ये देशा पर्वताः सरितो द्रव्याणामुत्पादश्च तत्प्रसिद्धिसिद्धमिति न निर्दिष्टम् ।

(61) द्वीपान्तराणां ये देशाः पर्वताः सरितस्तथा ।
नातिप्रयोज्या कविभिरिति गाढं न चिन्तिताः ॥

विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तरमन्तर्वेदी । तदपेक्षया दिशो विभजेतेति केचित् । वयं तु ब्रूमः—तथाऽत्रापि महोदयमूलमवधीकृत्य दिशो विभजेत । प्राच्यवाचीप्रतीच्युदीची च चतस्रो दिश इत्येके । यथा—

1. A °कौल°, B कोल°. C कोल्लारप्रभृतयो. 2. B पादहेन्द्र. 3. B omits कावेरी. 4. A, B °रथी. 5. C, D omit कृष्णवेणी 6 A, B °पर्ण्यपल्या°. The KM (p. 94) reads °पर्ण्युत्पला°. 7. C °माल°. 8 C omits हूण. 9 A, B, C वनायुज°. 10. The KM (p. 94) reads काम्बोज. 11. The KM (p. 94) reads बहूलवलिम्पाक°.

चतसृष्वपि दिक्षु रणे द्विषतः प्रति येन चित्रचरितेन ।
विहितमपूर्वमदक्षिणमपश्चिममनुत्तरं कर्म ॥ २३० ॥

[ ]

ऐन्द्र्याग्नेयी याम्या नैरृती वारुणी वायव्या कौबेर्यैशानी चाष्टौ दिश इत्यन्ये । यथा--

एक ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-
भूतानां पञ्चम यान्यलमृतुषु तथा षट्सु नानाविधानि ।
युष्माकं तानि सप्त त्रिदशमुनिनुतान्यष्टदिग्भांजि भानो-
र्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि ॥ २३१ ॥

[ सूर्यशतक १३ ]

ब्राह्मी नागीया च द्वे, ताभ्यां सह दशेत्यपरं । यथा--

दशदिक्कूटपर्यन्तसीमसंकटभूमिके ।
विषमा स्थूललक्षस्य ब्रह्माण्डग्रामके स्थिति ॥ २३२ ॥

[ ]

सर्वमस्तु । विवक्षापरतन्त्रा हि दिशामियत्ता । तत्र चित्रास्वात्यन्तरं प्राची तदनुसारेण प्रतीची । ध्रुवेणोदीची, तदनुसारेणापाची । अन्तरेषु विदिश । ऊर्ध्वं ब्राह्मी । अधस्तान्नागीयेति । द्विधा च दिग्व्यवहारः सर्वांनां प्राक् सिद्धां विशिष्टस्थानावधिसाध्यश्च । तत्र प्राक् सिद्धे प्राची-

द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै-
र्ज्योत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्चन्द्रमा,
प्राची बालबिडाललोचनरुचा जाता च पात्र ककुप ॥ २३३ ॥

[ विद्धशाल० १.११ ]

दक्षिणा --

दक्षिणो दक्षिणामाशां यियासन् सोऽधिकं बभौ ।
जिहासन् दक्षिणामाशां भगवानिव भास्कर ॥ २३४ ॥

[ ]

पश्चिमा -

पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे विवस्वता ।
दीर्घया प्रतिमया सरोम्भसस्तापनीयमिव सेतुबन्धनम् ॥ २३५ ॥

[ कुमार० ८.३४ ]

1. E वायवी. 2 A, B एकज्योति . 3 The KM reads 'लक्ष्यस्य 4 A, B drop तदनुसारेण प्रतीची 5. A, B प्राचीप्रतीच्यौ'. 6 E 'गीया चि(चे)ति.

उत्तरा--

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥ २३६ ॥

[ कुमार० १·१ ]

विशिष्टस्थानावधौ तु दिग्विभागे पूर्वपश्चिमौ--

यादांसि ! हे चरत संगतगोत्रतन्त्रं पूर्वेण चन्दनगिरेरुत पश्चिमेन ।
नो चेन्निरन्तरधराधरसेतुसूतिगाकल्पमेष न विरंस्यति वो वियोगः ॥ २३७ ॥

[ बालरामायण ७·४७ ]

दक्षिणोत्तरौ यथा --

काञ्च्याः पुरो दक्षिणदिग्विभागे तथोत्तरस्या दिशि वारिराशेः ।
कर्णान्तचक्रीकृतपुष्पचापो रत्या समं साधु वसत्यनङ्गः ॥ २३८ ॥

[　　　　　　　　　]

उत्तरादावप्युत्तरदिगभिधानमनुत्तरादावप्युत्तरदिगभिधानं च । तयोः प्रथमम्--

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योद्याने कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ २३९ ॥

[ मेघदूत २·१२ ]

द्वितीयम् --

सह्याद्रेरुत्तरे भागे यत्र गोदावरी नदी ।
पृथिव्यामिह कृत्स्नायां स प्रदेशो मनोरमः ॥ २४० ॥

एवं दिगन्तरेष्वपि । तत्र देशपर्वतनद्यादीनां दिशां च यः क्रमस्तं तथैव निबध्नीयात् । साधारणं तूभयत्र लोकप्रसिद्धितश्च ।

तद्वद् वर्णनियमः । तत्र प्राच्यानां श्यामो वर्णो यथा--

श्यामेष्वङ्गेषु गौडीनां सूत्रहारैकहारिषु ।
चक्रीकृत्य धनुः पौष्पमनङ्गो वल्गु वल्गति ॥ २४१ ॥

दाक्षिणात्यानां कृष्णो यथा--

इदं भासां भर्तुर्द्रुतकनकगोलप्रतिकृति
क्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम् ।

1 E विगाह्य　2. E drops दिगभिधानमनुत्तरादाप्युत्तर.　3. A, B, C, D drop यथा.　4. A, C drop वल्गु.　5 E drops कृष्णो.　6. A drops कृतिः, C 'क्षति.

अथैष· प्राचीत· सरति मुरलीगण्डमलिन-
स्तरुच्छायाचक्रै. स्तबकित इव ध्वान्तविसर: ॥ २४२ ॥
[ ]

पाश्चात्यानां पाण्डुर्यथा—

शाखास्मेरं मधुकवलनाकेलिलोलेक्षणाना
भृङ्गस्त्रीणा बकुलमुकुलं कुन्तलीभावमेति ।
किं चेदानी यवनतरुणीपाण्डुगण्डस्थलीभ्य:
कान्ति स्तोक रचयति पद नागवल्लीदलेषु ॥ २४३ ॥
[ ]

उदीच्यानां गौरो यथा—

काश्मीरीगात्रलेखासु लोललावण्यवीचिषु ।
द्रावयित्वेव विन्यस्तं स्वर्णं षोडशवर्णकम् ॥ २४४ ॥
[ ]

मध्यदेश्यानां कृष्ण. श्यामो गौरश्च । कृष्णो यथा - -

युधिष्ठिरक्रोधवह्ने. कुरुवंशैकदाहिन ।
पाञ्चाली ददृशु· सर्वे कृष्णां धूमशिखामिव ॥ २४५ ॥
[ ]

एव श्यामोऽपि । न च कविमार्गे कृष्णश्यामयो· पाण्डुगौरयोर्वा महान् विशेष इति । गौरो यथा - —

नव नवनवनीतपिण्डगौरं प्रतिफलदुत्तरकोसलेन्द्रपुत्रि ।
अवगतमलिके मृगाङ्कबिम्बं मृगमदपत्रनिभेन लाञ्छनेन ॥ २४६ ॥
[ ]

विशेषस्तु पूर्वदेशराजपुत्र्यादीना गौर: पाण्डुर्वा वर्णः । यथा—

कपोले जानक्या: करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहु पश्यञ्छृण्वन् रजनिचरसेनाकलकल
जटाजूटग्रन्थि दृढयति रघूणां परिवृढ. ॥ २४७ ॥

[हनुमन्० ३·५० ]

1. A, B, C, D °वर्णिक. 2. A, B, C पाण्ड. 3. A drops नवनव. C, C drop one नव. 4 E drops प्रति. 5. A, B, C, D drop यथा. 6 C, E मुख. 7 A, B सारस्मेरं. C स्मेरस्मेरं.

यथा च—

तासा माधवपत्नीना सर्वासा चन्द्रवर्चसाम् ।
शब्दविद्येव विद्यानां मध्ये जज्वाल रुक्मिणी ॥ २४८ ॥

[ ]

एवमन्यदपि यथासंभवमभ्यूह्यम् ॥

**कालः** काष्ठादिभेदभिन्न । तथा च—

(61) काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठाः कथिता कला तु ।
त्रिंशत्कलश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता राज्यहनी समेते ॥

ते च चैत्राश्वयुजमासयोर्भवतः । चैत्रात् परं प्रतिमासं मौहूर्तिकी दिवसवृद्धिर्निशाहानिश्च त्रिमास्या । तत पर मौहूर्तिकी निशावृद्धिर्दिवसहानिश्च । आश्वयुजात् परत पुनरेतदेव विपरीतम् । राशितो राश्यन्तरसंक्रमणमुष्णभासो मासः । वर्षादि दक्षिणायनम् । शिशिराद्युत्तरायणम् । द्व्ययन संवत्सर इति सौर मानम् । पञ्चदशाहोरात्र. पक्ष. । वर्धमानसोमशुक्लिमा शुक्लो, वर्धमानसोमकृष्णिमा कृष्ण इति पित्र्य माससमानम् । अधुना (? अमुना)च वेदोदितः कृत्स्नोऽपि क्रियाकल्पः । पित्र्यमेव व्यत्यायितपक्षं चान्द्रमसम । इदमार्यावर्तवासिनः कवयश्च मानमाश्रिता. । एवं द्वौ पक्षौ मास द्वौ मासावृतुः । षण्णामृतूनां परिवर्त संवत्सरः । स च चैत्रादिरिति **दैवज्ञाः** । श्रावणादिरिति **लोकयात्राविदः** । तत्र नभा नभस्यश्च वर्षाः । यथा—

[ ]

गर्भान् बलाकासु निवेशयन्तो वशाङ्कुरान रवैर्निनदैः सृजन्त ।
रजोऽम्बुदाः प्रावृषि मुद्रयन्तो यात्रोद्यमं भूमिभृतां हरन्ति ॥ २४९ ॥

[ ]

स शल्लकीशालशिलीन्ध्रयूथीप्रसूनदः पुष्पितलाङ्गलीकः ।
दग्धोर्वरासुन्दरगन्धबन्धुरर्घत्ययं वारिमुचामनेहा ॥ २५० ॥

[ ]

वनानि नीलीदलमेचकानि धाराम्बुधौता गिरयः स्फुरन्ति ।
पूराम्भसा भिन्नतटास्तटिन्यः सान्द्रेन्द्रगोपानि च शाद्वलानि ॥ २५१ ॥

[ ]

चकोरहर्षी यतिचारचौरो वियोगिनीवीक्षितनाथवर्त्मा ।
गृहान् प्रति प्रस्थितपान्थसार्थः कालोऽयमाध्मातनभाः पयोदैः ॥ २५२ ॥

[ ]

या केलियात्रा करिकामिनीभिर्या तुङ्गहर्म्याग्रविलासशय्या ।
चतुःसमं यन्मृगनाभिगर्भं सा वार्षिके प्रथमातिथेयी ॥ २५३ ॥

[ ]

चलच्चटुलचातकः कृतकुरङ्गरागोदयः
सदर्दुररवोद्यमो मदभरप्रगल्भोरगः ।
शिखण्डिकुलताण्डवामुदितमद्रुकङ्काह्वयो
वियोगिषु घनागमः स्मरविषं विषं मुञ्चति ॥ २५४ ॥

[ ]

दलत्कुटजकुड्मलः स्फुटितनीपपुष्पोत्करो
नवप्रसवबान्धवः प्रचितमञ्जरीकार्जुनः ।
कदम्बकलुषाम्बरः कलितकेतकीकोरकः
श्लथांशुचुलसंचयो हरति हन्त घर्मात्ययः ॥ २५५ ॥

[ ]

तत्र पाश्चात्यः पौरस्त्यो वा वायुरिति कविसमयः । यथा
प्रावृष्यम्भोभृताम्भोदभरानिर्भरसम्भ्रमम् ।
कदम्बकुसुमामोदा वायवो वान्ति वारुणाः ॥ २५६ ॥

[ ]

यथा च
पौरस्त्यस्तोयदर्तोः पवन इव पतत् पावकस्येव धूमो
विश्वस्येवादिसर्गः प्रणव इव परं पावनं वेदराशेः ।
सन्ध्यानृत्तोत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥ २५७ ॥

[ सूर्यशतक ५७ ]

एष ऊर्जश्च शरत् । यथा -
प्रोन्मादयन्ती विमदान्मयूरान्प्रगल्भयन्ती कुररद्विरेफान्
शरत् समभ्येति विकासयन्ती पद्मानुन्मीलयन्ती कुमुदोत्पलानि ॥ २५८ ॥
सा भाति पुष्पाणि निवेशयन्ती बन्धूकबाणासनकुङ्कुमेषु ।
शेफालिकासप्तपलाशकाशभाण्डीरसौगन्धिकमालतीषु ॥ २५९ ॥

[ ]

1 A, B, C, D किल का°. 2 The KM reads धव°. 3 A प्रावृष्याम्भो°. 4. B °न्मोद°. C °न्मुद°. 5. A, B, C, D विशेषयन्ती. 6. A drops from ल्पिका to कारण्डव (p. 189, l 2)

सखञ्जरीटा सपय प्रसादा मा कस्य नो मानसमाच्छिनत्ति ।
कादम्बकारण्डवचक्रवाकसमारसक्रौञ्चकुलानुयाता ॥ २६० ॥

[ ]

उपानयन्ती कलहंसयूथमगस्त्यिदृष्ट्या पुनती पयांसि ।
मुक्तासु शुभ्रं दधती च गर्भं शरद् विचित्रैश्चरितैश्चकास्ति ॥ २६१ ॥

[ ]

क्षितिं खनन्तो वृषभाः खुराग्रै रोधो विषाणैर्द्विरदा रदन्तः ।
शङ्कं त्यजन्तो रुरवश्च जीर्णं कुर्वन्ति लोकानवलोकनोत्कान ॥ २६२ ॥

[ ]

अत्रावदानद्युति चन्द्रिकाम्बु नीलाब्भासं च नभः समन्तात् ।
सरेभवीथी [1]दिवि सावनारा [2]जीर्णाभ्रखण्डानि च पाण्डुराणि ॥ २६३ ॥

[

महानवम्या निखिलास्त्रपूजा नीराजना वाजिभटद्विपानाम्
दीपालिकायां विविधा विलासा यात्रोन्मुखस्तत्र नृपैर्विधेया ॥ २६४ ॥

[

व्योम तारतरतारकोत्करं स्यन्दनप्रचरणक्षमा मही ।
भास्कर शरदि दीप्तदीधितिर्[4]बुध्यते च सह माधवः सुरैः ॥ २६५ ॥

[ ]

केदार एव कलमाः परिणामनम्राः प्राचीनमामलकमर्पयति पाकनीलम् ।
एर्वारुक स्फुटननिर्गतगर्भगन्धमम्लीभवन्ति च जरत्त्रपुसीफलानि ॥ २६६ ॥

[ ]

गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयन्ति मुसलोल्लसनावधूतपाणिस्खलद्वलयपद्धतयो वधूट्यः ॥ २६७ ॥

[ ]

[8]तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः शृङ्गं रुरुस्त्यजति [9]मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव धर्मचिन्ता कामी दरिद्र इव शोषमुपैति मेघः ॥ २६८ ॥
[ सुभाषितावलौ (१८२१) भासस्य ]

1. A, B, C, D दिवसात्र. 2. A, B जीर्णाब्जख°. 3 A drops तर.
4. E °र्युध्यते. 5. E °मर्पयति 6. C आतक्ष्यन्ति. 7. A drops ल्लेल्लस
8 A, B ताक्ष्ण°. C, E तक्ष्ण 9. A drops मित्र.

नद्यो वहन्ति कुटिलक्रमयुक्तशुक्तिरेखाङ्कबालपुलिनोदरसुप्तकूर्मा: ।
अस्यां तरङ्गितनुतोयपलायमानमीनानुसारिबकदत्तकरालफाला: ॥ २६९ ॥
[ ]

अपङ्किलतटावटः शफरफाण्टफालोज्ज्वल:
पतत्कुररकातरभ्रमदभ्रमीनार्भक: ।
लुठत्कमठसैकतस्थलबकोटवाचाटित:
सरित्सलिलसञ्चय: शरदि मेदुरः सीदति ॥ २७० ॥
[ ]

वायुश्चात्रानियतदिक्क: । यथा—

उष सु बबुराकृष्टप्रजडावश्यायशीकराः ।
शेफालीकलिकाकोशकषायामोदिनोऽनिला: ॥ २७१ ॥
[ ]

सहा महस्यश्च हेमन्तः । यथा—

छिन्नमुचुकुन्दकलिकालिचतुरमुकुलः क्रमेण लवलीषु ।
पक्वषफलिनीकुसुमो जयति हिमर्तुर्नवावतार ॥ २७२ ॥
[ ]

पुन्नागरोध्रप्रसवावतंसा वामभ्रुव कञ्चुककुञ्चिताङ्गाः (? ङ्गय. ।)
वक्त्रोल्लसत्कुङ्कुमसिक्थकाढया संगन्धतैला. कबरीर्वहन्ति ॥ २७३ ॥
[ ]

यथा यथा पुष्यति शीतकालस्तुषारचूर्णोत्करकीर्णवात ।
तथा नथा यौवनशालिनीनां कवोष्णतामत्र कुचा लभन्ते ॥ २७४ ॥
[ ]

वराहवध्राणि नवौदनानि दधीनि संनद्धरसानि चात्र ।
सुकोमलाः सर्षपकन्दलीश्च भुक्त्वा जनो निन्दति[6] वैद्यविद्याम ॥ २७५ ॥
[ ]

अत्रोपचारः सलिलै: कवोष्णैर्यत्किञ्चिदत्र स्वदतेऽन्नपानम् ।
मुदुर्भगामत्र निपीड्य शेते स्वस्त्यस्तु नित्यं तुहिनर्तवेऽस्मै ॥ २७६ ॥
[ ]

1 C, E दन्त. 2. E मुचकुन्द°. 3. E कन्चुकि; the KM (p 102) reads कुञ्चिताङ्गयः. 4 The KM (p 102) reads °काढ्याः. 5. The KM (p 102) reads सुगन्ध . 6 E नन्दति

विमुक्तबर्हा विमदा मयूराः प्ररूढगोधूमयवा च सीमा ।
व्याघ्रीप्रसूतिः सलिलं सबाष्पं हेमन्तलिङ्गानि जयन्त्यमूनि ॥ २७७ ॥
[ ]

सशमीधान्यपाकानि क्षेत्राण्यत्र हरन्ति च ।
त्रिशङ्कुतिलका रात्र्यः पच्यन्ते लवणानि च ॥ २७८ ॥
[ ]

उद्यानानां मूकपुंस्कोकिलत्वं भृङ्गस्त्रीणां मौनमुद्रा मुखेषु ।
मन्दोद्योगाः पत्त्रिणां व्योमयात्रा हेमन्ते स्यात् सर्पदर्पक्षयश्च ॥ २७९ ॥
[ ]

कर्कन्धूना नागरङ्गीफलानां पाकोद्रेकः खाण्डवोऽप्याविरस्ति ।
कृष्णेक्षूणां पुण्ड्रकाणां च गर्भे माधुर्यश्रीर्जायते काप्यपूर्वा ॥ २८० ॥
येषां मध्येमन्दिरं तल्पसम्पन्न पार्श्वे दारा. स्फारतारुण्यताराः ।
लीलावह्निर्निह्नुतोद्दामधूमस्ते हेमन्तं ग्रीष्मशेषं विदन्ति ॥ २८१ ॥

वायुरत्रोदीच्य पाश्चात्यो वा । यथा—

लम्पाकीना किरन्तश्चिकुरविरचना रल्लकोल्लासयन्त
चुम्बन्तश्चन्द्रभागां विचिनसुमनसः कुङ्कुमान् कम्पयन्तः ।
एते कस्तूरिकैणप्रणयसुरभयो वल्लभा बाह्लीनां
कौलूतीकेलिकाराः परिचायितहिमं वायवो वान्त्युदीच्याः ॥ २८२ ॥
[ बालरामायण ५.३५ ]

यथा च --

भञ्जन् भूर्जद्रुमालीस्तुहिनगिरितटेषूद्धतत्वक्कराला:
रेवाम्भःस्थूलवीचीचयचकितचलच्चातकं व्याधुनानः ।
पाश्चात्यो वाति वेगाद् द्रुततुहिनशिलाशीकरासारवर्षे
मातङ्गक्षुण्णसान्द्रस्तुनसरलसरत्सारसारी समीरः ॥ २८३ ॥
[ ]

तपस्तपस्यश्च शिशिरः । स च हेमन्तधर्म एव । विशेषस्तु—

रात्रिर्विचित्रसुरतोचितयामदीर्घा चण्डो मरुद् वहति कुङ्कुमपङ्कसाध्यः ।
तल्पस्थितिर्द्विगुणतूलपटा किमन्यदर्घन्ति चात्र विततागुरुधूपधूमाः ॥ २८४ ॥
[ ]

1 A drops मुद्रा. 2. C, E वदन्ति. 3. A, B, C, D, E रल्लकॉ°; the reading in the text is adopted from the KM. 4. E कोलुते°. 5. The KM (p. 99) reads °वर्षी. 6 A drops सरत्सार; the KM (p. 99) reads सरलतरत्°. 7 E °दोर्घ. 8. A drops from कुङ्कुम to °स्थिति (l. 24).

आश्लेषिणः पृथुरतक्रमपीतशीतमायामिनी घनमुदो रजनीं युवानः ।
ऊर्वोर्मुहुर्वलनबन्धनसन्धिलोलपादान्तसंवलिततूलपटाः स्वपन्ति ॥ २८५ ॥

[ ]

पानेऽम्भसोः सुरसनीरसयोर्न भाति स्पर्शक्रियासु तुहिनानलयोर्न चात्र ।
नो दुर्भगासुभगयोः परिरम्भणे वा नामैवने च शशिभास्करयोर्विशेषः ॥२८६॥

[ ]

पुष्पक्रिया मरुबके जलकेलिनिन्दा कुन्दान्यशेषकुसुमेषु धुरि स्थितानि ।
सौभाग्यमेणतिलकाद्व्रजतेऽर्कबिम्बं काले तुषारिणि दहन्ति च चन्दनानि ॥२८७॥

[ ]

सिद्धार्थयष्टिषु यथोत्तरहीयमानसन्तानभिन्नघनसूचिपरम्परासु ।
द्वित्रावशेषकुसुमासु जनिक्रमेण पाकक्रमः कपिशिमानमुपादधाति ॥ २८८ ॥

[ ]

उदीच्यचण्डानिलताडितासु निलीनमीनासु जलस्य मूले ।
नालावशेषाब्जलतास्विदानीं विलासवापीषु न याति दृष्टिः ॥ २८९ ॥

[ ]

मायन्मनङ्गः पृषनैकतोषी पुष्यद्वराहो धृतिमल्लुलायः ।
दरिद्रनिन्द्यः सधनैकनन्द्यः स एष कालः शिशिरः करालः ॥ २९० ॥

[ ]

अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः ॥ २९१ ॥

[ औचित्यविचारचर्चायां मालवरुद्रस्य, सुभाषितहारावलौ भासस्य ]

स्त्रिय प्रकृतिपिङ्गला क्वथितकुङ्कुमालेपनै-
र्नितम्बफलकस्तनस्थलभुजोरुमूलादिभिः ।
इहाभिनवयौवना सकलरात्रिसंश्लेषितै-
र्हरन्ति शिशिरज्वरार्तिमतीव पृथ्वीमपि ॥ २९२ ॥

[ ]

1 drops नीरस. 2 A, B शुचि C, E सुरि 3. E °विशेषा.° 4 E निन्द्यः

मधुर्माधवश्च वसन्तः । यथा—

चैत्रे मदर्धिः शुकसारिकाणां हारीतदात्यूहमधुव्रतानाम् ।
पुंस्कोकिलानां सहकारबन्धुर्मदस्य कालः पुनरेष एव ॥ २९३ ॥

[ ]

मनोऽधिकं चात्र विलासलास्ये प्रेङ्खासु दोलासु च सुन्दरीणाम् ।
गीते च गौरीचरितावतंसे पूजाप्रपञ्चे च मनोभवस्य ॥ २९४ ॥

[ ]

पुंस्कोकिलः कूजति पञ्चमेन बलाद् विलासा युवतेः स्फुरन्ति ।
स्मरो वसन्तेऽत्र नवैः प्रसूनैः स्वचापयष्टेर्घटनां करोति ॥ २९५ ॥

[ ]

पिनद्धमाहारजनांशुकानां सीमन्तमिन्दूरजुषा वसन्ते ।
स्मरीकृते प्रेयसि भक्तिभाजा विशेषवेषः स्वदते वधूनाम् ॥ २९६ ॥

[ ]

अथ प्रगलोद्धरकर्णिकारः पुष्पप्रपञ्चाञ्चितकाञ्चनारः ।
विजृम्भणाकोविदकोविदारः कालो विकासोद्धुरसिन्दुवारः ॥ २९७ ॥
गेहीतकाम्रातककिङ्कराता मधूकमोचा सह माधवीभिः ।
जयन्ति शोभाञ्जनकश्च शाखी मशीरवः पुष्पभरैर्वसन्तेः ॥ २९८ ॥

[ ]

यो माधवीमुकुलदृष्टिषु वणिग्बन्धो
यः कोकिलाकलरुते कथने च लाभः ।
पूजाविधिर्दमनकेन च यः स्मरस्य
तस्मिन् मधुः स भगवान् गुरुरङ्गनानाम् ॥ २९९ ॥

[ ]

नालिङ्गितः कुरबकस्तिलको न दृष्टो
नो ताडितश्च चरणैः सुदृशामशोकः ।
सिक्तो न वक्त्रमधुना बकुलश्च चैत्रे
चित्रं तथापि भवति प्रसवावकीर्णः ॥ ३०० ॥

[ ]

चैत्रे चित्रौ रक्तनीलावशोकौ स्वर्णाशोकस्तत्तृतीयश्च पीतः
जैत्रं तन्त्रं तत्प्रसूनान्तरेभ्यश्चैतोयोनेर्भूर्भुवः स्वस्त्रयेऽपि ॥ ३०१ ॥

[ ]

1 A drops कोविद 2 E सिन्धुवार० 3 A, B, C, D रोहितका
4 A, B, C वसन्तः.

गूवाकानां नालिकेरीद्रुमाणां हिन्तालानां पाटलीकिंशुकानाम् ।
खर्जूरीणां ताडताडीद्रुमाणां पुष्पापीडन्यासहेतुर्वसन्तः ॥ ३०२ ॥
[ ]

वायुश्चात्र दक्षिणः । यथा—

चुम्बँल्लङ्कावनालीर्मुहुरलकलता लासयन् केरलीना-
म्मन्ध्रीधम्मिल्लबन्धान् सपदि शिथिलयन् बेल्लयन्नागवल्लीः[1] ।
उद्दामं दाक्षिणात्यो मलितमलयजः सारथिर्मीनकेतोः
प्राप्तः सीमन्तिनीनां मधुसमयसुहृन्मानचौरः समीरः ॥ ३०३ ॥
[ ]

शुक्रः शुचिश्च ग्रीष्मः । यथा—

विकासकारी नवमालिकानां दलच्छिरीषप्रसवाभिरामः ।
पुष्पप्रदः काञ्चनकेतकीनां ग्रीष्मोऽयमुल्लासितधातुकीकः[2] ॥ ३०४ ॥
[ ]

खर्जूरजम्बूपनसाम्रमोचप्रियालपूगीफलनालिकेरैः ।
द्वन्द्वानि खेदालसतामपास्य रतानुसन्धानमिहाद्रियन्ते ॥ ३०५ ॥
[ ]

स्नानास्यनम्भांसि सकूपकानि प्रपाः कठोरेऽहनि पान्थपूर्णाः ।
शुचौ समभ्यर्चितसक्तुधाने प्रगे[3] च सायं च वहन्ति मार्गाः ॥ ३०६ ॥
[ ]

यत् कायमानेषु दिनार्धनिद्रा यत् स्नानकेलिर्दिवसावसाने ।
यद् रात्रिशेषे सुरतावतारः स मुष्टियोगो[4] घनघर्ममाथी ॥ ३०७ ॥
[ ]

या चन्द्रिका चन्दनपङ्कहृद्या या जालमार्गानिलवीचिमाला ।
या तालवृन्तैरुदबिन्दुवृष्टिर्जलाञ्जलिं सा शुचये ददाति ॥ ३०८ ॥
[ ]

कर्पूरचूर्णः सहकारभङ्गस्ताम्बूलमार्द्रक्रमुकोपक्लृप्तम् ।
हाराश्च तारास्तनुवस्त्रमेतन्महारहस्यं शिशिरक्रियायाः[5] ॥ ३०९ ॥
[ ]

मुक्तालताश्चन्दनपङ्कदिग्धा मृणालहारानुसृता जलार्द्राः ।
स्रजश्च मौलौ स्मि(?सि)तचम्पकानां ग्रीष्मेऽपि सोऽयं शिशिरावतारः ॥ ३१० ॥

1 A, B प्रमदा . 2 D धातुकीकः for धातकीकः. Cf KM, p. 106.
3 C, E प्रागेव. 4 D सुनिष्टयो . 5 A drops हस्यं शिशिर.

अत्र हि—

पच्यन्त इव भूतानि ताप्यन्त इव पांसवः ।
क्वथ्यन्त इव तोयानि ध्मायन्त इव चाद्रयः ॥ ३११ ॥

एण्यः स्थलीषु मृगतृष्णिकया ह्रियन्ते
स्रोतस्तनुत्वजनिता जलवेणिबन्धाः ।
ताम्यत्तिमीनि च सरांसि जलस्य शोषाद्
बद्धारघट्टघटिकावलयाश्च कूपाः ॥ ३१२ ॥
[ ]

करभाः शरभाः सरासभाः मदमायान्ति भजन्ति विक्रियाम् ।
करवीरकरीरपुष्पिणीः स्थलभूमीरधिशय्य चासते ॥ ३१३ ॥
[ ]

सहकाररसार्चिता रसाला जलभक्तं फलपानकानि मन्था: ।
मृगलावरसाः सृतं च दुग्धं स्मरसंजीवनमौषधं निदाघे ॥ ३१४ ॥
[ ]

जडचन्दनचारवस्तरुण्य: सजलार्द्रा महतारहारमाला. ।
कदलीदलतल्पकल्पनस्था: स्मरमाहूय निवेशयन्ति पार्श्वे ॥ ३१५ ॥
[ ]

ग्रीष्मे चीरीनादवन्तो वनान्ताः पङ्काभ्यक्ताः सैरिभाः सेभकोला: ।
लोलजिह्वा. सर्वसारङ्गवर्गो मूलच्छस्तैः पत्रिणश्चाशदेशैः ॥ ३१६ ॥
हर्म्यं रम्यं चन्द्रिकाधौतपृष्ठं कान्तोच्छिष्टा वारुणी वारिमिश्रा ।
मालाः कण्ठे पाटलामल्लिकानां सद्यो ग्रीष्मं हन्त हेमन्तयन्ति ॥ ३१७ ॥

वायुश्चात्र नैर्ऋतोऽनियतदिक्को वा । यथा—

सोऽयं करैर्ज्वलति वह्निमयैरिवार्कः साङ्गारविस्तरभरेव धरा समग्रा ।
वायुः कुकूलमिव वर्षति नैर्ऋतश्च कार्शानवैरिव शरैर्मदनश्च हन्ति ॥ ३१८ ॥

यथा च—

वात्याचक्रकचुम्बिताम्बरभुव: स्थूला रजोदण्डकाः
संग्रथ्नन्ति भविष्यदभ्रपटलस्थूणावितर्कं नभः ।
किं चान्यन्मृगतृष्णिकाम्बुविसरैः पात्राणि वीतार्णसां
सिन्धूनामिह सूचयन्ति दिवसेष्वाषाढिनीं सम्पदम् ॥ ३१९ ॥
[ ]

1. A, B, C, E वल्यश्च. 2. E सेरु°. 3. D सूत्रयन्ति.

चतुरवस्थश्च ऋतु । सन्धि शैशव प्रौढिरनुवृत्तिश्च । ऋतुद्वयमध्यं सन्धि । स शिशिरवसन्तयोर्यथा--

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मनसि च गिर ग्रथ्नन्तीमे किरन्ति न कोकिलाः ।
अथ च सवितु शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥ ३२० ॥

[ औचित्यविचारचर्चायां मालवकुवलयस्य ]

वसन्तस्य शैशवं यथा---

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चम ।
कि च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनु ॥ ३२१ ॥

प्रौढिर्यथा- -

साम्यं सम्प्रति सेवते विचकिल षाण्मासिकैर्मौक्तिकै
कान्ति कर्षति काञ्चनारकुसुम माञ्जिष्ठधौतात पटात् ।
हृणीना कुरुते मधूकमुकुलं लावण्यलुण्टाकता
लाटीनाभिनिभ चकास्ति च पतद् भ्रन्ताग्रत केसरम ॥ ३२२ ॥

[ विद्धशालभञ्जिका १.२५ ]

(63) अतिक्रान्तर्तुलिङ्ग यत कुसुमाद्यनुवर्तते ।
लिङ्गानुवृत्ति तामाहु सा ज्ञेया काव्यलोकत ॥

[ ]

वर्षासु ग्रीष्मलिङ्गाब्जविकासानुवृत्ति । यथा—

खं वस्ते कलविङ्ककण्ठमलिन कादम्बिनीकम्बलं
चर्चा पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।
गन्ध चुम्बति सिक्तलाजसदृश वर्षेण दग्धा स्थली
दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासा पति ॥ ३२३ ॥

किं च—

(64) ग्रैष्मिकसमयविकासी कथितो धूलीकदम्ब इति लोके ।
जलधरसमयप्राप्तौ स एव धाराकदम्ब स्यात ॥

[ ]

1 E °द्वयस्य मध्य 2 E काञ्चनाव°. 3. The KM (p 109) reads मुञ्चति.

यथा—

धूलीकदम्बपरिधूसरदिङ्मुखस्य रक्तच्छटासुरशरासनमण्डनस्य ।
दीप्तायुधाशनिमुचो ननु नीलकण्ठ नोत्कण्ठसे समरवारिधरागमस्य ॥ ३२४ ॥
[ ]

जलसमयजायमानां जातिं यां कर्दमेन जनयन्ति ।
सा शरदि महोत्सविनी गन्धान्वितषट्पदा भवति ॥ ३२५ ॥
[ ]

यथा —

स्थूलावश्यायबिन्दुद्युतिदलितबृहत्कोरकग्रन्थिभाजो
जात्या जाल लताना जरठपरिमलप्लावितानां जजृम्भे ।
नानाहंसोपधानं सपदि जलनिधेश्चोत्समर्पापरस्य
ज्योत्स्नाशुक्लोपधानं शयनमिव शशी नागभोगाङ्कमम्भः ॥ ३२६ ॥
[ ]

म्तोकानुवृत्ति केतक्या अपि केचिदिच्छन्ति । यथा—

असृज्यत शरत्कालः केतकीधूलिधूसरैः ।
पद्मानामैर्नवायानश्वरणैरिव वासरैः ॥ ३२७ ॥
[ ]

(65) शरद्भवानामनुवृत्तिरत्र बाणासनानां सकुरण्टकानाम् ।
हेमन्तवक्त्रे यदि दृश्यतेऽपि न दृश्यते बन्धविधिः कवीनाम ॥
[ ]

हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव । उक्तं च—(66) द्वादशमासः सवत्सरः, पञ्चर्तवो हेमन्तशिशिरयो समासेन ।

(67) मरुबकदमनकपुन्नागपुष्पलिङ्गानुवृत्तिभि. सुरभिः ।
रचनीयश्चित्रश्रीः किञ्चित्कुन्दानुवृत्त्या च ॥
[ ]

यथा—

गेहे वाहीकयूना वहति दमनको मञ्जरीकर्णपूरान्
उन्मादः पामरीणां मरुति मरुबकामोदिनि व्यक्तिमेति ।

1 A, B 'हासशरासन'　2 कार्दमीति निगदन्ति । (KM, p 104) is a better reading. 3. A, B गन्धान्धित.　4. E कुचानु°.

सद्यो भङ्गानुसारस्नुतसुरभिशिराशीकरः साहकारः
सर्पत्सम्भः शरावे रचयति च रसो रेचकीचक्रकाणि ॥ ३२८ ॥
[ ]

यथा वा—

कुन्दे मन्दस्तमाले मुकुलिनि विकलः कातरः किंकिराते
रक्ताशोके सशोकश्चिरमतिविकचे चम्पके कुश्चिताक्षः ।
पान्थः खेदालसोऽपि श्रवणकटुरटच्चक्रमभ्येति धुन्वन
सोत्कण्ठ. षट्पदानां नवमधुपटलीलम्पटं कर्पटेन ॥ ३२९ ॥
[ ]

एवमन्याप्यनुवृत्ति· ।

(68) विचकिलकेसरपाटलचम्पकपुष्पानुवृत्तयो ग्रीष्मे ।
तत्र च तुहिनर्तुभव मरुबकमपि केचिदिच्छन्ति ॥

यथा —

अभिनवकुशसूचिस्पर्धि कर्णे शिरीषं
मरुबकपरिवारं पाटलादाम कण्ठे ।
स तु सरसजलार्द्रोन्मीलितः सुन्दरीणा
दिनपरिणतिजन्मा कोऽपि वेषश्चकास्ति ॥ ३३० ॥

एवमन्यदपि कविप्रसिद्ध्याभ्यूह्यम् ।

(69) शोभास्रग्गन्धरसैः फलार्चनाभ्यां च पुष्पमुपयोगि ।
षोढा दर्शितमेतत् तन सप्तममनुपयोगि तथा ॥
यत् प्राचि मासे कुसुमं निबद्धं तदुत्तरे बालफलं विधेयम् ।
तदग्रिमे प्रौढिधरं च कार्यं तदग्रिमे पाकपरिष्कृतं च ॥
द्रुमोद्भवाना विधिरेष दृष्टो वल्लीफलानां न महाननेहा ।
तेषां द्विमासावधिरेव कार्य· पुष्पे फले पाकविधौ च काल. ॥
अन्तर्व्याजं बहिर्व्याजं बाह्यान्तर्व्याजमेव च ।
सर्वव्याजं बहुव्याजं निर्व्याजं च तथा फलम् ॥
लकुचाद्यन्तर्व्याजं तथा बहिर्व्याजमत्र मोचादि ।
आम्राद्युभयव्याजं सर्वव्याजं च ककुभादि ॥
पनसादिबहुव्याजं नीलकपित्थादि भवति निर्व्याजम् ।
सकलफलाना षोढा ज्ञातव्य· कविभिरिति भेद· ॥

1. E स्नुनि°. 2. E यथा च. 3. A, B विचिकिल. 4. E दृष्टे.

यदुक्तम्—

(16) अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥ इति

[ध्वन्यालोक ३]

भक्त्या शब्दार्थयोर्दोषा इत्युक्तम् । तत्र च शब्दस्य पदवाक्यरूपत्वात् प्रथमं द्वौ पददोषावाह—

## ८८) निरर्थकासाधुत्वे पदस्य ॥ ४ ॥

दोष इति वर्तते । कृतसमासयोर्भावप्रत्ययः । तेन निरर्थकत्वमसाधुत्वं च पदस्य दोषौ । एवमुत्तरत्रापि योज्यम् । तत्र चादीनां पूरणार्थत्वे निरर्थकत्वं यथा—

मुह्यन्मुहुर्मुहुरहं चपलाकुलाक्षः
कृत्वा स्खलन्ति भवतोऽभिमुखं पदानि ।

---

तदेव देशकालौ व्याख्यातौ ॥

वयः (पृ. १७९) शैशवादिकम् । जातिः स्त्रीपुंसादिका ब्राह्मणत्वादिका वा । आदिग्रहणाद् विद्यावित्तकुलपात्रादयो लभ्यन्ते । वेषः कृत्रिम रूपम् । व्यवहारश्चेष्टा । आदिग्रहणादाकारवचनादयो ज्ञेयाः । वेषव्यवहारादीति देशादिभि प्रत्येकमभिसम्बध्यते । तेन देशे वेषस्य व्यवहारस्याकारस्य वचनस्य वा, औचित्येन निबन्ध. करणीय इत्यर्थः । एवं कालादौ योज्यम् । यथा कान्यकुब्जाद्यार्यदेश[1] उद्धतो वेषो[2] दारुणो व्यवहारो भयंकर आकार परुषं च[3] वचनमनुचितम् । म्लेच्छेषु त्वेतदेवोचितम् । तथा नागरेषु यदुचितं तदेव ग्राम्येष्वनुचितमिति । यथा—

परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवातपामृष्टसरोजचारुभिः ॥ ३३१ ॥ इति[4] ।

[किरातार्जुनीय ४·१४]

गोपीनां हि ग्राम्यत्वात् कनककुण्डलान्यनुचितानीति । एवं कालादावप्युन्नेयम् ।

---

1. A, B, C कन्यकुब्ज. 2. E वेषदा°. 3. C drops च. 4. A, B, C, D drop इति.

स्वामिन् भवच्चरणयोः शरणं प्रपन्नः
संसारदारुणदरेण हि कांदिशीकः ॥ २०२ ॥

[ ]

पदैकदेश. पदमेव तन्निरर्थकत्वं यथा

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥ २०३ ॥

[ ]

अत्र दृशामिति बहुवचनमनर्थकम् । कुरङ्गेक्षणाया एकस्या एवोपादनात् ।

न च

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकृतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥ २०४ ॥

[अमरु० ४]

इत्यादिवद् व्यापारभेदाद् बहुत्वं, व्यापाराणामनुपात्तत्वात् । न च व्यापारोऽत्र दृक्शब्दो वर्तते ।

यमकादौ निरर्थकत्वं न दोष इति केचित् । यथा

योपितामलितया नखलनं गात्रमुज्ज्वलतया न खलूनम् ॥ २०५ ॥

[शिशुपाल० १०.९०]

बभौ मुखेनाप्रतिमेन काचन श्रियाधिका ता प्रति मेनका च न ॥ २०६ ॥

[ ]

1 I श्वासानलो° 2 S क्ष(क्षि)तं

शब्दशास्त्रविरोधोऽसाधुत्वम् । यथा—

उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः ।
गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ॥२०७॥
[ किरातार्जुनीय १७.६३ ]

अत्र हन्तेर्नाकर्मकत्वं, न स्वाङ्गकर्मकत्वमित्यात्मनेपदाप्राप्तेः 'आजघ्ने' पदमसाधु । 'न दोषोऽनुकरणे' इति वक्ष्यमाणत्वात् 'पश्यैष च गवित्याह' इत्यत्र न दोषः ।

अथ त्रयोदशवाक्यदोषानाह—

**८९) विसन्धिन्यूनाधिकोक्तास्थानस्थपदपतत्प्रकर्षसमाप्तपुनरात्तविसर्गहतवृत्तसंकीर्णगर्भितभग्नप्रक्रमानन्वितत्वानि वाक्यस्य ॥ ५ ॥**

दोष इति वर्तते । तत्र सन्धिः स्वराणां समवायः संहिताकार्येण द्रवद्रव्याणामिवैकीभावः, कवाटवत् स्वराणां व्यञ्जनानां च प्रत्यासत्तिमात्ररूपो वा । तस्य विश्लेषादश्लीलत्वात् कष्टत्वाच्च वैरूप्यं विसन्धित्वम् ।

विश्लेषाद् यथा—

कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः ॥ २०८ ॥
लोलालकानुविद्धानि आननानि चकासति ॥ २०९ ॥
[　　　　]

संहितां न करोमीति स्वेच्छया सकृदपि दोषः । प्रकृतिस्थत्वविधाने त्वसकृत् । (17) 'संहितैकपदवत् पादेष्वर्धान्तवर्जम्' । ( वामन ५.१.२ ) इति हि काव्यसमयः ।

अश्लीलत्वाद् यथा—

विरेचकमिदं नृत्तमाचार्याभासयोजितम् ॥ २१० ॥
[　　　　]

**विरेचकमिति** । विगतं ग्रीवादीनां रेचकं भ्रमणं यत्र । असम्यगाचार्येण योजितमिति प्रकृतोऽर्थः । विरेचकं प्रवर्तकमिति च ।

1 P विश्लेषाद°. 2 I पादेऽर्धान्त° 3 P, L, I नृत्य°.

अत्र 'विरेचकम्' इति जुगुप्सा । 'याभ' इति व्रीडा ।

तथा

चकाशे पनसप्रायैः पुरी षण्डमहाद्रुमैः[*] ॥ २११ ॥
[ ]

अत्र 'शेप' इति 'पुरीषम्' इति 'महाद्रुम' इति च व्रीडाजुगुप्सामङ्गलार्थस्मारकत्वादश्लीलाः ।

कष्टत्वाद् यथा—

मञ्जर्युद्गमगर्भास्ते गुर्वाभोगा द्रुमा बभुः ॥ २१२ ॥

वक्त्राद्यौचित्ये चेति वक्ष्यमाणत्वाद् दुर्वचकादौ न दोषः । यदाहुः

(18) शुकस्त्रीबालमूर्खाणां मुखसंस्कारसिद्धये ।
प्रहासासु च गोष्ठीषु वाच्या दुर्वचकादयः ॥

अवश्यवाच्यस्यानभिधाने न्यूनपदत्वं यथा—'तथाभृता दृष्ट्वा' (पृ. ५९.) इति । अत्राम्माभिरिति क्विन्न इत्यस्मात् पूर्वमित्थमिति च नोक्तामिति न्यूनत्वम् ।

**अवश्यवाच्यस्येति** । अवश्यंभावेनाभिधेयस्याविनाभावेनौचित्येन वा प्रतीयमानस्यानभिधानेऽपि न दोषः । यथा—

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप ।
तथापीयमवस्था ते न सर्वत्र भवादृशाः ॥ ३३२ ॥[+]

यत्र ह्यन्यत् क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यत इति न्यायादत्रास्तिर्लभ्यते । यथा च—

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वज्रमिन्द्रकरविप्रमृतं वा स्वस्ति तेस्तु लतया सह वृक्ष ॥ ३३३ ॥
[ ]

---

* विरे, याभ, मै., म, जुगुप्सा are indistinct in P. The copyist has written the lines विरेचक etc. in the margin. 1. A drops from यमान to दहति, (p. 203, l. 24) + This verse is found in भोजप्रबन्ध at v. 185 2. A, B, C, D drop श्रा. 3. E वृक्षः.

तथा---

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः ॥ ३३३ ॥

[ विक्रमोर्वशीयम् ४·२९ ]

अत्रापराधस्य लवमपीत्यप्यर्थो वाच्यः ।

तथा---

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।

अत्रौचित्याद्धाक्षीदित्यादिक्रिया गम्यन्ते । तथा—

मा धाक्षीन्मा भाङ्क्षीन्मा छैत्सीज्जातुचिद् बत भवन्तम् ।
सुकृतैरध्वन्यानां मार्गतरो स्वस्ति तेऽस्तु सह लतया ॥ ३३४ ॥

[ ]

अत्रानल इत्यादीनि कर्तृपदान्यौचित्यात प्रतीयन्ते ।

एवं चानभिहितवाच्यत्व पृथग्दोषत्वेन न वाच्यम् । धर्मिधर्मोभयात्मनो वस्तुनः प्रतिपत्तये पुनः स एव शब्दस्तत्पर्यायः सर्वनाम वावश्यं वाच्यमपि नोक्तं यत्र तत्रापि न्यूनत्वमिति केचिद वदन्ति । यथा—

द्वय गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिन. ॥ ३३५ ॥ इति ।

[ कुमार० ५·७१ ]

अत्र हि कपालिशब्दो धर्मिधर्मोभयार्थवृत्ति. संज्ञिमात्रं वा प्रत्याययेत् कपाल-सम्बन्धकृतं वा गर्हितत्वमुभयमपि वेति त्रयः पक्षाः । तत्र प्रथमपक्षे विशेषप्रतिपत्तये कपालिग्रहणमपरमपि कर्तव्यं, येनास्य गर्हितत्वं प्रतीयते । द्वितीयपक्षे तस्या-श्रयप्रतिपत्तये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेष्यमवश्यमुपादेयं भवति येन तस्य विवक्षितार्थसिद्धावार्थो हेतुभावोऽवकल्प्येत । तत्र तेनैवोपादाने यथा—

सततमनङ्गोऽनङ्गो न वेत्ति परदेहदाहदुःखमहो ।
यमदयं दहति मामनलशरो ध्रुवमसौ न कुसुमशरः ॥ ३३६ ॥ इति ।

[ ]

1. I किम॰. 2. I मपीत्यर्थो. 3. P, L दूरात्॰. 4. E drops सह. 5. E drops त्व. 6. E प्रार्थितया. 7. A, B ॰धर्मोनयार्थ॰. 8. E न्धिकृतं. 9. E ॰कल्प्येत. + The reading in the Vyaktiviveka यदयमदय is better.

अयमपि पटुधारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥ २१४ ॥
[ विक्रमोर्वशीयम् ४·१ ]

पर्यायेण यथा–

कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ ३३७ ॥
[ कुमार० ३·१० ]

अत्र हि हरस्येति पर्यायशब्देनोपात्तस्यार्थस्य पिनाकपाणित्वं धैर्यच्युतेरशक्यकरणीयतायामार्थो हेतुः । अन्यथा हरग्रहणस्य पौनरुक्त्यं स्यादिति । यथा च—एकः शङ्कामहिवररिपोरत्यजद् वैनतेयात् ॥ ३३८ ॥ इति ।

सर्वनाम्ना यथा

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ ३३९ ॥
[ विद्धशालभञ्जिका १·२ ]

अत्रापि ता इति सर्वनामोपात्तस्यार्थस्य वामलोचनात्वं मनसिजदाहजीवनयोरन्योन्यविरुद्धयोरप्यभिन्नहेतुकत्वोपपत्तावार्थो हेतुः । इतरथा वामलोचनात्वस्य पुनरुपादानप्रसङ्गः । अत एव तृतीयः पक्षो न संभवत्येव । एकस्यैव शब्दस्यावृत्तिमन्तरेणानेकार्थप्रतिपादनसामर्थ्यासंभवात् । न चासावनिबन्धना शक्या कल्पयितुम् । न चैषामेकमप्यत्रोक्तमिति न्यूनपदत्वमिति । वयं तु ब्रूमः—न हि शब्दस्याभिधेव वृत्तिरिष्यते येनैकस्मिन्नेवार्थे उपक्षीणत्वात्तस्याः शब्दान्तरमर्थान्तरार्थं प्रयुज्येत तदावृत्तिर्निबन्धना वा किञ्चित् परिकल्प्येत । किं तु वृत्त्यन्तरमपि सहृदयैकसंवेद्यं व्यक्तिस्वभावमस्त्येव । एवं च वृत्त्यन्तरोपकल्पनायामकस्मादेव शब्दाद् वाच्येन सहैव व्यङ्ग्यस्यापि प्रतीतिरनिवारितप्रसरैव । तथा हि—परमेश्वरवाचकसहस्रसंभवेऽपि 'कपालिनः' इति तद्वाचकतया प्रयुक्तं बीभत्सरसालम्बनविभावता सचयज्जुगुप्सास्पदत्वं ध्वनति । सम्प्रति द्वयं चेत्यतीव रमणीयम् । यत् किल पूर्वमेका सैव दुर्व्यसनदूषितत्वेन शोचनीया जाता । सम्प्रति पुनस्त्वया तस्यास्तथाविधदुरध्यवसायसाहायकमिवारब्धमित्युपहस्यते । प्रार्थनाशब्दोऽप्यतितरां रमणीयः । यस्मात् काकतालीययोगेन तत्समागमः कदाचिन्न वाच्यतावहः । प्रार्थना पुनरत्रात्यन्तकौलीनकलङ्ककारिणी । सा च त्वं चेति द्वयोरप्यनुभूयमानपरस्परस्पर्धिलावण्यातिशयप्रतिपादनपरत्वेनोपात्तम् । कलावत कान्तिमतीति च मतुप्प्रत्ययेन द्वयोरपि प्रशस्यता प्रतीयते ।

1 E drops from के to पर्याय (1 6). 2 E 'रवद्य'. 3. B, C यथा वा 4 B drops सं 5 A, B drop हृदयैकस. 6 E drops सहस्र 7 B drops साहायक.

अत्र भ्रान्तौ निवृत्तायां तद्विषयभूतानां नवजलधरसुरधनुर्धारासाराणामिव विद्युतोऽपीदमा परामर्शो वाच्यः ।

यथा वा उपमायाम् -

> संहयचक्काअजुआ विअसिअकमला मुणालसंछण्णा ।
> वावी वहु व्व रोअणविलित्तथणया सुहावेई ॥ २१५ ॥
>
> [　　　]

अत्र कमलमृणालप्रतिकृत्योर्मुखबाह्वोः केनापि पदेनानुपादानान्न्यूनपदत्वम् ।

क्वचिद् गुणः यथा- -

> गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
> सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
> मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
> सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥ २१६ ॥
>
> [ अमरु० ४० ]

क्वचिन्न गुणो न दोषः यथा --'तिष्ठेन्‌ कोपवशात्' (पृ. १२७) इति । अत्र पिहितेत्यतोऽनन्तरं 'नैतत् यत' इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः । उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः ।

अधिकपदत्वं यथा -

> स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
> अनिरुद्धसमन्वितोक्तियुक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि ॥२१७॥
>
> [　　　]

1 I भूनयो॰. 2. I धारासारयोः 3. I चक्काय जुआ 4 P, L, I विय. 5. S छन्ना. 6. I रोयण॰. 7. L reads the verse as follows सहयविक्का-अविआविअसिअकमलामुणालसछण्णा । वावो बहुव्व रोयणविलित्तथयरा सुहवइणा ॥

अत्र 'आकृति' शब्दोऽधिकः ।

तथा--नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ॥ २१८ ॥
[नागानन्द ४.१५]

अत्र 'तत्' शब्दः ।

तथा -

दलत्कन्दलभाग्भूमिः सनवाम्बुदमम्बरम् ।
वाप्यः फुल्लाम्बुजयुजो जाता दृष्टिविषं मम ॥ २१९ ॥
[ ]

अत्र भजिः सहशब्दो युजिश्चाधिकः ।

तथा - 'बिसकिसलयच्छेदपाथेयवन्तः' ॥ २२० ॥ इति ।
[मेघदूत (पूर्व) ११]

त्वगुत्तरासङ्गवतीमधीतिनीम ॥ २२१ ॥ [कुमार० ५.१६]

इति च मत्वर्थीयस्याधिक्यम् । बहुव्रीहिसमासाश्रयेणैव तदर्थावगतिसिद्धेः । यदाहुः --'कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् प्रक्रमस्य' । तथा --

वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणम् ॥ २२२ ॥ इति
[बालरामायण ३.६१]

तदीयमातङ्गघटाविघट्टितैः ॥ २२३ ॥ इति ।
[माघ १.६४]

येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥ २२४ ॥
[ ]

इत्यत्र तद्धितप्रत्ययस्याधिक्यम् । षष्ठीसमासाश्रयेणैव तदर्थावगतेः । यत्र त्वर्थान्तरे तद्धितस्योत्पत्तिर्न तत्र समासात् तत्प्रतीतिरिति न तस्याधिक्यम् । यथा --

1. L °मन्दरम. 2. S ' का. 3. I समासात् प्रतोति'.

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ॥ २२५ ॥

[ किरातार्जुनीय १५·१ ]

इति । अत्र हि अपत्यार्थे तद्धितो नेदमर्थे इति ।

तथा —

किं पुनरीदृशे दुर्जाते जाते[1] जातामर्षनिर्भरे च मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य ॥ २२६ ॥ [ हर्षचरित ६, पृ. १९३ ]

इत्यत्र क्रियाकरणयोः । यथा वा उपमायां—

अहिणवमणहरविरइअवलयविहूसा विहाइ नववहुआ[2] ।
कुंदलय व्व समुप्फुल्लगुच्छपरिलिंतभमरगणा ॥ २२७ ॥

[ ]

अत्रोपमेयस्य नीलरत्नादेरनिर्देशे भ्रमरगणपदमतिरिच्यत इत्यधिकपदत्वम् ।

तथा

अलिभिरञ्जनबिन्दुमनोहरैः कुसुमभक्तिनिपातिभिरङ्कितः ।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥ २२८ ॥

[ रघु० ९·४१ ]

अत्र तिलकप्रमदयोरेकतरस्य समासोक्तित एवाक्षेपादन्यतरस्याधिकपदत्वम् । यथा वा रूपके ---

शोकानलधूमसम्भारसम्भृताम्भोदभरितामिव वर्षति नयनवारिधाराविसरं शरीरम् ॥ २२९ ॥

[ हर्षचरित ६, पृ. १७९ ]

अत्र शोकस्य केनाचित् साधर्म्येणानलत्वेन रूपणमस्तु, धूमस्य पुनर्न किञ्चिद् रूप्यमस्तीति —अधिकपदत्वम् ।

1. I drops जाते. 2. I वहुआ. 3. I, L drop पद.

तथा --

निर्मोकमुक्तिमिव गगनोरगस्य लीलाललाटिकामिव त्रिविष्टपविटस्य ॥ २३० ॥ [हर्षचरित १, पृ. १९]

अत्र रूपकेणैव साम्यस्य प्रतिपाद्यमानत्वादिव शब्दस्याधिक्यम् ।

यथा वा समासोक्तौ

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहाया स्थितं रुचिरया चिरयापि दिनश्रिया ॥ २३१ ॥
[हरविजय ३.३७]

अत्र तिग्मरुचेः ककुभा च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति दयितयेत्याधिक्यम् । यथा वान्योक्तौ -

आहूतेषु विहंगमेषु मशको नायान् पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ २३२ ॥
[भल्लट० ६९]

अत्राचेतनः प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तेः प्रभुमिवेत्यधिकम् ।

तथा--

द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः ।
बहुविधार्थ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः ॥ २३३ ॥
[भल्लट० ४]

अत्र भवदर्थस्यान्योक्तिबलेनैवाक्षेपात् 'भवानिव' इत्यधिकम् । क्वचिद् गुणो यथा

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।

1 P त्वादिव indistinct. 2 I विशेषलिङ्गपरिग्रहेण.

तत् साधवो न न विदन्ति विदन्ति किन्तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ २३४ ॥
[ सुभाषितावलौ ( २७१ ) भगवत्तरारोग्यस्य ]

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

उक्तपदत्वं द्विःप्रयोगः[1] । (19) नैकं पदं द्विः प्रयोज्यं प्रायेणेति हि समयः ( काव्यालङ्कार० अधि. ५ अ. १ सू. १ ) । यथा --

आधिकरतलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ २३५ ॥
[ ]

अत्र लीलेति ।

क्वचिद् गुणो यथा लाटानुप्रासे---

जयति क्षुण्णतिमिरस्तिमिरान्धैकवल्लभः ।
वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः ॥ २३६ ॥
[ ]

क्वचिच्छब्दशक्तिमूले ध्वनौ यथा--

ताला जायन्ति गुणा जाला ते सहिअएहिं घिप्पंति ।
रविकिरणाणुग्गहिआइं हुंति कमलाइं कमलाइं ॥ २३७ ॥
[ विषमबाणलीला ]

**क्वचिद् गुण इति** । लाटानुप्रासव्यञ्जयविहितानुवाद्यत्वेषु ।
**तिमिरान्धेति** । तिमिरान्धा घूकव्रजोः पक्षिणः ।
**तालेति** तदा । जालेति यदा ।

1 L द्विप्रयोगः. 2. P, L, I याइ.

विहितस्यानुवाद्यत्वे यथा—

जितेन्द्रियत्वं विनयस्य साधनं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागाच्च भवन्ति सम्पदः ॥ २३८ ॥

[ सुभाषितावलौ (२९१७) भारवेः× ]

अस्थानस्थपदत्वं यथा—

प्रियेण संग्रथ्य विपक्षसंनिधौ निवेशितां वक्षसि पीवरस्तने ।
स्रजं न काचिद् विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥२३९॥

[ किरातार्जुनीय ८·३७ ]

अत्र 'स्रजं काचिन्न जहौ' इति वाच्यम् । तथा —

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ २४० ॥

[ कुमार० ५·७१ ]

अत्र त्वंशब्दादनन्तरश्चकारो युक्तः । तथा—

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्रीः
वक्त्रे पार्श्वे तथपा प्रतिवसति महाकुंट्टिनी खड्गयष्टिः ।

(69) 'डेर्डाहे डाला इआ काले' (सिद्धहेम. ८।३।६५) इति यत्तद्भ्यां हेर्डालादेश ।

**त्वंशब्दादिति** । समुच्चयद्योतको हि चकारः । समुच्चीयमानार्थादनन्तरमेव प्रयोक्तव्य इति हि क्रमः । एवं पुनःशब्दोऽपि व्यतिरिच्यमानार्थानन्तर्येणैव प्रयोगमर्हति । अन्यत्र तु प्रयुज्यमानोऽस्थानस्थपदत्व प्रयोजयति । यथा—

उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ ३४० ॥

1. I कारणम्. 2. I जनानुरागप्रभवा हि. × Not found in the किरातार्जुनीय. 3 L अस्थानस्थनत्वं पदत्वं. 4 P drops तथा. 5. P तथैका. 6. S °कुट्टनी. 7. D °र्डाहि.° E हेलाइआ.

आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥ २४१ ॥
[सुभाषितावलौ (२५९.६)]

अत्र 'इत्थं प्रोच्येव' इति न्याय्यम् । तथा—

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥२४२॥
[सुभाषितावलौ (२५९५) हर्षदत्तस्य]

अत्र 'इति श्रीनियोगाद्' इति वाच्यम् । तथा—

तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम् ॥ २४३ ॥
[रघु० १६.१३]

इत्यत्र परामर्शनीयमर्थमनुक्त्वैव यत्तस्य तदा परामर्शः सोऽस्थानस्थपदत्वं दोषः । तथा--

अत्र हि पुनःशब्दस्तेनेत्यनन्तरं प्रयोज्यः ।

**श्रीनियोगादितीति** । तथा चोक्तम्—

(70) उक्तिस्वरूपावच्छेदफलो यत्रेतिरिष्यते ।
न तत्र तस्मात् प्राक् किञ्चिदुक्तेरन्यत् पदं वदेत् ॥
उपाधिभावात स्वां शक्तिं स पूर्वत्रादधाति हि ।
न च स्वरूपावच्छेदः पदस्यान्यस्य सम्मतः ॥
इतिनैवेतरेषामप्यव्ययानां गतिः समा ।
ज्ञेयेत्यमेवमादीनां तज्जातीयार्थयोगिनाम् ॥
यतस्ते चादय इव श्रूयन्ते यदनन्तरम् ।
तदर्थमेवावच्छिन्द्युरासमञ्जस्यमन्यथा ॥ इति ।
[संग्रहश्लोकाः, व्यक्तिविवेक २.३३–३६]

एवं चाक्रमत्व पृथग्दोषत्वेन न वाच्यम् । अस्थानस्थपदत्व एवान्तर्भावात् ।

**तदेति** । तच्छब्दस्य हि प्रक्रान्तोऽर्थो विषय इष्टो न प्रक्रंस्यमानः

1. I सततमिह. 2. A, B, C, D drop न. 3. A, B प्रक्रम्यमाणः.

कष्टा [1]वेधव्यथा नित्यं कष्टश्च वहनक्लमः ।
श्रवणानामलङ्कारः कपोलस्य तु कुण्डलम् ॥ २४४ ॥

[ अनर्घराघव १·४० ]

अत्र श्रवणानामिति पदं पूर्वार्धे निवेशयितुमुचितम् । (20) 'नार्धे किञ्चिदसमाप्तं वाक्यम्' इति हि कविसमयः [ काव्यालङ्कार० अधि. ५ अ. १ सू. ६ ] । यथा वोत्प्रेक्षायाम्—

पत्तनिअंबप्फंसा ण्हाणुत्तिण्णाए सामलंगीए ।
चिहुरा रुंअंति जलबिंदुएहिं बंधस्स व भएण ॥ २४५ ॥

[ गाथासप्तशती ६.५५ ]

अत्र रोदनं बन्धनभयं चेत्युभयमुत्प्रेक्षितं तत्र प्राधान्याद् रोदनाभिधायिन एव पदादनन्तरमुत्प्रेक्षावाचि पदं प्रयोक्तव्यमिति यदन्यत्र प्रयुक्तं तदस्थानस्थपदम् । प्रधाने ह्युत्प्रेक्षिते तदितरदर्थादुत्प्रेक्षितमेव भवति । यदाह—

स्मृतिपरामर्शरूपत्वात् । स्मृतेश्चानुभूत एवार्थो विषयो नानुभविष्यमाण । अत्र च प्रतीतिमात्रमनुभवोऽभिमतो नेन्द्रियविषयभावः । न च गङ्गार्थः प्रतीतपूर्वो य. परामृश्येत । न चात्र प्रमादज पादयोः पौर्वापर्यविपर्यय इति शक्यते वक्तुम् । तत्रापि प्रतीपगमनहेतो. शाब्दस्य तदीयतीर्थाभिधानव्यवधाने सत्यन्यस्यास्थानस्थ पदत्वदोषस्याविर्भावापत्तेस्तेन पादयोर्विपर्ययः, शाब्दस्य च हेतोर्गङ्गाविशेषणमुखेनार्थत्वमित्युभयविपर्ययोऽत्र श्रेयान् ।

**निवेशयितुमुचितमिति** । तेनार्धान्तरैकवाचकत्वं पृथग्दोषत्वेन न वाच्यमित्यर्थः ।

**तदितरदिति** । तस्मात् प्रधानादितरदप्रधानम् । यथा—

ज्योतीरसाश्मभवनाजिरदुग्धसिन्धुरत्युन्मिषत्प्रचुरतुङ्गमरीचिवीचिः ।
वातायनस्थितवधूवदनेन्दुबिम्बसंदर्शनादनिशमुल्लसतीव यस्याम् ॥ ३४१ ॥

[ ]

अत्र प्रधाने उल्लसने [7]उत्प्रेक्षितेऽप्रधानमिन्दुसंदर्शनमुत्प्रेक्षितमेव ।

1 I कष्टो नित्यश्च 2. S °ब्रा°. 3 I रुयन्ति. 4 I प्राधान्ये. 5 A, B शब्दस्य. E शाब्दे स्य 6 E °नमुल्ल°. 7. E उत्प्रेक्षते.

(21) एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यथा ॥ इति

पतत्प्रकर्षत्वं यथा—

कस्कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत् सूकरः
कस्कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ २४६ ॥

[ ]

अत्र क्रमात् क्रममनुप्रासो घनयितव्यः ।

पतन्निबद्धः कचिद् गुणो यथा—

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणम् ।
उज्ज्वालः परशुर्भवत्वशिथिलत्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ २४७ ॥

[ महावीर० २.३३ ]

अत्र क्रोधाभावे पतत्प्रकर्षत्वं नास्ति ।

समाप्तपुनरात्तत्वं यथा—

ज्योत्स्नां लिम्पति चन्दनेन स पुमान् सिञ्चत्यसौ मालती-
मालां गन्धजलैर्मधूनि कुरुते स्वादून्यसौ फाणितैः ।
यस्तस्य प्रथितान् गुणान् प्रथयति श्रीवीरचूडामणे-
स्तारत्वं स च शाणया मृगयते मुक्ताफलानामपि ॥ २४८ ॥

[ ]

अत्र चूडामणेरिति समाप्ते वाक्ये तारत्वमित्यादि पुच्छप्रायं पुनरुपात्तं न चमत्करोति ।

1. I विद्यते.

क्वचिन्न गुणो न दोषः । यत्र न विशेषणामात्रदानार्थं पुनर्ग्रहणमपि तु वाक्यार्थान्तरमेव क्रियते, यथा 'प्रागप्राप्त' (पृ. २१३) इति ।

रोर्लोपे उत्वादिना उपहतौ च विसर्गस्याभावोऽविसर्गत्वम् । यथा—

वीरो[1] विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभान्विताः ॥ २४९ ॥
[ ]

हतं लक्षणच्युतं यतिभ्रष्टं वा लक्षणानुसरणेऽप्यश्रव्यम्, अप्राप्त[2]-गुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र तद्भावो हतवृत्तत्वम् । यथा —

अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम् ॥ २५० ॥

अत्र वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धमिति लक्षणच्युतम् ।

एतासां राजति सुमनसां दाम कण्ठावलम्बि ॥ २५१ ॥
कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः ॥ २५२ ॥
[ ]

इत्यनयोश्चतुर्थे षष्ठे च यतिर्न कृता—इति यतिभ्रष्टम् । एतदपवादस्तु छन्दो[3]ऽनुशासनेऽस्माभिर्निरूपित इति नेह[4] प्रतन्यते ।

[छन्दोऽनुशासन (अ. १ सू. १५) वृत्तौ]

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमथ किं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥ २५३ ॥
[ ]

अत्र 'यदिहान्यत् स्वादु' इत्यश्रव्यम् ।

अन्यास्ता गुणरत्नरोहणभुवः कन्या मृदन्यैव सा
संभाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।

1 I धीरो. 2. I प्राप्तगुरु°. 3. I स्वछन्दो°. 4 L drops from °योश्चतुर्थे (l. 12) to नेह

श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलाद्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २५४ ॥

अत्र 'वस्त्राण्यपि' इति पाठे लघुरपि गुरुत्वं भजते।

हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव।
मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते ॥ २५५ ॥

[ ]

हास्यरसव्यञ्जकमेतद् वृत्तं करुणरसाननुगुणम्।

वाक्यान्तरपदानां वाक्यान्तरपदैर्व्यामिश्रत्वं संकीर्णत्वम्। यथा—

कायं खायइ[1] छुहिओ कूरं घल्लेइ निब्भरं[2] रुट्ठो[3]।
सुणयं गेण्हइ[4] कंठे हक्केइ अ नत्तिअं[5] थेरो ॥ २५६ ॥

अत्र काकं क्षिपति कूरं खादति कण्ठे नप्तारं गृह्णाति श्वानं भेषयतीति वक्तुमुचितम्। एकवाक्यतायां क्लिष्टमिति क्लिष्टाद् भेदः।

क्वचिदुक्तिप्रत्युक्तौ गुणो यथा—

बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥ २५७ ॥

[अमरु० ५७]

वाक्यमध्ये वाक्यान्तरानुप्रवेशो[6] गर्भितत्वं यथा—

परापकारनिरतैर्दुर्जनैः सह संगतिः।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ २५८ ॥

[ ]

1. I खाइइ. 2. I कूरं घत्तेइ निज्झरं. 3. L रुट्ठो. 4. L सुणइ गिण्हइ. I सुणयं गिन्हइ. 5. I निभरायं. 6. I °रप्रवेशो.

अत्र तृतीयः पादो वाक्यान्तरमध्ये प्रविष्टः ।

क्वचिद् गुणो यथा—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥ २५९ ॥

[औचित्यविचारचर्चायां (पृ. १३८) भट्टप्रभाकरस्य]

अत्र वीराद्भुतरसवशात् 'वदन्त एव' इत्यादि वाक्यान्तरं मध्ये प्रविष्टं गुणाय ।

प्रस्तुतभङ्गो भग्नप्रक्रमत्वं यथा—

एवमुक्तो मन्त्रिमुख्यैः पार्थिवः प्रत्यभाषत ॥ २६० ॥

अत्र 'उक्तः' इति प्रक्रान्ते 'प्रत्यभाषत' इति प्रकृतेर्भग्नप्रक्रमत्वम् । 'प्रत्यवोचत' इति [तु] युक्तम् । यथा वा—

**प्रस्तुतभङ्ग इति** । स हि यथा । प्रक्रममेकरसप्रसृतां प्रतिपत्तृप्रतीतिं रुन्धान इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यतीत्यर्थः ।

**प्रत्यवोचतेति तु युक्तमिति** । एवंविधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात् । यथा 'नाला जायन्ति' (पृ. २०९) इति । यथा वा—

एमेअ जणो तिस्सा देइ कवोलोवमाइ ससिबिंबं ।
परमत्थविआरे उण चंदो चंदो च्चिअ वराओ ॥ ३४२ ॥ [ ]

अत्र ह्युत्कर्षापकर्षविवक्षया परिकल्पित-भेदेऽप्येकस्मिन्नर्थे विधेयानुवाद्य-विषयेणैकेनैवाभिधानेन विध्यनुवादभावो भणित इति प्रक्रमाभेदप्रकार एवायमिति मन्तव्यम् । केवल पर्यायप्रक्रमभेद-निवृत्तये चंदमिणमिति पाठः परिणमयितव्यः । न चैवमुक्तपदत्वदोषप्रसङ्गः । यथान्ये मन्यन्ते—

I I प्रविष्ट. 2 I यथा प्रत्य°. 3. B °भाग A °भग. 4. C drops स हि. 5 A, B drop प्र. 6. E एमेय. 7. E तस्मा. 8. E वियारे 9 E drops वाद. 10. A, C चंदमणमिति. B, D चन्दणमिति.

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ २६१ ॥
[कुमार० ६.९४]

अत्र 'अनेन विसृष्टाः' इति वाच्यम् ।

धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ॥२६२॥
[किरातार्जुनीय ३.३४]

अत्र स्यादेः प्रत्ययस्य । 'तीव्रेण विद्वेषिभुवागसा च' इति तु युक्तम् । यथा वा[1]—

बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को[2] गजाजिनस्यैव दुकूलभावः ॥ २६३ ॥
[कुमार० ७.३२]

अत्र गजेन्द्रचर्मैव[3] दुकूलमस्येति युक्तम् ।

सस्नुः पयः पपुरनेनिजुरम्बराणि
　जक्षुर्बिसं धृतविकासिबिसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
　दोषप्रवादममृजन् वननिम्नगानाम् ॥ २६४ ॥
[शिशुपाल० ५.२८]

(71) 'नैकं पद द्वि. प्रयोज्यं प्रायेण' इति (काव्यालङ्कार० अधि. ५ अ. १ सू. १) उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो[4] हि विषय उक्तपदत्वस्य, अयथोद्देशं प्रतिनिर्देशस्तु भग्नप्रक्रमत्वस्येति भिन्नविषयत्वात् ।

**सस्नुरिति** । अत्र स्नानादौ यः कालविशेषः प्रक्रान्तः, स नेजनादावुपेक्षित इति कालस्याप्यत्र प्रक्रमभेद इति केचिदाहुः । वयं तु ब्रूमः—काल-

1. I drops यथा वा　2. I, S °ङ्कः सिंहाजिनस्यैव.　3. I, S मृगेन्द्रचर्मैव.
4. E °निर्देश्य°.

अत्र त्यादेः । 'विकचमस्य दधुः प्रसूनम्' इति तु युक्तम् ।

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ २६५ ॥
[ किरातार्जुनीय ३.४० ]

अत्र कृतः । 'सुखमीहितुं वा' इति तु युक्तम् ।

उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ २६६ ॥
[ बालरामायण १.८ ]

विशेषस्य विवक्षामात्रभावितयानवस्थितत्वाद् दोषोऽयमनुद्भावनीय एव । यदाहु---

(72) 'परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये दर्शनयोग्यत्वात् परोक्षस्याविवक्षाया लङ् भवत्येव । अजयज्जर्तो हूणान् इति । सतोऽपि वाविवक्षा भवति । यथा- अनुदरा कन्या इति ।'

**सुखमीहितुं वेति तु युक्तमिति**। एव च तुल्यकक्षत्वेन विकल्पार्थवृत्तेर्वाशब्दस्य न विषयोऽयमित्यपि परिहृतं भवति । यथा च —

रुदता कुत एव सा पुनर्भवता नानुमृतेरवाप्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥ ३४३ ॥
[ रघु० ८.८५ ]

अत्र हि 'कुत एव तु सानुरोदनात्' इति युक्तः पाठः । इह तु न दोषः—

पृथ्वि स्थिरीभव भुजङ्गम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥ ३४४ ॥
[ बालरामायण १.४८ ]

अत्र हि पृथ्व्यादिविषयः प्रैषलक्षणोऽर्थः कविना वक्तुं प्रक्रान्तः, तस्य

1. I च इति 2 A °भवियाकालवितियान.° C °यानासवस्थित°. 3. E ना[नु]मृताप्यवा. 4. E °लक्षणः कविना.

अत्र पर्यायस्य। 'मिता भूः पत्यापां स च पति[1]रेषां योजनशतम्' इति तु युक्तम्।

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः।
लघुता नियता निरायतेरगरीयान्न पदं नृपश्रियः ॥ २६७ ॥
[किरातार्जुनीय २.१४]

अत्रोपसर्गस्य पर्यायस्य च। 'तदभिभवः कुरुते निरायतिं, लघुतां भजते निरायतिः, लघुताभाग् न पदम्' इति युक्तम्।

उत्फुल्लकमलकेसरपरागगौरद्युति मम हि गौरि।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥ २६८ ॥
[नागानन्द १.१३]

अत्रैकवचनेन भगवती संबोध्य प्रमादसंबन्धेन यस्तस्यां बहुत्वनिर्देशः स वचनस्य।

प्रत्ययभेदेऽपि निर्व्यूढत्वात् प्रैषार्थानां च[2] पदानामुद्देश्य[3]प्रतिनिर्देश्यभावेनोपादानं न कृतमिति [4]नैनादृशः प्रत्ययप्रक्रमभेददोषस्य विषयोऽवगन्तव्यः।

**'मिता भूः पत्यापाम्–'** इत्यादि। एवं च च्छिदिक्रियाकर्तुरुदन्वतो वक्ष्यमाणनयेन विधेयतया प्राधान्यात् समासानुपपत्तिदोषोऽपि परिहृतो भवति। यथा च—

वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान्।
प्रकृत्या ह्यमणिः श्रेया[5]न्नालंकारश्च्युतोपलः[6] ॥ ३४५ ॥
[　　　　]

एवम्—

खमिव जलं जलमिव खं हंस इव शशी शशाङ्क इव हंसः।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥ ३४६ ॥
[　　　　]

इत्यादौ द्रष्टव्यम्।

---

1. I पतिरपां.　2. D drops च.　3. A प्रतिनिर्देश्य. C, E प्रतिनिर्दिश्य.
4. C नैवेदृशः.　5. A, B श्रेयानलंकारश्च्युतोपलः.　6. E °श्च्युतोपलः.

कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ २६९ ॥

[कुमार० ४.७]

अत्र कारकस्य। 'न च तेऽहं कृतवत्यसंमतम्' इति तु युक्तम्। यथा च—

चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसंगमभूषः ॥ २७० ॥

[शिशुपाल० १०.३३]

अत्र शृङ्खलाक्रमेण कर्तुः कर्मभावः कर्त्रन्तरं च यथा प्रक्रान्तं तथा न निर्व्यूढम्। 'तमपि वल्लभसङ्गः' इति तु युक्तम्।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैर्वह्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ २७१ ॥

[शाकुन्तल ३.३]

अत्र क्रमस्य। यथा वा—

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात् पाणिः पादोपसंग्रहणाय च ॥ २७२ ॥

[महावीरचरित २.३०]

**अकलितेति।** अत्र 'पादोपसंग्रहणाय' इति पूर्वं वाच्यम्। एवमन्येऽपि भेदा अभ्यूह्याः।

ननु कर्तृप्रक्रमभेदोऽपीह कस्मान्नोपदर्शितः। असंभवादिति ब्रूमः। यस्तु

1. I यथोप्रक्रान्तं. 2. A, B प्रक्रमाभेदो.

यथा वा व्यतिरेकालङ्कारे—

तरङ्गय दृशोऽङ्गने पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।

क्वचित् कविभिः प्रयुज्यमानो दृश्यते स कर्तृव्यत्यासो नाम गुण एव, न दोषः । तत्रैव चायं प्रक्रमभेदभ्रमो भवताम् । तत्र युष्मदर्थस्य यथा—'यथाह सप्तमो वैकुण्ठावतारः' इति । अत्र हि यथा त्वमिति युष्मदर्थस्य कर्तृत्वं प्रकृतमपहाय चारुत्वाय ततोऽन्यत्रारोप्यैवमुक्तम् । दाशरथिं रामं प्रति हि कस्यचित् समक्षमियमुक्तिः । अस्मदर्थस्य यथा—

नाभिवादनप्रसाद्यो रेणुकापुत्र । गरीयान् हि गुरुधनुर्भङ्गापराधः ॥३४७॥ इति ।
[बालरामायण ४.५,७]

अत्रापि हि नाभिवादनप्रसद्योऽस्मीति वक्तव्ये पूर्ववच्चारुत्वायैवमुक्तम् । एषा हि भार्गवस्यात्मानमुद्दिश्योक्तिः । यथा वा—

अयं जन प्रष्टुमनास्तपोधने न चेद् रहस्यं प्रतिगोप्तुमर्हसि ॥ ३४८ ॥ इति ।
[कुमार० ५.४०]

अत्रापि 'अहं प्रष्टुमनाः' इति वक्तव्ये अस्मदर्थस्य कर्तृत्वमन्यत्रारोप्यैवमुक्तम् । द्विविधो ह्यन्यशब्दार्थः । तत्र चेतनेऽन्यत्रारोपो निदर्शित एव । अचेतने तु यथा 'चापाचार्य' (पृ. २३२) इति । अत्र हि 'त्वं रेणुकाकण्ठबाधां कृतवान् इति त्वया बद्धस्पर्धोऽहं लज्जे' इति वक्तव्ये चारुत्वाय युष्मदस्मदर्थयोः कर्तृत्वमुभयोः परशुचन्द्रहासयोर्जडयोरारोप्यैवमुक्तम् । यथा च—

हे लङ्केश्वर दीयतां जनकजा रामः स्वयं याचते
　कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चिद् गतम् ।
नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
　पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥ ३४९ ॥
[बालरामायण ९.१९]

अत्राप्यहं न सहिष्ये-इति वक्तव्ये पूर्ववदस्मदर्थस्य कर्तृत्वमचेतने पत्त्रिणि समारोप्यैवमुक्तम् । इति ।

1 E drops तत्र 2 A, B प्रासाद्यो. 3. E च 4. A drops स्मदर्थ.

क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-
मुदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः ॥ २७३ ॥
[बालरामायण ३.२५; विद्धशाल० ३.२७]

अत्रोपमानानामिन्दीवरादीनां निन्दया नयनादीनामुपमेयानामतिशयो वक्तुं प्रक्रान्तो 'भवतु च द्विचन्द्रं नभः' इति सादृश्यमात्राभिधानेन न[1] निर्व्यूढ इति भग्नप्रक्रमत्वम्। 'भवतु तद् विचन्द्रं नभः' इति तु युक्तम्। तथा—

तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत् स्मितं का सुधा
सा चेत् कान्तिरतन्त्रमेव कनकं ताश्चेद् गिरो धिङ् मधु।
सा दृष्टिर्यदि हारितं कुवलयैः किं वा बहु ब्रूमहे
यत् सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥ २७४ ॥
[बालरामायण २.१७; विद्धशाल० १.१४]

अत्रोपमानादुपमेयस्यातिरेकलक्षणं वस्तु वक्तुमिष्टं, तम्यार्थान्तरन्यासेन वस्तुसर्गपौनरुक्त्यस्य सादृश्यपर्यवसानाद् भग्नप्रक्रमत्वम्।

वक्त्राद्यौचित्ये न दोषः—

व्रजत. क्व तात वजसीति परिचयगतार्थमस्फुटम्।
धैर्यमभिनदुदितं शिशुना जननीनिभर्त्सनै[2]विवृद्धमन्युना ॥ २७५ ॥
[शिशुपाल० १५.८१]

अत्र शिशुना वजति[3]रेव प्र[4]युक्तो न च[5] व्रजतिस्तत्रैव परिचयगतार्थास्फुटत्व-धैर्यभेदित्वसंभवात्। केवलं शक्तिवैकल्याद् रेफोऽनेन नोच्चारितः।

पदार्थानां परस्परमसम्बन्धोऽनन्वितत्वम् यथा—

1 I, L drop न. 2. I °नवृद्धमन्युना. 3. I, L व्रजतिरेव. 4. L प्रयुक्ते.
5. I drops च.

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ २७६ ॥
[ ]

अत्र यद्याकारः सन्निवेशलक्षणो विवक्षितस्तदा स परस्परपरिहारस्थितिमतोरर्थयोः सिद्ध एवेत्यनुपादेयः । अक्षरविशेषलक्षणस्तु शब्दनियतत्वादर्थयोर्न संभवत्येवेत्यनन्वितत्वम् । यथा वा—

निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
नूनं तेषामभ्यसूयापरोऽसौ वीर्योदग्रे राजशब्दे मृगाणाम् ॥ २७७ ॥
[ रघु० ३.६४ ]

अत्र सिंहानां न तावद् राजशब्दः संभवति तेषां तद्वाच्यत्वाभावात् तत्सम्बन्धाभावाच्च तत्पर्यायस्य मृगराजशब्दस्यास्तीति चेत् ? न, तस्य प्रक्रान्तत्वाभावात् । मृगाणामित्यत्र मृगराजानामित्यनुक्तेश्च । किं च मृगेषु राजत्वं भवति सिंहानां, न तु शब्दे इति वीर्योदग्रत्वं तद्विशेषणमनुपपन्नमेव तस्यार्थनिष्ठत्वेनोपपत्तेः । तेन सिंहानां मृगाणां वीर्योदग्रत्वस्य च न राजशब्देनान्वयः संगच्छते । तेन राजभाव इति वा[1] मृगेष्विति वा पाठः श्रेयान् । यथा वा ---

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणा
किं तैस्त्वत्परितोषकारि विहितं किंचित् प्रवादोचितम् ॥ २७८ ॥
[ ]

'अङ्गाङ्गिनोरेव हि यत्तदर्थयोः संबन्धो न त्वङ्गानां यदर्थानामन्योन्यम्' इति नियमेन बहुभिर्यदर्थैर्नैक एवार्थो निर्दिश्यत इति

---

**अर्थयोरिति** । कृपणकृपाणशब्दवाच्ययोः ।
**न त्वङ्गानामिति** । प्रधानानुयायित्वेन समत्वादित्यर्थः ।

1. I drops वा.

यैरित्यत्र विशेष्यस्याप्रतीतिः । 'क्षपाचारिभिः' इति तु पाठे युज्यते समन्वयः । यथा वा उपमायाम् —

वापीव विमलं व्योम हंसीव धवलः शशी ।
शशिलेखेव हंसोऽयं हंसालिरिव ते यशः ॥ २७९ ॥

[ ]

तथा—

सरांसीवामलं व्योम काशा इव सितः शशी ।
शशीव धवला हंसा हंसीव विशदा दिशः ॥ २८० ॥

[ ]

अत्रोपमानोपमेययोः साधारणधर्माभिधायिपदं लिङ्गवचनाभ्यां वैसदृश्यादुपमानेन न सम्बध्यत इत्यनन्वितम् । यदि च लिङ्गवचसोर्विपरिणामादुपमानेनापि संबन्धः क्रियते (? क्रियेत) तदाभ्यासलक्षणो वाक्यभेदः स्यात् । एवं चाव्यवधानेन प्रकृतोऽर्थो न प्रतीयेत । विपरिणामश्च

**युज्यत इति** । यदि क्षपाचारिणामित्यस्य स्थाने क्षपाचारिभिरिति पठ्यते तदा त्रयोऽपि यच्छब्दार्थाः समशीर्षिकया धावित्वा अङ्गीभूतेन तैः क्षपाचारिभिरित्यनेन प्रतिस्वमाञ्जस्येनैव सम्बन्धमनुभवन्तीत्यर्थः । यथा वा—

तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम् ।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः ॥ ३५० ॥

[रघु० १६·७१]

अत्रानुयाति—क्रियापेक्षो राजमरुत्वतोः कर्तृकर्मभावोऽभिधातुमभिमतः कवेः । न चासौ तत्संबन्धस्तयो साक्षादुक्तः, जललीलासंबन्धमुखेन राजसंबन्धस्योक्तत्वात् । अतोऽत्र साक्षात्तत्सम्बन्धो (वा) वाच्य तदर्थमन्यत् क्रियान्तरं वा, येन कर्तृकर्मभावस्तयोर्घटनामियात् । न चोभयोरेकमप्युक्तमित्यनन्वितत्वम् । तेन वरमयमत्र पाठः—'आकाशगङ्गारतिरप्सरोभिर्वृतोऽनुयातो मघवा विलासैः' । इति ।

**अभ्यासलक्षण** इति । पौनःपुन्यरूप । वाक्यभेद इति । द्वे वाक्ये स्यातामित्यर्थः ।

1 I विमलः 2. E च. 3. A, B, C, D सजल° 4. A, B °कर्मस्यभावस्त°. 5. A, B, C, E घटामि°.

शास्त्रीयो न्यायः काव्येषु न युक्तः। यत्र तु नानात्वेऽपि लिङ्गवचसोः साधारणधर्माभिधायिपदं स्वरूपभेदं नापद्यते न तत्रैतद् दूषणम्। यथा—

वाक्प्रपञ्चैकसारेण निर्विशेषाल्पवृत्तिना।
स्वामिनेव नटत्वेन निर्विण्णाः सर्वथा वयम् ॥ २८१ ॥

[　　　　]

चन्द्रमिव सुन्दरं मुखं पश्यति ॥ २८२ ॥ [　　　　]

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभा तदीया विभ्रमा इव ॥ २८३ ॥ इति।

[　　　　]

यत्रापि गम्यमानं साधारणधर्माभिधायि पदं तत्रापि न दोषः। यथा— चन्द्र इव मुखं, कमलमिव पाणिः, बिम्बफलमिवाधर इत्यादि।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपा भवतीत्यसावप्यनन्वितस्यैव विषयः। यथा—

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती।
पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना ॥ २८४ ॥

[रघु० १७.१]

अत्र चेतना प्रसादमाप्नोति, न पुनरापेति कालभेदः।

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
　कौसुम्भरागरुचिरस्फुरदंशुकान्ता।
विभ्राजसे मकरकेतनमर्चयन्ती
　बालप्रवालविटपप्रभवा लतेव ॥ २८५ ॥

[रत्नावली १.२०]

**असदृश** इति। टगन्तत्वादेकवचनान्तम्। क्विबन्तत्वाद् बहुवचनान्तं च। मधुरतया भृतो भृतः। तां च बिभ्रति।

**दधते इति**। 'दधि धारण' इत्यस्य दधातेश्चात्मनेपदैकवचनबहुवचनाभ्याम्।

अत्र लता विभ्राजते, न तु विभ्राजस इति पुरुषभेदः ।

गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥ २८६ ॥

[ ]

इत्यादौ च गङ्गा प्रवहति, न तु प्रवहतु इत्यप्रवृत्तप्रवर्तनात्मनो विधेः, एवंविधस्य चान्यस्यार्थस्योपमानगतस्यासंभवाद् विध्यादिभेदः ।

अथाष्टावुभयदोषानाह—

**१०) अप्रयुक्ताश्लीलासमर्थानुचितार्थश्रुतिकटुक्लिष्टाविमृष्टविधेयांशविरुद्धबुद्धिकृत्त्वान्युभयोः ॥ ६ ॥**

उभयोरिति । पदस्य वाक्यस्य चेत्यर्थः । दोष इति वर्तते ।

कविभिरनादृतत्वादप्रयुक्तत्वम् । तच्च लोकमात्रप्रसिद्धत्वाच्छास्त्रमात्रप्रसिद्धत्वाच्च । आद्यं यथा—

कष्टं कथं रोदिति थूत्कृतेयम् ॥ २८७ ॥ [ ]

देश्यं चैतत्प्रायमेव । यदाह - -

(22) प्रकृतिप्रत्ययमूला व्युत्पत्तिर्यस्य नास्ति देश्यस्य ।

तन्मडहादि कथञ्चिन्न रूढिरिति संस्कृते रचयेत् ॥

[रुद्रट ६.२७]

**लोकमात्रप्रसिद्धत्वादिति** । एनेन ग्राम्यत्वमप्रयुक्तत्वाच्च भिद्यत इत्याह । **शास्त्रमात्रप्रसिद्धत्वादिति** । शास्त्राणि योगशास्त्रधातुपाठाभिधानकोशादीनि । तेनाप्रतीतासमर्थनिहतार्थन्वानि न पृथग् लक्षणीयानि, अप्रयुक्तत्व एवान्तर्भावादिति ।

**एतत्प्रायमेवेति** । लोकमात्रप्रसिद्धिप्रायम् । केवलं नियतदेशविषयत्वेन प्रसिद्धिरिति प्रायग्रहणम् ।

**मडहादीति** । मडह-लडह-होरण-कंदोट्ट-एल्ल-हुक्कक[हुंकय]-कुसुमाल-वाणवाल-आदिकं यथाक्रमं सूक्ष्मश्रेष्ठवस्त्रोत्पलदरिद्राञ्जलिचीरशकादिवाचकम् । रूढिरितीति । रूढिभ्रान्त्या कविः स्वदेशप्रसिद्धया 'अस्यार्थस्य शब्दोऽयं सर्वत्र वाचकः' इति मन्यमानः प्रयुञ्जीत । व्युत्पत्तिर्यस्य नास्तीति वचनाच्च सव्युत्पत्तिकं

1 I दोषा. 2. E, O °हुक्कु°. 3. E वाणादिकं. 4. E सूक्ष्मा°. 5. A, B, C, D °क:श्चिद्धिश्चदेश°.

क्वचिद् गुणो यथा—

देव स्वस्ति वयं द्विजास्तत इतः स्नानेन निष्कल्मषाः
कालिन्दीसुरसिन्धुसङ्गपयसि स्नातुं समीहामहे ।
तद् याचेमहि सप्तविष्टपशुचीभावैकतानव्रतं
संयच्छस्व यशः सितासितपयोभेदाद् विवेकोऽस्तु नः ॥ २८८ ॥

अत्रामुग्धस्यापि मुग्धस्येव ब्राह्मणस्य वक्तृत्वे स्वस्तीति गुणः ।

वाक्यस्य यथा—

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥ २८९ ॥ [ ]

क्वचिद् गुणो यथा—

फुल्लुक्करं कलमकूरसमं वहन्ति
जे सिन्दुवारविडवा मह वल्लहा ते ।
जे गालिदस्स महिसीदहिणो सरिच्छा
ते किंपि मुद्धवियइल्लपसूणपुंजा ॥ २९० ॥

[कर्पूरमञ्जरी १.१९]

अत्र कलमभक्तमहिषीदधिशब्दानां लौकिकत्वेऽपि विदूषकोक्तौ गुणत्वम् ।

शास्त्रमात्रप्रसिद्धिर्यथा—

यथायं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥२९१॥ [ ]

अत्र दैवतशब्दः पुलिङ्गे लिङ्गानुशासन एव प्रसिद्धः । यथा वा—

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत् कर्म बन्धकम् ॥ २९२ ॥ [ ]

देश्यं कदाचित् प्रयोज्यमेवेत्युक्तं भवति—यथा दूर्वायां छिन्नोद्भवाशब्दः, ताले भूमिपिशाचः, शर्वे महानटः, वृक्षे परशुभक्तः, चन्द्रामृतयोः समुद्रनवनीतं, जले मेघक्षीरमित्यादि ।

1 P & L फुल्लुक्करं. 2. D पशु°.

अत्राशयशब्दो वासनापर्यायो योगशास्त्र एव प्रसिद्धः । यथा च -

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥ २९३ ॥

अत्र हन्तीति गमनार्थे धातुपाठ एव प्रसिद्धम् । यथा वा—

'सहस्रगोरिवानीकं दुःसहं भवतः परैः' ॥ २९४ ॥
[ ]

अत्र गोशब्दस्याक्षिवाचित्वमभिधानकोश एव प्रसिद्धम् ।

क्वचिद् गुणो यथा—

सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्माऽन्यो नास्ति मन्त्रो महीभृताम् ॥ २९५ ॥
[शिशुपाल० २.२८]

अत्राङ्गस्कन्धपञ्चकमित्यस्य तद्विदसंवादाद्गौ गुणत्वम् । श्लेषे तु न गुणो न दोषः । यथा

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।

**अङ्गेति ।** कर्मणामारम्भोपाय, द्रव्यपुरुषसम्पन, देशकालविभाग·, विनिपातप्रतीकार·, कार्यसिद्धिश्चेति पञ्चाङ्गानि । स्कन्धेति ।

(71) विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ।
भिक्षुणां शाक्यसिंहेन स्कन्धाः पञ्च प्रकीर्तिता ॥

**येन ध्वस्तेति ।** माधवपक्षे—येन ध्वस्तं बालक्रीडायाम् । अन शकटम् । अभवेन असंसारेण । बलिं जितवान । यः कायः स पूर्वममृतहरणे स्त्रीत्वं नीतः । उद्वृत्त भुजग कालियाख्य पीडितवान । रवे शब्दब्रह्मणि लयः समाप्तिर्यस्य । अगं गोवर्धनगिरिं गा च योऽधारयत् । शशिनं मथ्नाति यो राहुस्तस्य शिरोहरः । अन्धकानां वृष्णीना क्षयं निवासं करोति य· स माधवः कृष्णः । उमाधवपक्षे तु—बलिजित्कायो विष्णुदेहस्त्रिपुरवधेऽस्त्रीकृतः शरतां नीतः । भुजङ्गा· सर्पाः । शशियुक्तं शिरो यस्य तथाभूतो हरः । यदि वा शशियुक्तं शिर आहुर्नाम च हर इति । अन्धकाख्यो दैत्यः ।

1. D, E 'पुरेष्वस्त्री'.

यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वा सर्वदोमाधवः ॥ २९६ ॥
[सुभाषितावलौ (४४) चन्द्रककवेः]

अत्र माधवपक्षे शशिमच्छब्दः क्षयशब्दश्चाप्रयुक्तः।
वाक्यस्य यथा—

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः।
दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ॥ २९७ ॥
[ ]

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रप्रसिद्धाः।
क्वचिद् गुणो यथा —

अस्माकमद्य हेमन्ते देवाल्पत्वेन वाससः।
अकितीव यजादीना दुर्लभं संप्रसारणम् ॥ २९८ ॥

अत्र प्रतिपाद्यप्रतिपादकयोस्तज्ज्ञतायां गुणः।
व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वेनाश्लीलत्वं त्रेधा।

तत्र पदस्य यथा—

साधनं सुमहद् यस्य यन्नान्यस्य विलोक्यते।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥ २९९ ॥
[ ]

---

**तस्याधिमात्रोपायस्येति।** (72) "तथा हि नव योगिनो भवन्ति। मृदूपायो मध्योपायोऽधिमात्रोपाय इति। तत्र मृदूपायस्त्रिविधः—मृदुसंवेगः, मध्यसंवेगः, तीव्रसंवेग इति। एवमितरावपि। तत्राधिमात्रोपायानां तीव्रसंवेगानामासन्नः समाधिलाभः समाधिफलं च भवति॥" [योगसूत्र (१·२१) व्यासभाष्य] संपिपादयिषया चित्तवृत्तिनिरोधसाधनानुष्ठानं योऽभ्यासः "स दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः"। (योगसूत्र १·१४) दीर्घकालेनासेवितो निरन्तरासेवितस्तपसा ब्रह्मचर्येण विद्यया श्रद्धया संपादितः सत्कारवान् दृढभूमिः। व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः [योगसूत्र (१·१४) व्यासभाष्य]

अवाचकत्वादित्यनेनावाचकत्वप्रसिद्धिदुष्टत्वयोः कल्पितार्थत्वादित्यनेन नेयार्थत्वस्य, संदिग्धत्वादित्यनेन संदिग्धत्वस्यासमर्थत्वदोषेऽन्तर्भावमाह।

---

1. E थे सा°. 2. E °या च सं°. 3. E °द्रुत°.

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाथवा नतिमृते तेनानिशं चुम्बिता ॥ ३०० ॥

[ अमरु० ७२ ]

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविलुलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्ही ॥ ३०१ ॥

[ विक्रमोर्वशीयम् ४.१० ]

एषु साधनवायुविनाशशब्दा व्रीडादिव्यञ्जकाः ।

वाक्यस्य यथा—

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहणनोत्साहवती मोहनमादधौ ॥ ३०२ ॥ [ ]

कम्पना सेना वामं शत्रुं प्रति विरुद्धं वल्गु वा । अत्रोपसर्पणप्रहणनमोहनशब्दाः व्रीडादायित्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्तनम् ॥ ३०३ ॥

[ ]

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥ ३०४ ॥

[ ]

पावकेन पवित्रेणाग्निना च । अत्र पितुर्गृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

क्वचिद् गुणो यथा सुरतारम्भ[1]गोष्ठयाम् (23) द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु　[　　　　　　　] इति कामशास्त्र[2]स्थितौ—

करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते[3] ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥ ३०५ ॥

(24) तर्जन्यनामिके श्लिष्टे मध्या पृष्ठस्थिता तयोः । करिहस्तः....॥ संबाधः संघट्टो वराङ्गं च, ध्वजः पताकावाचिह्नं पुंव्यञ्जनं च, साधनं सैन्यं स्त्रीव्यञ्जनं च ।

शमकथासु यथा—

उत्तानोच्छूनमण्डूक[4]पाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ ३०६ ॥

निर्वाणवैरदहनाः प्रशमादरीणां
　नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः कृत[5]विग्रहाश्च
　स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ ३०७ ॥
[वेणी० १.७]

अत्र भाव्यमङ्गलसूचनम् । रक्ता सानुरागा, प्रसाधिता अर्जिता भूर्यैः । रक्तेन मण्डिता भूश्च यैः । विग्रहो वैरं शरीरं च । स्वस्थाः कुशलिनः स्वर्गस्थाश्च ।

अवाचकत्वात् कल्पितार्थत्वात् संदिग्धत्वाच्च विवक्षितमर्थं वक्तुमशक्तिरसमर्थत्वम् । पदस्य यथा—

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा

1. I drops °रम्भ.　2. I स्थितिः.　3. P, I, L °श्लेष्ठिते. + A few words after करिहस्तः are missing in the original Mss. The second half of the verse runs as follows . करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः ॥ 4. S °माण्डूक. 5. क्षत°.

तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत् तत् कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥ ३०८ ॥

[ ]

अत्र दिनमिति प्रकाशमयमित्यत्रार्थेऽवाचकम् । यथा वा —

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥ ३०९ ॥

अत्र दधदित्यत्रार्थे विदधदित्यवाचकम् । यथा वा[1] —

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्यैवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ ३१० ॥

[बालरामायण २.३७]

अत्र विजित इत्यत्रार्थे विजेय इत्यवाचकः । यथा च—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ ३११ ॥

[वेणी० ३.४]

अत्र रवो मण्डूकादिषु प्रसिद्धो, न तूक्तविशेषणे सिंहनादे इत्यवाचकः । तथा च--

**मण्डूकादिषु प्रसिद्ध इति** । मण्डूकादीनां शब्दो रवोऽभिधीयत इत्यर्थः । यथा च—

1. I drops वा.

यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥ ३५.१ ॥

[ शिशुपाल० १.४२ ]

अत्र[1] हिरण्यकशिपुमिति वक्तव्ये हिरण्यपूर्वं कशिपुमित्यवाचकम् । यतो[2]ऽत्र हिरण्यशब्दः[3] कशिपुशब्दश्चाभिधेयप्रधानौ वा स्याताम्, स्वरूपमात्र[4]प्रधानौ वा । तत्र न तावदभिधेयप्रधानावनभ्युपगमात्, अर्थस्यासमन्वयात् । नापि स्वरूपमात्रप्रधानौ, न[5] ह्येवमसुरविशेषस्य हिरण्यकशिपोरभिधानुकार. प्रख्यानक्रियाकर्मभावेनाभिहितो भवति । द्विविधो हि शब्दानुकारः । शाब्दत्वार्थत्वभेदात्[6] । तत्रेतिना व्यवच्छेदे शाब्दः प्रसिद्ध एव । अर्थादवच्छेदावगतावार्थः । यथा—

महदपि परदुःखं शीतलं सम्यगाहु· ॥ ३५.२ ॥

[ विक्रमोर्वशीयम् ४.१३ ]

इह चायमार्थोऽनुकार इतिनानवच्छेदात । केवलं यत्तस्याभिधानमनुकार्यं तन्नानुकृतम् । यच्चानुकृत तत्तस्याभिधानमेव न भवति । लोके हि हिरण्यकशिपुरिति तस्याख्या[7] न हिरण्यपूर्वः कशिपुरित्यत· तस्यावाचकत्वम् । यथा वा—

क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपदास्तदेव ॥ ३५.३ ॥

[ शिशुपाल० ३.५९ ]

इत्यत्र हि कल्पवृक्षा इति वक्तव्ये कल्पोपपदा वृक्षा इत्यवाचकम् । यतो विशेषण[8]मिदमभिधानस्वरूपविषयमेवावकल्पते नाभिधेयविषयम्, सोपपदत्वनिरुपपदत्वयोरभिधानधर्मत्वात् । न च तेन विशेषितेन किञ्चित् प्रयोजनम् । अभिधानमात्रादनभिमतार्थसिद्धे· । अभिधेयविषयत्वे च तत्सिद्धिर्भवेत्, किं तु न तत्र यथोक्तविशेषणसंबन्धः संगच्छते । यत्र च संगच्छते[9] न ततोऽभिमतार्थसिद्धिरिति अवाचकत्वादसमर्थमेवेति । तस्माद् वरमयमत्र पाठः[10] 'क्षुण्णं यदन्तःकरणेन नाम तदेव कल्पद्रुमकाः फलन्ति ।' अस्मिंश्च पाठे क्षुण्णस्यार्थस्य कल्पद्रुमाणां चावज्ञावगतौ गुणान्तरलाभः । एवम्—

दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं प्रचक्षते ॥ ३५.४ ॥

[ रघु० ८.२९ ]

इत्यादावपि द्रष्टव्यम् ।

1 E अत्र हि हि°. 2. E यतो हि°. 3. E adds यथा च. 4. E drops मात्र. 5 E ननु ह्ये°. 6. A शाब्दत्वार्थत्वे भेदात्. 7. E लोकाख्यान हि°. 8. A विशेषेण. 9. E संगृह्यते. 10. A, B, C, D, E add श्रेष्ठ: after पाठः. This word श्रेष्ठ: seems to have come in the text out of marginal notes.

(26) मञ्जीरादिषु रणित[1]प्रायान् पक्षिषु च कूजितप्रभृतीन्।
मणित[2]प्रायान् सुरते मेघादिषु गर्जितप्रा[3]यान् ॥
दृष्ट्वा प्रयुज्यमानानेवंप्रायाँस्तथा प्रयुञ्जीत।
अन्यत्रैतेऽनुचिताः शब्दार्थत्वे समानेऽपि ॥

[रुद्रट० ६.२५-२६]

क्वचिद् गुणो यथा—

आशु लङ्घितवतीष्टकराग्रे नीविमर्धमुकुलीकृतदृष्ट्या।
रक्तवैणिकहताधरतन्त्रीमण्डलक्वणितचारु चुकूजे ॥ ३१२ ॥

[शिशुपाल० १०.६४]

अत्र कूजितस्य पक्षिषु प्रसिद्धत्वेऽपि कामशास्त्रे प्रसिद्धत्वाद् गुणः। यथा वा उपमायाम्—

पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ।
अथ नागयूथमलिनानि जगत् परितस्तमांसि परितस्तरिरे[4] ॥ ३१३ ॥

[शिशुपाल० ९.१८]

अत्र नागयूथेन धर्मिणा साम्यं तमसो वक्तुमभिमतं कवेर्न तद्धर्मेण मलिनत्वमात्रेण, मृगपतौ पतिते तस्यैव निष्प्रतिपक्षतया स्वेच्छाविहारोपपत्तेः। न तद्धन्मलिनानां तमसां, पतङ्गस्य मृगपतिरूपणा-

**मञ्जीरादीति**। आदिग्रहणं रशनाघण्टाभ्रमराद्यर्थम्। प्रायग्रहणं सदृशार्थवृत्तिक्वणिशिञ्जिगुञ्जीत्याद्यर्थम्। प्रभृतिग्रहणं वाद्यत्याद्यर्थम्। पुनरादिग्रहणं सिंहमृगाद्यर्थम्। प्रायग्रहणमपि ध्वनत्याद्यर्थम्। एवंप्रायानिति। ये शास्त्रे सामान्येन पठ्यन्ते, अथ च विशेष एव दृश्यन्ते तानित्यर्थ। तद् यथा—हेषतिरश्वेषु, भणतिः पुरुषेषु, कणतिः पीडितेषु, वातिर्वायौ, न त्वन्यत्र। न हि भवति पुरुषो वातीति। एवमन्यदपि बोद्धव्यम्।

1. I रणितप्रायं. 2. I स्तनितमणितादि. 3 I प्रभृति. 4. I तनु.

वैयर्थ्यप्रसङ्गात् । न च तत्साम्यं सुन्दरहारिसदृशसुभगसन्निभादिशब्दा इव मलिनादिशब्दाः शक्नुवन्ति वक्तुमित्यवाचकत्वम् ।

यथा वा उत्प्रेक्षायाम्—

उदयौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासंकुचितं यथा ॥ ३१४ ॥ [ ]

अत्र ध्रुवेवादिशब्दवद् यथाशब्दः संभावनं प्रतिपादयितुं नोत्सहत इत्यवाचकः । यथा वार्थान्तरन्यासे—

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ ३१५ ॥
[ किरातार्जुनीय २.२१ ]

अत्र महीयस इत्येकवचनं न [1]सामान्यरूपमर्थं व्यक्तमभिधातुं क्षमत इत्यवाचकत्वम् । बहुवचनस्यैव वीप्सासमानफलस्य स्फुटत्वेन तदभिव्यक्तिक्षमत्वात् । [2]यथा —

यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ ३१६ ॥
[ शिशुपाल० २.१३ ]

सर्वादिशब्दोपादाने त्वेकवचनस्यापि न दोषः । यथा—

छायामपास्य महतीमपि वर्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम् ।
सर्वो [3]हि नोपनतमप्यपचीयमानं
वर्द्धिष्णुमाश्रयमनागतमभ्युपैति ॥ ३१७ ॥
[ शिशुपाल० ५.१४ ]

1. I, S सामान्यमर्थरूपम्. 2. S drops यथा. 3. I ऽपि.

वाक्यस्य यथा—

विभजन्ते न ये भूपमालभन्ते न ते श्रियम् ।
आवहन्ति न ते दुःखं प्रस्मरन्ति न ये प्रियाम् ॥ ३१८ [ ]

अत्र विभजतिर्विभागार्थः सेवने, आलभतिर्विनाशार्थो लाभे, आवहतिः करोत्यर्थो धारणे, प्रस्मरतिर्विस्मरणार्थः स्मरणेऽवाचकः ।

कल्पितार्थत्वादसमर्थत्वम् । पदस्य यथा—

किमुच्यतेऽस्य भूपाल मौलिर्मालाशिरोमणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥ ३१९ ॥ [ ]

अत्र वचःशब्देन गीःशब्दो लक्षित इति कल्पितार्थत्वम् । अत्र न केवलं पूर्वपदं यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते । जलध्यादौ तूत्तरपदमेव । वडवानलादौ तु पूर्वपदमेव । यदाह—

(26) निरूढा लक्षणाः काश्चित्... ... .... ।
.. . . काश्चिन्नैव त्वशक्तितः ॥ इति ॥

[कुमारिल, तन्त्रवार्तिक ३।१.६।१२]

वाक्यस्य यथा—

सपदि पङ्क्तिविहंगमनामभृत्तनयसंवलितं बलशालिना ।
विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकजिता जितम् ॥ ३२० ॥
[ ]

पङ्क्तिरिति दशसंख्या लक्ष्यते, विहंगमोऽत्र चक्रस्तन्नामभृतो रथा दश रथा यस्य तत्तनयौ रामलक्ष्मणौ । उलूकजिता इन्द्रजिता । कौशिकशब्देन इन्द्रोलूकयोरभिधानमिति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक उक्तः ।

1 L °र्थोऽवधारणे. 2. I °दसमर्थम्. 3. I मालामहामणेः 4. L drops from कल्पितार्थत्वा° (l.6) to इति. 5. P, I, L give the third and the fourth lines as क्रियन्ते सांप्रत काश्चित् काश्चिन्नैव त्वशक्तितः । The text appears to quote the first and the fourth quarters only. The second quarter in the तन्त्रवार्तिक is सामर्थ्यादभिधानवत् ।

सन्दिग्धत्वादसमर्थत्वम् । पदस्य यथा—

आलिङ्गितस्तत्र भवान् संपराये जयश्रिया ।
आशीःपरम्परा वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ ३२१ ॥

[　　　　]

अत्र वन्द्यां किं हठहृतमहेलायां किं नमस्यामिति सन्देहः । यथा वा —

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥ ३२२ ॥

[　　　　]

अत्र 'भूतपूर्वेपृचरट्' (सिद्धहेम ७।२।७८) इति चरट्प्रत्यये किं पूर्वं साधुः, उत साधुपु चरतीति सन्देहः । क्वचिद् गुणो यथा

पश्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम् ।
कालेनैव कठोरेण ग्रस्तां किं नस्तदाशया ॥ ३२३ ॥

[काव्यादर्श ३.१४२]

अत्र विरहातुराया ग्रीष्मकाल उपनते किं ग्रीष्मवाची कालशब्द उत मृत्युवाचीति सन्देहकारीदं वचनं युवानमाकुलीकर्तुं प्रयुक्तमिति । वाक्यस्य यथा—

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ ३२४ ॥

[　　　　]

अत्र किं सुरादिशब्दा देवसेनाशरविभूत्यर्था उत मदिराद्यर्था इति सन्देहः ।

1 L नाम्नयतेतराम्. 2. L drops उत साधुपु. 3 I नन्दिता 4 I विलोक्यने. 5. P, I, L शब्दो. त्यर्थ.. वर्थ.

क्वचिद् गुणो यथा—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ ३२५ ॥
[ ]

अत्र वाच्यमहिम्ना नियतार्थप्रतिपत्तिकारित्वे व्याजस्तुतिपर्यवसायित्वाद् गुणत्वम् ।

अनुचितार्थत्वं पदस्य यथा—

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥३२६॥
[ ]

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् । यथा वा उपमायाम् —

क्वचिदग्रे प्रसरता क्वचिदापत्य निम्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषा बलम् ॥ ३२७ ॥
[भामह २.५४]

तथा —

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥ ३२८ ॥
[ ]

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥ ३२९ ॥
[भामह २.५५]

पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ[1] ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥ ३३० ॥ [ ]

**पृथुकार्तस्वरेति** । पृथुकाना बालानां ये आर्ताः स्वरास्तेषा पात्रम्, पृथूनि कार्तस्वरस्य सुवर्णभाजनानि[2] च यत्र । भुवि उषितो भूषितोऽलङ्कृतश्च । विलसत्कैर्गर्तसंबन्धिभिः पांसुभिर्गहनम्, विलसन्तीभिः करेणुभिर्व्याप्तं च ।

1. I क्षतिधर. 2 A, B omit सुवर्ण. E सुवर्णस्य.

एषु श्वाद्युपमानानां जातिप्रमाणगता हीनताधिकता चेत्यनुचितार्थत्वम् निन्दायां प्रोत्साहने च न दोषः । यथा—

चतुरसखीजनवचनैरतिवाहितवासरा विनोदेन ।
निशि चण्डाल इवायं मारयति वियोगिनीश्चन्द्रः ॥ इति ॥ ३३१ ॥
[ ]

विशन्तु वृष्णयः शीघ्रं रुद्रा इव महौजसः ॥ ३३२ ॥ इति च ।
[ ]

यथा वा उत्प्रेक्षायाम्—

दिवाकराद् रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ॥ ३३३ ॥
[ कुमार० १.१२ ]

अत्राचेतनस्य तमसस्तात्त्विकेन रूपेण दिवाकरात् त्रास एव न संभवति, कुत एवं तत्प्रयोजितमद्रिपरित्राणम् । संभावितेन तु रूपेण प्रतिभासमानस्याप्यस्य न काचिदनुपपत्तिरवतरतीत्यनुचितैव तत्समर्थना ।

वाक्यस्य यथा—

कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि वनस्थास्तव विभो ।
जरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ ३३४ ॥
[ ]

अत्र कुविन्दादिशब्दास्तन्तुवायादिकर्माभिदधाना उपश्लोक्यमानस्य तिरस्कारं व्यञ्जन्तीत्यनुचितार्थाः ।

1. P, L विष्टय·. 2. S 'सा मतीप. 3. S एतत्प्र°. 4. I प्रतिभासमानस्य न. L, S प्रतिभासमानस्यास्य. 5 L 'पत्तिरनुचितैव. 6. I, L °वायादिमभि°. 7 I, L व्यञ्जयन्ती°.

परुषवर्णत्वं श्रुतिकटुत्वम् ।

पदस्य यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥ ३३५ ॥

अत्र कार्तार्थ्यमिति ।

वाक्यस्य यथा—

अचूचुरच्चण्डि कपोलयोस्ते कान्तिद्रवं द्राग् विशदं शशाङ्कः ॥ ३३६ ॥

अत्र चण्डिद्रागादीनि पदानि श्रुतिकटूनि ।

वक्त्राद्यौचित्ये गुणो यथा—

दीधीङ्[1]वेवीङ्समः कश्चिद् गुणवृद्ध्योरभाजनम् ।
क्विप्[2]प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते ॥ ३३७ ॥ [ ]

अत्र वैयाकरणो वक्ता ।

यदा त्वामहमद्राक्षं पदविद्याविशारद[3] ।
उपाध्यायं तदा स्मार्षं समस्प्राक्षं च संमदम् ॥ ३३८ ॥

अत्र वैयाकरणः प्रतिपाद्यः ।

मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः
सिन्धुध्वानिनि हुंकृते स्फुरति यत् तद्गर्जितं गर्जितम् ॥ ३३९ ॥
[ ]

अत्र सिंहे वाच्ये परुषाः शब्दाः ।

अन्त्रप्रोतबृहत्कपालनलककूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।

1. S देधी . 2 I, L, P क्विन् 3 I, L विशारदः.

पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
　　व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ ३४० ॥
[ महावीरचरित १.३५ ]

अत्र बीभत्से व्यङ्ग्ये ।

रक्ताशोककृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं
　　नो दृष्टेति मुधैव चालयसि किं वाताभिभूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
　　स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ ३४१ ॥
[ विक्रमोर्वशीयम् ४× ]

अत्र शिरोधूननेन कुपितस्य वचसि प्रक्रान्ते । क्वचिन्नीरसे न गुणो न दोषः । यथा—

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
　　दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
　　र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ ३४२ ॥
[ सूर्यशतक ६ ]

व्यवहितार्थप्रत्ययजनकत्वं क्लिष्टत्वम् । पदस्य, यथा—

दक्षात्मजादयितवल्लभवेदिकानां
　　ज्योत्स्नाजुषां जललवास्तरलं पतन्ति ॥ ३४३ ॥ [　　]

प्राग्भारः सेकः । उल्लाघयन् (पङ्क्ति १३) स्वास्थ्यं नयन् ।

1. L प्राग्भार. 2. S, L घोरोल्लद्. × The verse is found interpolated after IV.30. 3. L नलह्वयन्त्यः. 4. L वान्तः. 5 L आह्नो. 6. L विगाढम्.

दक्षात्मजास्तारास्तासां दयितश्चन्द्रस्तस्य वल्लभाः कान्तास्तद्वेदिकानामिति। झगित्यर्थप्रतीतौ गुणः। यथा—'काञ्चीगुणस्थानमनिन्दितायाः'। वाक्यस्य यथा—

धम्मिलस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥ ३४४ ॥ [ ]

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धे क्लिष्टत्वम्।

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयोंऽशो यत्र तस्य भावोऽविमृष्टविधेयांशत्वम्। पदस्य यथा—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद् बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥३४५॥
[कुमार० ५.७२]

अत्रालक्षितत्वं नानुवाद्यमपि तु विधेयमिति 'अलक्षिता जनिः' इति वाच्यम्। यथा च—

स्रस्तां नितम्बादवलम्बमानां पुनः पुनः केसरपुष्पकाञ्चीम्।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥ ३४६ ॥
[कुमार० ३.५४]

अत्र मौर्वीं द्वितीयामिव इति द्वितीयत्वमात्रमुत्प्रेक्ष्यम्। यथा च—

तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि।
स्वं च संहितममोघसायकं व्याजहार हरसूनुसन्निभः ॥ ३४७ ॥
[रघु० ११.८३]

**दक्षात्मजेति**। अत्रैकपदप्रत्याय्योऽप्यर्थश्चन्द्रकान्तलक्षणो दक्षात्मजेत्याद्यनेकपदप्रत्यायितार्थपर्यालोचनाव्यवहिततया क्लिश्यमानो वाचकस्य क्लिष्टतामावहति।

**काञ्चीगुणस्थानमिति**। अत्र रूढत्वादवान्तरपदार्थप्रत्ययमन्तरेणैव एकपदवदर्थप्रतीतिरिति नैतत् क्लिष्टम्।

1. L बुद्धिव्युत्पत्तेः

अत्र सायकानुवादेनामोघत्वं[1] विधेयम् । 'अमोघमाशुगम्' इति तु युक्तः पाठः । यथा च—

मध्येव्योम त्रिशङ्कोः शतमखविमुखः स्वर्गसर्गं[2] चकार ॥ ३४८ ॥
[बालरामायण १.२६]

इत्यत्र हि व्योमैव प्राधान्येन विवक्षितं न तन्मध्यम् । तेन मध्ये व्योम्न इति युक्तम् । यथा च—

वाच्यवैचित्र्यरचनाचारु वाचस्पतेरपि ।
दुर्वचं वचनं तेन बहु तत्रास्त्यनुक्तवान् ॥ ३४९ ॥
[　　　]

अत्र नोक्तवानिति निषेधो विधेयः । यथा — 'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः' (पृ. २०३–४) इत्यादौ । न चानुक्तवत्त्वानुवादेनान्यदत्र किंचिद् विहितम् । यथा—

**व्योमैव प्राधान्येनेति** । अत्र विश्वामित्रस्य तपःप्रभावप्रकर्षः प्रस्तुतः । स च तस्य निरुपकरणस्य सतः शून्ये व्योमनि स्वर्गसर्गसामर्थ्येनैव प्रतिपादितो भवतीति व्योमैव प्राधान्येन विवक्षितं, न तन्मध्यम् ।

**निषेधो विधेय** इति । प्रसज्यविषयत्वादित्यर्थः । यदुक्तम्—

(73) अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ [　　　]

नञ्-समासस्त्वनुपपन्नः । तस्य हि पर्युदास एव विषयस्तत्रैव विशेषणत्वान्नञः स्याद्यन्तेनोत्तरपदेन संबन्धोपपत्तेः । यदाह—

(74) प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ [　　　]

न च पर्युदासाश्रयणं युक्तम्, अर्थस्यासङ्गतिप्रसङ्गात् । उक्तवत्त्वप्रतिषेधो ह्यत्राभिमतः, नानुक्तवत्त्वविधिः । तस्मादस्य नञो विधेयार्थनिष्ठतया प्राधान्[3]यस्यानूद्यमानार्थपरतया तद्विपरीतवृत्तिना उक्तवच्छब्देन सह सदाचारनिरतस्येव पतितेन वृत्तिर्नेष्यत[4] एवेति स्थितम् । यदाह—

(75) नञर्थस्य विधेयत्वे निषेधस्य विपर्यये ।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ॥ इति ॥

1 L °नुवादे मोघत्वम्. 2. A, B omit सर्ग. 3. E प्रधानस्य. 4. E adds इति.

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥ ३५० ॥

[रघु० १·२१]

अत्रात्रस्तताद्यनुवादेनात्मनो गोपनादि ।

वाक्यस्य यथा—

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितमर्वलभ्यविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ ३५१ ॥

[नागानन्द ४.२]

अत्र शाद्वलाद्यनुवादेन शय्यादीनि विधेयानि। अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषः, न वाक्यार्थस्य । एवं विध्यनुवादौ कर्तव्यौ—

---

**शय्यादीनि विधेयानीति** । यदाह—

(76) अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् ।
न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति ॥ [ ]

(77) विधेयोद्देश्यभावोऽयं रूप्यरूपकतात्मकः ।
न च तत्र विधेयोक्तिरुद्देश्यात् पूर्वमिष्यते ॥ [ ]

ननु 'शाद्वल शय्या शुचिशिला आसनम्' इत्येवं विपर्ययेणात्र संबन्धः करिष्यते, तस्य पुरुषाधीनत्वात् । तथा च न यथोक्तदोषावकाशो भविष्यतीति । सत्यम् । न[1] सर्वविषयोऽय संबन्धस्य पुरुषाधीनत्वोपगमः । तस्य हि विशेषणविशेष्यभाव एव विषयोऽवगन्तव्यो यत्र स्वसौन्दर्यादेव तयोरन्योन्याक्षेपः न विध्यनुवादभावः[2] । तदाह—**एवं चेति** । विध्यनुवादयोर्यथाश्रुतपदार्थसंबन्धनिबन्धनोऽर्थप्रतीतिक्रम इति पदार्थपौर्वापर्यनियमोऽवगन्तव्य इत्यर्थः[3] । ततश्च यदनूद्यते तस्यादावुपादानमुपपन्नम् । यस्तु विधीयते तस्य पश्चात्[4] । 'खलेवाली यूपो भवति' इत्यादौ च तथैव दृष्टम् । तथा (78) 'वृद्धिरादैच्' इत्यत्र भगवता **महाभाष्यकारेणा**वस्थापितम्— यदुतात्र मङ्गलद्योतनार्थमादौ वृद्धिशब्दस्योपादान क्षमणीयम् । अन्यथाऽऽदैजनुवादेन वृद्धिसंज्ञा[5]विधानात् पश्चादभिधानं कार्यं स्यात्, यथा 'अदेङ्गुणः' इत्येवमादौ ।

1. D स 2 E °वाद°, drops भाव.. 3. E drops इत्यर्थः. 4. E adds इति. 5 E °सज्ञाना°.

त्वक् तारवी निवसनं मृगचर्म शय्या
गेहं गुहा विपुलपत्रपुटा घटाश्च ।
मूलं दलं च कुसुमं च फलं च भोज्यं
पुत्रस्य जातमटवीगृहमेधिनस्ते ॥ ३५२ ॥

[ बालरामायण ६.४० ]

यथा वा—

संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यापि स जातिमात्रविहितो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्
योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी ॥ ३५३ ॥

[ ]

अत्र योऽसाविति पदद्वयमनुवाद्यविधेयार्थतया विवक्षितमनुवाद्यमात्रप्रतीतिकृदिति यदः प्रयोगोऽनुपपन्नः । तथा हि—यत्र यत्तदोरेकतरनिर्देशेनोपक्रमस्तत्र तत्प्रत्यवमर्शिना तदितरेणोपसंहारो न्याय्यः । तयोरप्यनुवाद्यविधेयार्थविषयत्वेनेष्टत्वात् । तयोश्च परस्परापेक्षया संबन्धस्य

'प्रमाणमविसंवादि ज्ञानम्' (प्रमाणवार्तिक १·३) इत्यत्रापि 'यत् प्रमाणमिति लोके प्रसिद्ध, तदविसंवादि ज्ञानमेवेति विज्ञेयम्' इति तात्पर्यार्थं । काव्येऽपि एषैव शैली । यथा—'इयं गेहे लक्ष्मीः' (पृ. ४१२-१३) इत्यादि ।

एतदेव द्रढयितुं निदर्शयति—**त्वक् तारवी निवसनमिति ।**

**संरम्भ** इति । अत्र करिणां कीटव्यपदेशेन तिरस्कारः, तोयदानां च शकलशब्दाभिधानेनानादरः । सर्वस्येति । यस्य कस्यचित्तुच्छतरप्रायस्येति अवहेला । जातेश्च मात्रशब्दविशिष्टत्वेनावलेपः हेवाकस्य लेशशब्दाभिधानेनाल्पताप्रतिपत्तिरित्येतत् सावधानतया कविनोपनिबद्धम् । असंरब्धवानित्यत्र त्वविमृष्टविधेयांशत्व प्रामादिकं तच्चानन्तरमेव दर्शितम् ।

पुनरविमृष्टविधेयांशत्वमेवाह—**अत्र योऽसाविति ।**

1. I °नुवाद　2. E adds तथा before प्रमाण°.　3. E adds एव.
4. D drops from एतदेव to °नमिति.　5. D adds योसाविति.

नित्यत्वात्। अत एवाहुः—(27) 'यत्तदोर्नित्यमभिसंबन्धः' ( ) इति। स चायमनयोरुपक्रमो द्विविधः—शाब्दश्चार्थश्चेति। तत्रोभयोरुपादाने सति शाब्दः। यथा—

यदुवाच न तन्मिथ्या यद् ददौ न जहार तत्॥३५४॥ [रघु० १७.४२]

यथा च—

स दुर्मतिः श्रेयसि यस्य नादरः
स पूज्यकर्मा सुहृदां शृणोति यः।३५५। इति। [ ]

एकतरस्योपादाने सत्यार्थस्तादितरस्यार्थसामर्थ्येनाक्षेपात्। तत्र तदः केवलस्योपादाने आर्थः प्रसिद्धानुभूतप्रक्रान्तविषयतया त्रिविधः। तत्र प्रसिद्धार्थविषयो यथा—'द्वयं गतम्' (पृष्ठ २१०) इत्यादि। अनुभूतविषयो यथा—'ते लोचने प्रतिदिशं विधुरे क्षिपन्ती' (पृ० ८२-८३) इति। प्रक्रान्तविषयो यथा—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः॥ ३५६॥
[रघु० १७.४७]

यदः पुनरुत्तरवाक्यार्थगतत्वेनैवोपात्तस्यार्थः संबन्धः संभवति, पूर्ववाक्यगतस्य तच्छब्दस्यार्थादाक्षेपात्। यथा—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः॥ ३५७॥

प्रागुपात्तस्य तु यच्छब्दस्य तच्छब्दोपादानं विना साकाङ्क्षतैव। यथात्रैव श्लोके आद्यपादयोर्विपर्यये।

क्वचिदनुपात्तमपि द्वयं सामर्थ्याद् गम्यते। यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।

---

**ये नाम केचिदिति।** नामशब्दोऽक्षमायाम्। यदुक्तम्—
(79) नाम कुत्साप्रश्नविषादामर्षप्रीतिसंख्यानृतानयसंभावनासु। [ ]

उत्पत्स्यते तु मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ३५८ ॥
[ मालतीमाधव १.८ ]

अत्र स कोऽप्युत्पत्स्यते यं प्रति यत्नो मे सफलो भविष्यतीत्युभयोरपि अर्थादाक्षेपः ।

एवं च स्थिते तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम् । न चासावित्यस्य तच्छब्दार्थत्वं युक्तम् । यथा—

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥ ३५९ ॥
[ हनुमन्० ६.३५ ]

अत्र हि न तच्छब्दार्थप्रतीतिः । प्रतीतौ वा—

यस्य प्रकोपशिखिना परिदीपितोऽभू-
दुत्फुल्लकिंशुकतरुप्रतिमो मनोभूः ।
योऽसौ जगत्त्रयलयस्थितिसर्गहेतुः
पायात् स वः शशिकलाकलितावतंसः ॥ ३६० ॥ [ ]

अत्र स इति पौनरुक्त्यं स्यात् ।

---

ये केचिदिह प्रबन्धे देशे काले वास्माकमवज्ञां कुर्वन्ति, ते किमपि स्वल्पं न किञ्चिल्लोकोत्तरं वा जानन्ति, तान् प्रति नैष प्रकरणनिर्माणविषयो यत्नः, तेषां स्तोकदर्शित्वात्[1] । लोकोत्तरं यज्जानन्तीति व्याख्यातं तत्तेषामुपहासाय । कान् प्रति तर्हीत्याह—उत्पत्स्यते त्विति । सारेतरविभागज्ञ उत्पत्स्यते कश्चिदिति सम्भाव्यते ।

**एवमिति** । तथा हि—सर्वेषामेव तावत् समासानां प्रायेण विशेषण-विशेष्याभिधायिपदोपरचितशरीरत्वं नाम सामान्यं लक्षणमाचक्षते । इतरथा तेषां समर्थतानुपपत्तेः । स च विशेषणविशेष्यभावो द्विधैव संभवति—समानाधिकरणो व्यधिकरणश्चेति । तत्राद्यः कर्मधारयस्य विषयः । यत्र तु द्वे बहूनि वा [2]पदान्यन्यस्य पदस्यार्थे विशेषणभावं भजन्ते सा बहुव्रीहेः सरणिः । तत्रैव

---

1. E °दर्शितत्वात्.  2. A, B drop पदान्यन्यस्य.

यदा संख्यायाः प्रतिषेधस्य च विशेषणभावो भवेत् तदा द्विगोर्नञ्समासस्य च गोचरः । द्वितीयः प्रकारः कारकाणां संबन्धस्य च विशेषणत्वाद् बहुविधः स तत्पुरुषस्य पन्थाः । तत्रापि यदाऽव्ययार्थस्य विशेष्यता स्यात् तदाव्ययीभावस्य परामर्शः । तदेवं समासानां विशेषणविशेष्योभयांशसंस्पर्शित्वेऽपि यदा विशेषणांशः स्वाश्रयोत्कर्षाधानमुखेन वाक्यार्थचमत्कारकारणतया प्राधान्येन विवक्षितो विधेयधुरामधिरोहेदितरस्त्वनूद्यमानकल्पतया न्यग्भावमिव भजेत् तदासौ न वृत्तेर्विषयो भवितुमर्हति । तस्यां हि स प्रधानेतरभावस्तयोरस्तमियात् । तच्चैतद्विशेषणमेकमनेकं वास्तु नानयोर्विशेषः कश्चित् । ननु च विशेषणत्वमवच्छेदकत्वाद् गुणभावो विधेयत्वं च विवक्षितत्वात् प्राधान्यं तत् कथं तयोर्भावाभावयोरिवान्योन्यविरोधादेकत्र समावेश उपपद्यते येनैकत्र नियमेन समासो निषिध्येतान्यत्र च विकल्प्येत । नैष दोषः । विरोधस्योभयवस्तुनिष्ठत्वात् शीतोष्णादिवत् । न चेह वस्तुत्वमुभयोः संभवति । एकस्यैव वास्तवत्वादन्यस्य वैवक्षिकत्वेन विपर्ययात् । न च वस्त्ववस्तुनोर्विरोधः । न हि सत्यहस्तिनः कल्पनाकेसरिणश्च कश्चिदन्योन्यं विरोधमवगच्छति । फलभेदस्त्वनयोर्निर्विवाद एव । एकस्य हि सकलजगद्रम्यः शाब्दिकैकविषयः पदार्थसंबन्धमात्रम् । अपरस्य पुनः कतिपयसहृदयसंवेदनीयः सत्कवीनामेव गोचरो वाक्यार्थचमत्कारनिदानम् इति ।

अत्र क्रमेणोदाहरणानि । तत्र कर्मधारये यथा—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ३५५ ॥

[ वेणी० १·३ ]

अत्र विगलितकबरीभारत्वमलसलसद्बाहुत्वं चासवपुषोर्विशेषणे रतेरुद्दीपनविभावतापादनेन वाक्यार्थस्य कामपि कमनीयतामावहत इति प्राधान्येन विवक्षितत्वान्न ताभ्यां सह समासं कविना न्यग्भावं गमिते । यथा चात्रैव तत्कालकान्तिद्विगुणितसुरतप्रीतित्वं हेतुभावगर्भं विशेषणं शौरेरुचिताचरणलक्षणमतिशयमादधद् विधेयतया प्राधान्येन विवक्षितमिति न तेन सह समासे निमीलितम् ।

(80) पदमेकमनेकं वा यद्विधेयार्थतां गतम् ।
न तत् समासमन्येन न चाप्यन्योन्यमर्हति ॥ [ व्यक्तिविवेक २·११ ]

1. E drops च. 2 A, B, C, D भजते. 3. A, B drops स.
4 A, B निषिध्येत C निषिध्यत. 5. A, B, C रुचिराचरण?.

तत्रैकमुदाहृतमेव । अनेकं यथा—

अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥ ३५६ ॥

[ रघु० ६·३२ ]

यथा च—

विद्वान् दारसखः पर परिणतो नीवारमुष्टिपचः
सत्यज्ञाननिधिर्दधत् प्रहरणं होमार्जुनीहेतुतः ।
रे दुःक्षत्रिय कि त्वया मम पिता शान्तं मया पुत्रवान्
नीतः कीर्त्यवशेषतां तदिह ते धिक् धिक् सहस्रं भुजान् ॥ ३५७ ॥

[ बालरामायण ४·३५ ]

यथा वा—

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रत.
प्रत्यक्ष कुरुबान्धवस्य मिषत· कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षस. ॥ ३५८ ॥ इति ।

[ वेणी० ४·१ ]

यथा च—

हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवानवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य पाणिरसि निर्भरगर्भखिन्न-
देवीप्रवासनपटोः करुणा कुतस्ते ॥ ३५९ ॥

[ उत्तरराम० २·१० ]

एवम्—

'अङ्गराज सेनापते राजवल्लभ द्रोणापहासिन्, रक्ष भीमाद् दुःशासनम्' ॥ ३६० ॥

[ वेणी० ३ (पृ. ८०) ]

इत्यादौ द्रष्टव्यम् । विध्यनुवादोऽपि विशेषणविशेष्यभावतुल्यफल इति । तथापि तद्वदेव समासाभावोऽवगन्तव्यः । यथा—'चापाचार्यस्त्रिपुरविजयी' (पृष्ठ २३२) इति । प्रत्युदाहरणं त्वेतेषामेव कृतसमासवैशसानां कल्पनीयम् । बहुव्रीहौ यथा—

1. E °विपटोः.  2. E °नात्व°.

येन स्थलीकृतो विन्ध्यो येनाचान्तः पयोनिधिः ।
वातापिस्तापितो येन स मुनिः श्रेयसेऽस्तु वः ॥ ३६१ ॥

[ ]

अत्रापि विन्ध्यादिविषयत्वेन स्थलीकरणादि यद्विशेषणत्रयेणात्तं तत्कर्तुर्मुनेरतिदुष्करकारितया कमपि तपःप्रभावप्रकर्षमवद्योतयति । विन्ध्यस्य प्रतिदिवसमुच्छ्रायाच्छादितार्कप्रकाशस्य जगदान्ध्यविधायित्वात् पयोनिधेरगाधत्वादपारत्वाच्च वातापेश्च मायापरिग्रहग्रस्तसमस्तलोकत्वात् ततस्तत्प्राधान्येन विवक्षितमिति न तैः सह समासे निर्जीवीकृतम् । प्रत्युदाहरणं यथा—

यः स्थलीकृतविन्ध्याद्रिराचान्तापारवारिधिः ।
यश्च तापितवातापिः स मुनिः श्रेयसेऽस्तु वः ॥ ३६२ ॥

[ ]

केचित् पुनरनयोरुदाहरणप्रत्युदाहरणयोरर्थस्योत्कर्षापकर्षप्रतीतिभेदो न कश्चिदुपलभ्यत इति मन्यन्ते । त इदं प्रष्टव्याः—'किं भोः, सर्वेष्वेव समासेषु इयं तदप्रतीतिरुत बहुव्रीहावेवायं शापः' इति । तत्र यदि सर्वेष्वेवेत्यभ्युपगमस्तर्हि सहृदयाः साक्षिणः पृच्छ्यन्ताम् । वयं तावन्महदन्तरमेतयोः प्रतीत्योः पश्यामः । अथ बहुव्रीहावेवेत्युच्यते, तदयुक्तम् । न हि प्रतीतिभेदहेतौ प्रतीतिसामर्थ्ये सत्यकस्मात् तदसंभवो भवितुं न्याय्यः । एवं हि क्षित्यादिमामग्र्यामविकलायामङ्कुरादिकार्योत्पादाभावाभ्युपगमोऽपि प्रसज्येतेति, सर्वत्रैवाय प्रतीतिभेदोऽभ्युपगन्तव्यो नैव वा कुत्रचित्, न पुनरिदमर्धजरतीयं लभ्यते । इह वा प्रतीतिवैचित्र्यं स्पष्टमवधारयतु मतिमान् । यत्र विध्यनुवादभावाभिधित्सयैव पदार्थानामुपनिबन्धस्तत्रापि हि प्रधानेतरभावविवक्षानिबन्धनौ समासस्य भावाभावावुपगतावेव । यथा—

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥ ३६३ ॥

[ विक्रमोर्वशीयम् ४.१९ ]

अत्र हि त्रैलोक्यालङ्कारभूतौ चराचरस्य जगतो जीवितायमानौ भगवन्तौ सूर्याचन्द्रमसौ प्रसिद्धावनूद्य यन्मातामहपितामहभावो विहितस्तत् तस्य पुरूरवसस्तौ लोकोत्तरोभयाभिजनजनितमभिमानं कामपि काष्ठामधिरोपयतो यतो विशेषणविशेष्यभावाभिहितेनैव नयेनात्राप्यनूद्यमानगतोऽतिशयो विधीयमानाकारसंक्रमणक्रमेण तत्संबन्धिनः पर्यवस्यति । तयोर्हि स्वरूपमात्रं भिन्नं फलं पुनः पारम्पर्येण वाक्यार्थोत्कर्षलक्षणमेकमेवेति प्राधान्येन विवक्षितत्वाच्च तौ ताभ्यां सह समासे म्लानिमानीतौ । इह च—

1. E तत्तत्क°. 2 D adds इति at the end of the verse. 3. E इभावा°. 4 A, B, C, D drop यतो.

जनको जनको यस्या या तातस्योर्मिला वधूः ।
आर्यस्य गृहिणी या च स्तुतिस्तस्याश्चपास्पदम् ॥ ३६४ ॥ इति ।

द्विगौ यथा—

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिकर्ता त्वमापदाम् ॥ ३६५ ॥

[ रघु० १·६० ]

इत्यत्र हि संख्यायाः संख्येयेष्वङ्गेषु निरवशेषताप्रतिपत्तिफलमतिशयमादधानायाः प्राधान्येन विवक्षा। तत एव हि तेषु द्विविधापत्प्रतीकारेण राज्ञः शिवोपपत्तिः परिपुष्यतीति तस्यास्तैः सह समासो न विहितः। यथा च—

निग्रहात् स्वसुराप्तानां वधाच्च धनदानुजः ।
रामेण निहितं मेने पदं दशसु मूर्धसु ॥ ३६६ ॥ [ रघु० १२·५२ ]

प्रत्युदाहरणमेनदेवोदाहरणं कृतसमासवैशसं द्रष्टव्यम्। नञ्समासविषयस्तु पूर्वमेव विनत्योपदर्शित उपपादितश्च (पृ. २४३—४४)। तत्पुरुषे कर्तुर्यथा—

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रह ।
तान्येवाहितशस्त्रघस्मरगुरुण्यस्त्राणि भास्वन्ति नो
यद् रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधन· ॥ ३६७ ॥

[ वेणी° ३·३३ ]

अत्र[1] रामेणेति रामस्य कर्तृभावेन[2] करणं प्रति यद्विशेषणत्वं तत्तस्य[3] दारुणतातिरेकात्मकमुत्कर्षं रौद्ररसपरिपोषपर्यवसायिनं समर्पयति। तस्य निरतिशयशौर्यशौण्डीर्यशालित्वेन घोरतरनैर्घृण्यनिघ्नतया च प्रसिद्धेः। तेन तत्प्राधान्याच्च विशेष्येण सह समासे गुणतां नीतं, कर्त्रादेः कारकस्यानेकस्य समशीर्षिकया विशेषणभावेन यदुपादानं स द्वन्द्वस्य विषय इति तत्स्वरूपनिरूपणावसर एव तस्य प्राधान्यमप्राधान्यं चाभिधास्यत इति न तदुदाहरणमिहोपदर्शितम्। नापि विध्यनुवादभावोदाहरणं तस्य विशेषणविशेष्यभावतुल्यफलतया तत्समानवृत्तान्तत्वोपपादनात्। प्रत्युदाहरण यथा—

यस्यावमत्य गुरुदत्तमिमं कुठारं
डिम्भोऽपि राम इति नाम पदस्य[4] हन्ता। ३६८। इति।

[ बालरामायण ४·५५ ]

कर्मणो यथा—

कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितै-
र्वनमसि गता यस्य प्रीत्या धृतापि तथाऽम्बया।

---

1. D drops अत्र. 2. E °भावत्वेन. 3. A, B omit तत्. 4. The reading in the Bālarāmāyaṇa is पदस्य हर्ता.

नवजलधरश्यामाः पश्यन् दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥ ३६९ ॥
[ ]

अत्र वनमिति यद् गमनक्रियायाः सीताविशेषणभूतायाः कर्मभावेन विशेषणं तत् तस्या रामप्रीतिप्रकर्षयुक्ताया अन्यकुलमहिलादुर्लभं दुष्करकारित्वं नामोत्कर्षमर्पयति वनवासदुःखस्यातिकष्टत्वात्। स चोत्कर्षो रामस्य रतेरुद्दीपनतां प्रतिपद्यत इति प्रधानं न गतेत्यनेन सह समासे कविना तिरस्कृतम्। यथा च—

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ॥ ३७० ॥
[रघु० ५.२४]

इत्यत्र गुर्वर्थमित्यर्थिनोऽर्थनक्रियामुखेन यद्विशेषणं तत्तस्य श्लाघ्यतातिशयाधानद्वारेण रघोरुत्साहपरिपोषे पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नार्थिना सह समासे सतामवमततां गमितमिति[1]। यथा च—

सवर्धितानां सुतनिर्विशेषम् ॥ ३७१ ॥ [रघु० ५.६] इति।

प्रत्युदाहरणं यथा—

प्रदक्षिणक्रियातीतनस्याः कोपमजीजनत् ॥ ३७२ ॥ [ ] इति।

तमभ्यनन्दत् प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः। ३७३।
[रघु० ३.६८] इति।

यथाकामार्चितार्थिनाम्। ३७४। [रघु० १.६८] इति।

यथाकालप्रबोधिनाम्। ३७५। [रघु० १.६] इति च।

करणस्य यथा—

आलोकमार्गं सहसा (पृ. १३३)। ३७६। [रघु० ७.६] इति।

अत्र करेणेति यत् केशहस्तकर्मकस्य संभावितस्य रोधनस्य करणभावेन विशेषण तत्तस्याः कस्याश्चिद् रभसौत्सुक्यप्रहर्षप्रकर्षरूपमतिशयं प्रतिपादयद् वधूवरयो रूपसंपदमसाधारणीमभिव्यनक्ति। यदवलोकनावधानव्यवधानाधायिनीं तावतीमपि कालकला विघ्नायमाना मन्यमानयानया सततस्वाधीनेनैकेन करकमलेन रोधोऽप्यस्य न कृतस्नेन तत् प्रधानमिति न रुद्ध इत्यनेन समासेऽस्तमुपनीतम्। यथा च—

कर्तुमक्षमया मानं प्राणेशः प्रत्यभेदि यत्।
सोऽय सखि स्वहस्तेन समाकृष्टस्त्वयानलः ॥ ३७७ ॥ इति।

1. E °वासकाम.. 2 The reading in A, B, C, E is सतामसतामवमता. 3. D drops इति यथा च. E drops only इति. 4. The Vyaktiviveka II (p. 200) reads °मजीजनः. 5. A drops व्यवधाना. B °नाव्यवधायिनीं. 6 A drops मान्यमानयान. B drops मन्यमान.

प्रत्युदाहरणं यथा—

धात्रा स्वहस्तलिखितानि ललाटपट्टे।
को वाक्षराणि परिमार्जयितुं समर्थः ॥ ३७८ ॥ इति।

संप्रदानस्य यथा—

पौलस्त्यः स्वयमेव याचत इति श्रुत्वा मनो मोदते
देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति।
तद् वाच्यः स दशाननो मम गिरा दत्ता द्विजेभ्यो मही
तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम् ॥ ३७९ ॥
[ बालरामायण २·२० ]

अत्र द्विजेभ्य इति निर्जयपूर्वकस्य भार्गवकर्तृकस्य महीदानस्य संप्रदानत्वेन यद्विशेषणं तन्मह्याः पात्रसात्करणेनोत्कर्षमादधद् भार्गवशौर्यातिरेकाभिव्यञ्जनेन दशाननस्य क्रोधोद्दीपनपर्यवसायि भवतीति प्राधान्येन विवक्षितत्वान्न दत्तेत्यनेन सह समासे कविना विच्छायीकृतम्। प्रत्युदाहरणमेतदेव पूर्ववद् द्रष्टव्यम्।

अपादानस्य यथा—

तातार्ज्जन्म वपुर्विलङ्घितवियत् क्रौर्यं कृतान्ताधिकं
शक्तिः कृत्स्नसुरासुरोग्रमशमनी नीता तथोच्चैः पदम्।
सर्वं वत्स तवातिशायि निधनं क्षुद्रात्तु यत् तापसात्
तेनाहं त्रपया शुचा च विवशः कष्टां दशामागतः ॥ ३८० ॥
[ ]

अत्र तातादिति क्षुद्रात्तु यत्तापसादिति च ये जन्मनिधनयोरपादानभावेन विशेषणे ते तातस्य पितामहपितामहतया महामुनिपुलस्त्यापत्यतया च क्षुद्रतापसस्य च गणनानर्हतया तयोरुत्कर्षापकर्षद्वारेण तद्वतः कुम्भकर्णस्य कामपि कुलीनता शौर्यापकर्षं चादधाने भ्रातुर्दशाननस्य शोकत्रपापावकेन्धनत्वभावेन परिणमत इति प्राधान्येन विवक्षिते न ताभ्यां सह समासे गुणतां गमिते। प्रत्युदाहरण यथा—अत्रैव 'क्रौर्यं कृतान्ताधिकम्' ॥ ३८१ ॥ [ ] इति। यथा च 'आसमुद्रक्षितीशानाम् ॥ ३८२ ॥ [ रघु० १·५ ] इति।

अधिकरणस्य यथा—

1. The Mss. read दत्वा . मही. The Bālarāmāyaṇa, the Vyaktiviveka, the Aucityavicāracarcā and the Hanuman-nāṭaka, however, read दत्ता द्विजेभ्यो मही; this reading is preferable in view of the commentary (ll. 10-13). 2. E अत्र हि. 3. A drops करणेनो. 4. A drops one पितामह. C पितामहस्य पिता°.

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ३८३ ॥

[ रघु० १·८ ]

अत्र शैशव इत्यादीनि यान्यभ्यस्तविद्यत्वादीनामधिकरणभावेन विशेषणानि तानि तेषामितरान्वयवैलक्षण्यलक्षणमतिशयमादधानानि रघूणां यथौचित्यं नयविनयादिसंपदमुन्मीलयन्तीति प्राधान्येन विवक्षितत्वाच्च तैः सह समासे समर्शीर्षिकां नीतानि । प्रत्युदाहरणं यथा—

रेणुरक्तविलिप्ताङ्गो विक्षतो व्रणभूषितः ।
कदा दुष्प्रत्यभिज्ञातो भवेयं रणभूषितः ॥ ३८४ ॥

[ ]

संबन्धस्य यथा—

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ॥ ३८५ ॥ इति ।

[ कुमार० ५·७१ ]

अत्र कपालिन इति यत् समागमप्रार्थनायाः शोचनीयतागतौ हेतुत्वेनोपात्तायाः संबन्धिद्वारेण विशेषणं तत् तस्यास्तत्र यत् सामर्थ्यं तत् सुतरामुपबृंहयति । तस्य सकला[1]मङ्गलनिलयतया निन्दिताचारनिरततया च दर्शनस्पर्शनसभाषणादीनामपि प्रतिषिद्धत्वात् । अतो विधेयार्थतया प्राधान्येन विवक्षितं न विशेष्येण सह समासे प्रत्यवरीकृतम्[2] । यथा च[3]—

'स्कन्दस्य मातुः पयसा रसज्ञः' ॥ ३८६ ॥ [ रघु० २·३६ ] इति ।
'कः क्षमेत तवानुजः' ॥ ३८७ ॥ [ ] इति ।

प्रत्युदाहरणं तु 'किं लोभेन विलङ्घितः' (पृ. २५९) इति दर्शितमेव । यथा च—

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्क इवार्पितः ॥ ३८८ ॥ इति ।

[ कुमार० २·४९ ]

अत्र हि हरेः सबन्धित्वेन चक्रस्य जयाशास्पदत्वमिति हरेरेव प्राधान्यविवक्षा न चक्रमात्रस्य । तच्च तस्य समासेऽस्तमुपगतम् । विभक्त्यन्वयव्यतिरेकानुविधायिनी हि विशेषणानां[4] विधेयतावगतिः । तत एव चैषां विशेष्ये प्रमाणान्तरसिद्धसोत्कर्षापकर्षाधायिना शाब्दे गुणभावेऽप्यार्थं प्राधान्यम् ।

1 E कल्या. 2. A, B, C, D प्रत्यवरीकृतम्. 3. A, B drop च. 4. A, B विषयतत्त्वगतिः.

विशेष्याणां च छान्दे प्राधान्येऽप्यार्थो गुणभावोऽप्यनूद्यमानत्वात्, समासे च विभक्तिलोपात्कोत्कर्षापकर्षावगतिरिति न तन्निबन्धना रसाभिव्यक्तिरिति तदात्मनः काव्यस्येदमविमृष्टविधेयांशत्वं दोषतयोक्तमिति ।

अव्ययीभावे यथा—

सा दयितस्य समीपे नावस्थातुं न चलितुमुत्सहते ।
ह्रीसाध्वसरसविवशा स्पृशति दशां कामपि नवोढा ॥ ३८९ ॥ इति ।
[ ]

अत्र दयितस्येति संबन्धितया यत् समीपस्य विशेषणं तत्[1] तस्य सु[2]कृतशतलभ्यतालक्षणमुत्कर्षमादधद् रतेरुद्दीपने पर्यवस्यतीति प्राधान्येन विवक्षितत्वांन्नोपदयितमितिवत् समीपार्थेनाव्ययेन सह समासेऽवसादं गमितम् । प्रत्युदाहरणं तु 'मध्येव्योम' (पृ. २४३)–इत्यादि प्रदर्शितमेव । अनेनैव न्यायेन कृत्तद्धितवृत्त्योरपि प्रतिषेधोऽवगन्तव्यः । तत्राप्युक्तक्रमेण प्राधान्येतरभावविवक्षाविशेषात् । तयोरुदाहरणं यथा—

य सर्वं कषति खलो बिभर्ति यः कुक्षिमेव सत्यतिथौ ।
यस्तु विधु तुदति सदा शीर्षच्छेदं त्रयोऽपि तेऽर्हन्ति ॥ ३९० ॥ इति ।
[ ]

अत्र सर्वादीनां कषणादिषु कर्मभावेन विशेषणतयोपात्तानामुत्कर्षाधायितया प्राधान्येन विवक्षितत्वान्न तैः सह वृत्तौ न्यग्भावो विहितः । सर्वार्थस्य भुवनाभयदानदी[4]क्षाबद्धकक्षाणां बोधिसत्त्वानामपि चरितस्य तदन्तःपातित्वात् । ख[5]लाः खलु दम्भादिदोषारो[6]पणेन तदपि तेषां कषन्त्येव । कायोपलक्षणस्य कुक्षेः कायस्य सर्वाशुचिनिधानत्वाद् विनश्वरत्वाच्च । विधोश्च सकलजगदानन्दहेतुत्वात् कषणादिकर्तृष्वकार्यकारितयापराधातिरेकलक्षणमुत्कर्षमादधतां प्राधान्येन विवक्षा । शीर्षच्छेदस्य च शारीरेषु निग्रहेषु तदतिरिक्तस्यान्यस्यासंभवात् । यथा च—'रामोऽस्मि सर्वं सहे' (पृ० ७१, पङ्क्ति १) इति । उचितकारित्वं प्रति किमुच्यते रामभद्रस्य । दशरथस्य हि प्रसूतिरसाविति च । प्रत्ययोत्पत्तौ पुनर्न्यग्भूतसर्वादिकर्मभावः कषणादिषु कर्मांश एवोन्मग्नतया प्रकाशेत न कर्मांशस्तत्रैव प्रत्ययोत्पत्तेः । वाक्ये तु यद्यपि शब्दवृत्तेन क्रियायाः प्रधानभावेन प्रतीतिः, तथापि तत्रान्यो विवक्षाकृतः साधनानामपि स प्रतीयत एव । न चैकस्मिन्नेव वाक्ये द्वयोः साध्यसाधनयोर्युगपत्प्रधानभावोऽनुपपन्न इति शक्यं वक्तुम् । शब्दार्थसामर्थ्यविवक्षाकृतानां

1. E drops न. 2. A drops सु. 3. D °मुत्कर्षाभिधा°. 4. A °कक्षाबद्धकक्षाणां. C, E कक्षाबद्धकक्षायाणां (? °कक्ष्याणां). 5. E drops खलाः. 6. B रोपणन. C °रोरोणने. A, D °रोपेण.

त्रयाणामप्येकस्यैव विवक्षाकृतस्य प्राधान्यस्य बलीयस्तया तयोः समशीर्षिकाभावात् । तदिदमत्र तात्पर्यम् । यत् कथञ्चिदपि प्रधानतया विवक्षितं न तन्नियमेनेतरेण सह समासमर्हतीति । इतरच्च विशेष्यमन्यद्वास्तु न तत्र नियमः, तेन द्वन्द्वपदानां सरूपाणां च पदार्थानामर्थस्यान्योन्यं विशेषणविशेष्यभावाभावेऽपि यदा प्रत्येकं क्रियाभिसम्बन्धोपगमलक्षणं प्राधान्यं विवक्ष्येत तदा तेषामपि समास एकशेषश्च नेष्यत एव । यथा—

किमञ्जनेनायतलोचनाया हारेण किं पीनपयोधरायाः ।
पर्याप्तमेतन्ननु मण्डनं ते रूपं च कान्तिश्च विदग्धता च ॥ ३९१ ॥ [ ]

अत्र रूपादीनां प्रत्येकं मण्डनक्रियाभिसम्बन्धकृतं प्राधान्यं रत्युद्दीपनपर्यवसायि विवक्षितमिति न तत् तेषां समासेऽवसादितम् । यथा । च—

यान्त्या मुहुर्वलितकन्धरमाननं तद्-
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ ३९२ ॥ इति ।

[ मालतीमाधव १.३२]

एकशेषे यथा—

प्रातर्विकत्थारूढौ पृच्छन्तौ त्वामितस्ततः ।
*कश्च कश्च स कर्णारिः स च क्रूरो वृकोदरः ॥३९३॥ इति । [ वेणी० ५.२५]

प्रत्युदाहरणमेतदेव कृतैकशेषमवगन्तव्यम् ।

यत्र पुनरेष प्रधानेतरभावो न विवक्षितः स्वरूपमात्रप्रतिपत्तिफलश्च विशेषणविशेष्यभावस्तत्र समासासमासयोः कामचारः । यथा—

स्तनयुगमश्रुस्नातं समीपतरवर्तिहृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ३९४ ॥ इति ।

[ कादम्बरी श्लो. २१ (पृ २६)]

अत्र भवत इति रिपुस्त्रीणामिति च रिपुस्त्रीणां स्तनयुगस्य च संबन्धित्वेन यद्विशेषणं न तत्स्तेषामुत्कर्षयोगः कश्चिद्विवक्षितः, अपि तु तत्संबन्धप्रतीतिमात्रं तच्च व्रतमिव भवदरिवधूस्तनद्वयमित्यतः समासादपि तुल्यमेव । यथा चात्रैव रिपुस्त्रीणामिति रिपुसंबन्धमात्रप्रतीतिः स्त्रीणामिति ।

(81) विनोत्कर्षापकर्षाभ्यां स्वदन्तेऽर्था न जातुचित् ।
तदर्थमेव कवयोऽलङ्कारान् पर्युपासते ॥ [ ]

1 E सद्रूपाणा. 2. D, E पदानामर्थ°. 3 E °न्योन्यवि. 4. D तथा.

* The Veṇī reads after the 1st line
सर्वे—कश्च कश्च ।
सूतः—स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥

5 E °त्वे य°

तौ विधेयानुवाद्यत्वविवक्षैकनिबन्धनौ ।
सा समासेऽस्तमायातीत्यसकृत् प्रतिपादितम् ॥
अत एव हि वैदर्भी रीतिरेकैव शस्यते ।
यतः समाससंस्पर्शस्तत्र नैवोपपद्यते ॥
संबन्धमात्रमर्थानां समासो ह्यवबोधयेत् ।
नोत्कर्षमपकर्षं वा—

यथा—

ऊर्ध्वाक्षितापगलितेन्दुसुधालवाक्त-
जीवत्कपालचयमुक्तमहाट्टहासम् ।
सत्रस्तमुग्धगिरिजावलिताङ्गसंक्र[1]-
हृष्टं वपुर्जयति हारि पिनाकपाणेः ॥ ३९५ ॥ इति[2] । [　　]

वाक्यात्तूभयमप्यदः ॥

[व्यक्तिविवेक २·१५-१७]

यथा— न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसबलं जीवत्यहो रावणः ।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ ३९६ ॥ इति ।

[हनुमन्नाटक अं. १४·६ ×]

तथा हि—**मम अरय इति** बहुवचनेन शत्रु[3]शत्रुमद्भावो ममानुचित इति संबन्धानौचित्यं [तेन] क्रोधविभावो व्यज्यते । तपो विद्यते यस्येति पौरुषकथाहीनत्वं तद्धितेन मत्वर्थीयेनाभिव्यक्तम् । तत्रापिशब्देन निपातसमुदायेन तापसस्य सतः शत्रुताया अत्यन्तासंभाव्यमानत्वमभिव्यक्तम् । मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता तस्यां च स कर्ता । अपिशब्देन मानुषमात्रकः । अत्रैवेति मदधिष्ठितो देशोऽधिकरणम् । निःशेषेण हन्यमानतया राक्षसबलं च कर्मेति । तदिदमसंभाव्यमुपनतमिति पुरुषकारासंपत्तिर्ध्वन्यते । रावण इति येन इन्द्रपुरविमर्दनादि किं किं न कृतमिति । धिग्धिगिति निपातेन शक्रजित-मित्युपपदसमासेन सह कृता च शक्रं जितवानित्याख्यायिकेत्यमिति [5]व्यज्यते । स्वर्गेत्यादिसमासस्य स्वपौरुषानुस्मरणं प्रति व्यञ्जकत्वम् । ग्रामटिकेति स्वार्थिक-तद्धितप्रयोगेण स्त्रीप्रत्ययसहितेना[6]बहुमानास्पदत्वं व्यज्यते । विलुण्ठनशब्दे विशब्द-स्योपसर्गस्य निर्दयावस्कन्दव्यञ्जकत्वम् । वृथाशब्देन स्वात्मपौरुषनिन्दा व्यज्यते ।

1. A drops सङ्ग. 2. A, B, C, D drop इति. × The text of this verse agrees with that of the Dhvanyāloka. The Hanumannāṭaka, however, reads it differently. 3. A drops one शत्रु. 4. E स्त्रौ°. 5 E drops व्यज्यते. 6. E °नास्य ब°.

भुजैरिति बहुवचनेन प्रत्युत भारमात्रमेतदिति व्यज्यत इति ।

(82) किन्तु प्रवृत्तिरेतस्य रसाभिव्यक्त्यपेक्षया ।
शान्तशृङ्गारकरुणान्तरेण प्रशस्यते ॥
यतः समासो वृत्तं च वृत्तयः काकवस्तथा ।
वाचिकाभिनयात्मत्वाद् रसाभिव्यक्तिहेतवः ॥
स चार्थान्तावधिः कार्यो नाधिको गद्यतामितः ।
गद्ये हि वृत्तवैकल्यान्न्यूना तद्व्यक्तिहेतुता ॥
[ अन्तरश्लोकाः, व्यक्तिविवेक २.१८-२० ]

यथानन्तरोक्त उदाहरणे ।

(83) तस्याभिन्न पदार्थानां संबन्धश्चेत् परस्परम् ।
न विच्छेदोऽन्तरा कार्यो रसभङ्गकरो हि सः ॥ [ व्यक्तिविवेक २.२१ ]

यथा—

मात्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्त्वक्चन्दन ॥ ३९७ ॥ इति ।

[ ]

अत्र हि 'क्षुण्णस्रवच्चन्दनः' इति युक्तः पाठः ।

विधेयत्वं चैतत् प्राधान्योपलक्षणमव्यभिचारात् । ततश्च प्रधानाविमर्शोऽपि दोषतयावगन्तव्यः । यथा—

स्नेहं समापिबति कज्जलमादधाति सर्वान् गुणान् दहति पात्रमधःकरोति ।
योऽयं कृशानुकणसंचयसंभृतात्मा दीपः प्रकाशयति तत् तमसो महत्त्वम् ॥३९८॥

[ ]

अत्र हि प्रकाशनक्रियाया एव प्राधान्यविवक्षा नान्यासामिति तासां तत्समशीर्षिकया निर्देशो दोष एव । स हि तत्र शत्रादिभिरेव वक्तुं न्याय्यो नाख्यातेन । यथा—

बिभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वीं
कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम् ।
आधेयादन्धकारे रतिमतिशयिनीमावहन् वीक्षणानां
बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः ॥ ३९९ ॥
[ सूर्यशतक १५ ]

इत्यादौ ।

सर्वासां पुनः प्राधान्यविवक्षाया नाख्यातवाच्यत्वं दोषः । यथा—

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
द्वारात्त्रस्यति चित्रकेलिसदसो वेषं विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले
संकल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा ॥ ४०० ॥
[ बालरामायण ५.१८ ]

अथ —

योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥ ३६१ ॥
[ ]

इत्यादौ इदमदःप्रभृतयः शब्दास्तच्छब्दार्थमभिदधतीत्युच्यते। तर्हि यथादर्शनं व्यवहितानामेवोपादानं युज्यते। अव्यवहितत्वे हि प्रत्युत तदितराकाङ्क्षा भवत्येव। यथा—

'यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः' ।३६२। (सुभाषितावलौ श्रीहर्षचौरयोः) इत्यत्र।
'सोऽयं वटः श्याम इति प्रसिद्धः
त्वया पुरस्तादुपयाचितो यः ।' (रघु० १३.५३)

इत्यादौ च। अथ —

'स्मृतिभूः स्मृतिभूर्विहितो येनासौ रक्षता( त् ) क्षताद् युष्मान्' ।३६३।
[ ]

इत्यादावव्यहितत्वेऽपि दृश्यते।

तर्हि, अत्रैव भिन्नविभक्तिकानां सोऽस्त्वित्यलम्। यथा वा—

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरुः
माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥ ३६४ ॥
[ उदात्तराघवे ]

अत्रार्यस्येति तातस्येति च वाच्यम्। न त्वनयोः समासे गुणीभावः कार्यः। एवं समासान्तरेष्वप्युदाहार्यम्।

विरुद्धबुद्धिकृत्त्वं पदस्य यथा —

(84) यत्रैककर्तृकानेका प्राधान्येतरभाक् क्रिया ।
तत्राख्यातेन वाच्याद्या शत्राद्यैरपरा पुनः ॥ [ व्यक्तिविवेक २.२२ ]

इत्यन्तरश्लोक ।

अयं च समासासमासविषयः सूक्तरत्नपरीक्षाव्यसनैकरसिकतया पदवाक्यविवेकानवधारणेन प्रदर्शितोऽपि सहृदयैः स्वयमेव तद्विवेकेन परामर्शनीयः ॥

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद् वः सोऽम्बिकारमणः ॥ ३६५ ॥

अत्राम्बिकाया गोर्या रमण इति विवक्षितं मातृरमण इति तु विरुद्धां धियमुत्पादयति । तथा—

सहस्राक्षैरङ्गैर्नभसितरि नीलोत्पलमयी-
मिवात्मानं मालामुपनयति पत्यौ दिविषदाम् ।
जिघृक्षौ च क्रीडारभसिनि कुमारे सहगणै-
र्हसन् वो भद्राणि द्रढयतु मृडानीपरिवृढः ॥ ३६६ ॥
[ ]

अत्र मृडानीपरिवृढ इति मृडान्याः पत्यन्तरे प्रतीतिं करोति ।
तथा[1]—

चिरकालपरिप्राप्तिलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥ ३६७ ॥
[ ]

अत्र कण्ठग्रहमिति वाच्यम् ।
वाक्यस्य यथा—

अनुत्तमानुभावस्य परैरपिहितौजसः ।
अकार्यसुहृदोऽस्माकमपूर्वास्तव कीर्तयः ॥ ३६८ ॥
[ ]

अत्रापकृष्टस्छादितमकार्येषु मित्रम् । अः पूर्वो यासां ता अकीर्तय इति विरुद्धा प्रतीतिः । क्वचिद् गुणो यथा—

अभिधाय तदा तदप्रियं शिशुपालो[2]ऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥ ३६९ ॥
[ शिशुपाल० १६.२ ]

अत्रा[3]नुशयमिति पश्चात्तापं कोपं च । अभिमना इति प्रसन्नमना निर्भयचित्तश्च । माननामिति पूजां निबर्हणं च । अत्र विपरीतार्थकल्पनाद्

1 I drops तथा. 2 P शिशुपाल blotted out and a lacuna left.
3. P, L drop अत्र.

विरुद्धत्वेऽपि सन्ध्यर्थविग्रहार्थयोः स्फुटमित्यार्थत्वेनाभिधानाद् गुणत्वम् ।

अथार्थदोषाः —

**९१) कष्टापुष्टव्याहतग्राम्याश्लीलसाकाङ्क्षसन्दिग्धाक्रमपुनरुक्तसहचरभिन्नविरुद्धव्यङ्ग्यप्रसिद्धिविद्याविरुद्धत्यक्तपुनरात्तपरिवृत्तनियमानियमविशेषसामान्यविध्यनुवादत्वान्यर्थस्य ॥ ७ ॥**

दोषा[1] इति वर्तते[2] । कष्टावगम्यत्वात् कष्टत्वमर्थस्य । यथा—

सदा मध्ये यासाममृतरसनिष्यन्दसरसं
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचयाः[3] केन महतां
महाकाव्यव्योम्नि स्फुरितरुचिरा यान्तु रुचयः ॥ ३७० ॥

यासां कविरुचीनां प्रतिभारूपाणां प्रभाणां मध्ये बहुमार्गा सुकुमारविचित्रमध्यमात्मकत्रिमार्गा सरस्वती भारती परिमलं चमत्कारं वहति, ताः कविरुचयो महाकाव्यव्योम्नि सर्गबन्धलक्षणे परिचयमागताः कथमभिनेयकाव्यवत् प्रसादं यान्तु । तथा यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ।

प्रकृतानुपयोगोऽपुष्टार्थत्वम् । यथा—

तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् ।
फालेन लङ्घयामास हनूमानेष सागरम् ॥ ३७१ ॥

अत्र तमालश्यामलत्वादयोऽनुपादानेऽपि[4] प्रकृतमर्थं न बाधन्त इत्यपुष्टाः । यथा वानुप्रासे—

भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे ॥ ३७२ ॥

---

1. P, L दोष. 2. L विद्यते. 3. P, L घनपरिचया. The KP (VII. 256) reads घनपरिचिताः. 4. L तमालत्वानुपादाने. I तमालश्यामलत्वादयो.

अनणुरणन्मणिमेखलमविरतसिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥ ३७३ ॥
[रुद्रट २. (श्लो.) २२-२३]

अत्र वर्णसावर्ण्यमात्रं न पुनर्वाच्यवैचित्र्यकणिका काचिदस्तीत्यपुष्टार्थत्वम् ।

पूर्वापरव्याघातो व्याहतत्वम् । यथा—

जहि शत्रुकुलं कृत्स्नं जय विश्वंभरामिमाम् ।
न च ते कोऽपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥ ३७४ ॥
[काव्यादर्श ३.१३२]

अत्र शत्रुवधोऽविद्वेष्यभावेन व्याहतः ।

अवैदग्ध्यं ग्राम्यत्वम् । यथा—

स्वपिति यावदयं निकटो जनः स्वपिमि तावदहं किमपैति ते ।
इति निगद्य शनैरनुमेखलं मम करं स्वकरेण रुरोध सा ॥ ३७५ ॥
[ ]

व्रीडादिव्यञ्जकत्वमश्लीलत्वम् । यथा—

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न तथा पुनरुन्नतिः ॥ ३७६ ॥
[भामह १.५१]

एतद् वाक्यं खलेषु प्रयुज्यमानं सं[1]पसि प्रतीतिं जनयति । इहान्वयव्यतिरेकाभ्यामर्थस्यैवाश्लीलत्वं पूर्वत्र तु पदवाक्ययोरिति विवेकः ।

साकाङ्क्षत्वम् । यथा—

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥ ३७७ ॥
[महावीरचरित २.९]

स्वपितीति । निद्राति । स्वपिमीति कामये ।

1 I सर्फासि. शे is written over से.

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति । न हि परस्येत्यनेन संबन्धो योग्यः । यथा च—

गृहीतं येनासीः परिभवभयान्नोचितमपि
　प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्
　विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥ ३७८ ॥
[वेणी० ३.१९]

यत इति तत इत्यत्रार्थे । अत्र शस्त्रमोचनं हेतुमाकाङ्क्षति । यत्र त्वाकाङ्क्षा नास्ति तत्र न दोषः । यथा-

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रया प्रीतिमवाप लक्ष्मीः ॥ ३७९ ॥
[कुमार० १.४३]

अत्र रात्रौ पद्मस्य संकोचो, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते' इति हेतुं नापेक्षते ।

संशयहेतुत्वं सन्दिग्धत्वम् । यथा—

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
रम्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ ३८० ॥
[ भर्तृहरि : शृङ्गार० ३६ ]

अत्र प्रकरणाद्यभावे सन्देहः । शान्तशृङ्गारयोरन्यतराभिधाने तु निश्चयः ।

प्रधानस्यार्थस्य पूर्वं निर्देशः क्रमस्तदभावोऽक्रमत्वम् । यथा—

---

हेतुमाकाङ्क्षतीति । तेन निर्हेतुः पृथग् न वाच्यः साकाङ्क्ष एवान्तर्भावादिति ।

---

1. I येनाशी°.　2. E व चान्त°.

'तुरगमथवा मातङ्गं मे प्रयच्छ मदालसम्' । ३८१ ।

अत्र मातङ्गस्य प्राग् निर्देशो न्याय्यः । यदा तूदारसत्त्वो गुर्वादिर्बलाद् ग्राह्यमाणस्तुरगमित्यादि वक्ति तदा न दोषः ।

क्रमानुष्ठानाभावो वाक्रमत्वम् । यथा—

काराविऊण खउरं गामउडो मज्जिऊण जिमिऊण ।
नक्खत्तं तिहिवारे जोइसिअं पुच्छिउं चलिओ ॥ ३८२ ॥

[ ]

क्वचिदतिशयोक्तौ गुणः । यथा—

पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥ ३८३ ॥

[काव्यादर्श २.२८]

यत्तद्देशिनामनूद्देशिनां[1,2] च क्रमभ्रंशोऽक्रमत्वम् । यथा—

'कीर्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ' । ३८४ । इति ।

तत्र पदरचना विपरीतेति भग्नप्रक्रमत्वलक्षणो वाक्यस्यैव दोषो न वाक्यार्थस्येति ।

द्विरभिधानं पुनरुक्तम् । यथा—

प्रसाधितस्याथ मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत् ।
वपुष्यशेषेऽखिललोककान्ता सानन्यकाम्या ह्युरसीतरा तु । ३८५ ।

[शिशुपाल० ३.१२]

इत्युक्त्वैकार्थमेवाह—

कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ।
आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥ ३८६ ॥

[शिशुपाल० ३.१३]

यथा वा—'अश्रीयसंहतिमिरुद्धतमुद्धराभिः'[3] ॥ ३८७ ॥

1. I यत्र. L यत्र देशि°. 2. I °मनुद्देशिना. L मन्ददेशिनां. 3. P °तिनिरुद्धत°.

अत्राधीयेति समूहार्थायाः प्रकृतेः संहतेश्च पौनरुक्त्यम् । तथा—

छायामपास्य महतीमपि वर्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम् । ३८८ ।

[ शिशुपाल० ५.१४ ]

अत्र जनता इति तद्धितार्थस्य बहुवचनार्थस्य । तथा—

'पायात् स शीतकिरणाभरणो भवो वः' ॥ ३८९ ॥

अत्र विशेषणाद् विशेष्यप्रतिपत्तौ भव इत्यस्य । यत्र तु विशेषणान्न विशेष्यमात्रस्य प्रतीतिरपि तु तद्विशेषस्य । तत्र पौनरुक्त्यमेव नास्ति । यथा—

तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं किं मम धन्विनोऽन्ये ॥ ३९० ॥

[ कुमार० ३.१० ]

अत्र हरशब्दस्य । अथ यथात्र कुसुमायुधोऽपीत्यस्माद् विशेष्योपादानमन्तरेणाप्युभयार्थप्रतिपत्तिस्तद्वदत्रापि भविष्यति । नैवम् । सप्तम्युत्तमनिर्देशेनैवास्मदर्थस्य विशेष्यस्य प्रतिपादितत्वात् । एवं धनुर्ज्यादिपदेष्वपि विशेषप्रतिपत्तौ न पौनरुक्त्यम् । यदाह–(28) 'धनुर्ज्याशब्दे धनुःश्रुतिरारूढेः प्रतिपत्त्यै' ( ) इत्यादि । यथा—

'धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव' ॥ ३९१ ॥

अत्र धनुःशब्दादारूढेः प्रतिपत्तिः ।

दोलाविलासेषु विलासिनीनां कर्णावतंसाः कलयन्ति कम्पम् ॥ ३९२ ॥

[ ]

**धनुःशब्दादिति ।** अन्यथा ज्याकिणचिह्नेन दोष्णेत्युक्तेऽनवरतदृढाकर्षणाहितकिणमण्डितत्वं दोष्णो न प्रतीयते । वेष्ट्यमानेऽप्यनया ज्यया कृतकिणचिह्नत्वस्य संभवात् ।

1. I drops अत्र. 2. L drops from बहुवचनार्थस्य (line 5) to इत्यस्य. 3. I adds बहुवचनार्थस्य. 4. I विशेषस्य. 5. C प्रतीयत. D प्रतीयेत.

'लीलाचलच्छ्रवणकुण्डलमापतन्ति'। ३९३। [ ]

अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥ ३९४ ॥ [ ]

एषु कर्णश्रवणशिरःशब्देभ्यः संनिधानस्य प्रतिपत्तिः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ ३९५ ॥ [ ]

अत्र मुक्ताशब्दाच्छुद्धिप्रतीतिः ।

प्रायशः पुष्पमालेव कन्यका कं न लोभयेत् । ३९६ । [ ]

अत्र पुष्पशब्दादुत्कर्षप्रतीतिः ।

'त्यज करिकलभ प्रेमबन्धं करिण्याः'। ३९७। [ ]

अत्र करिशब्दात् तादृप्यावगतिः । यत्र तु न विशेषप्रतिपत्तिर्यथा—

'ज्याबन्धनिष्पन्दभुजेन यस्य'। ३९८। [रघु० ६.४०] इति ।

'अदादिन्द्राय कुण्डले'। ३९९। [ ] इति ।

'पाण्ड्योऽयमंसार्पितलम्बहारः'। ४००। [रघु० ६.६०] इति ।

'मालाकार इवारामः'। ४०१ । इति ।

'लब्धेषु वर्त्मसु सुखं कलभा प्रयान्ति । ४०२ । [ ] इति च ।

तत्र केवला एव ज्यादिशब्दाः । न च नितम्बकाञ्च्युष्ट्रकरभादिषु तथा प्रसङ्गः । तेषां कविभिरप्रयुक्तत्वात् । (29) संकेतव्यवहाराभ्यां हि शब्दार्थनिश्चयः । [ ] इति ।

**कर्णेति** । विन्यासनिर्वाहार्थं प्रतिनियतस्वदेशसंनिहितैराभरणैः प्रयोजनमिति तदर्थं प्रयुक्तेभ्य इत्यर्थः ।

**मुक्ताशब्दादिति** । उत्प्रेक्ष्यमाणस्य स्तनद्वयकर्तृकस्य हासस्य सातिशयधवलताप्रतिपत्तये साधकतमस्य हारस्य केवलमुक्तालतावेष्टितत्वप्रतीत्यर्थं प्रयुक्तत्वात् ।

**पुष्पशब्दादिति** । विदग्धजनमनोविलोभनक्षमकन्यारत्नोपमानभावेन मालाया उपादानादुत्कृष्टपुष्पग्रथितत्वावगमाय प्रयुक्तत्वादित्यर्थः ।

1 I प्राणेश्वरः. 2. I, L हसता. 3. I °शब्दत्वात्ताद्°. 4. A, B, C, D प्रयुक्तात्. 5 A, B, C, D प्रयुक्तादि°.

क्वचिद् गुणो यथा—

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
　दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संप्रीणिताः प्रणयिनो विभवैस्ततः किं
　कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ४०३ ॥
[भर्तृहरि : वैराग्य० ६७]

अत्र हि निर्वेदपारवश्येन वक्तुरियमुक्तिः प्रत्युत शान्तरसपोषाय । यदाह—

(30) वक्ता हर्षभयादिभिराक्षिप्तमनास्तथा स्तुवन्निन्दन् ।
　यत् पदमसकृद् ब्रूते तत् पुनरुक्तं न दोषाय ॥ इति
[रुद्रट ६.२९]

उचितसहचारिभेदो भिन्नसहचरत्वम् । यथा—

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता ॥ ४०४ ॥
[　　　　]

अत्र श्रुतबुद्ध्यादिभिरुत्कृष्टैः सहचरैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ।

विरुद्धं व्यङ्ग्यं यस्य तद्भावो विरुद्धव्यङ्ग्यत्वम् । यथा—

लग्नं रागावृताङ्ग्या[1] (पृ. २११) । ४०५ । [सुभाषितावलौ २५१५, हर्षदत्तस्य] इति ।

अत्र विदितं तेऽस्त्वित्यनेन श्रीस्त्वस्मादपसरतीति विरुद्धं व्यज्यते । प्रसिद्ध्या[2] विद्याभिश्च विरुद्धत्वम् । तत्र प्रसिद्धिविरुद्धत्वं यथा—

इदं ते केनोक्तं कथय कमलातङ्कवदने
　यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाध्याक्रमणपरमास्त्रं स्मृतिभुवा
　तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥ ४०६ ॥
[　　　　]

1. L वृताङ्ग्येऽपि.　2. S 'सिद्धिविद्या'.

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ।

उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद् भवद्भिरिहेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनि[1]न्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥ ४०७॥ [ भट्टेन्दुराजस्य ]

इति । अत्र पादाघातेनाशोकस्य पुष्पोद्गम एव कविषु प्रसिद्धो नाङ्कुरोद्गमः यथा वानुप्रासे—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजान्ता-
नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात् स्यन्दनो वः ॥ ४०८ ॥
[ सूर्यशतक ७१ ]

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव कृता न पुराणादिषु तथा प्रतीता । कदाचिच्चक्रिणश्चक्रारप्रियत्वं संभाव्येताप्युत्तराणि तु न तथा संगच्छन्त इति प्रसिद्धिविरोधः ।

यथा वा उपमायाम्—

प्रभ्रामि काव्यशशिनं विततार्थरश्मिम् । ४०९ । [ ]

अत्र काव्यस्य शशिना, अर्थानां च रश्मिभिः साधर्म्यं न प्रसिद्धम् । तथा—

चकास्ति वदनस्यान्तः स्मितच्छाया विकासिनः[2] ।
उन्निद्रस्यारविन्दस्य मध्यगा चन्द्रिका यथा ॥ ४१० ॥
[ ]

अत्र मध्यगतचन्द्रिकयारविन्दस्योन्निद्रत्वमसंभवीति प्रसिद्धिविरुद्धत्वम् ।

1. P °नलिजन्यासो. 2. P 4, विकाशिनः.

कलाचतुर्वर्गशास्त्राणि विद्या । कलाश्च गीतनृत्तचित्रकर्मादिकाः ।

तत्र गीतविरुद्धत्वं यथा—

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम्[1] ।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः[2]
परिणतिमिति रात्रेर्मागधा माधवाय ॥ ४११ ॥

[ शिशुपाल० ११·१ ]

श्रुतिसमधिकमिति श्रुत्या समधिकं पञ्चश्रुतिकमित्यर्थः । पीडयन्त इति । श्रुतिह्रासेनाल्पीकुर्वन्त इत्यर्थः । भिन्नकीकृत्य षड्जमिति । भिन्नषड्जं कृत्वेत्यर्थः । प्रातःकाले भिन्नषड्जो गेय इत्याम्नायात् । अत्र भिन्नषड्जेन मागधी गीतिरुपनिबद्धा । तस्यां च पञ्चमस्य ऋषभवदसंभव एव । दूरे पुनः श्रुतिसमधिकत्वम् । यतो भिन्नषड्जस्येदं लक्षणम्——

(31) धांशस्तु धैवतन्यासः पञ्चमर्षभवर्जितः ।
षड्जोदीच्यवतीजातेर्भिन्नषड्ज उदाहृतः ॥ [ ]

**धांश** इति धैवतांश इत्यर्थः । षड्जोदीच्यवतीजातेरिति । जातयो ह्यष्टादश । तथा हि **मुनिः—**

(85) षाड्जी चैवार्षभी चैव धैवत्यथ निषादिनी ।
षड्जोदीच्यवती चैव तथा स्यात् षड्जकैशिकी ॥
स्यात् षड्जमध्यमा चैव षड्जग्रामसमाश्रयाः ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ॥
गान्धारी मध्यमा चैव गान्धारोदीच्यवा[3] तथा ।
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ॥

---

1. P षड्गं. In the lines that follow P has everywhere षड्ग for षड्ज. 2. P, S, I, L °रकाकि. As this makes no meaning we have taken this reading from the Śiśupālavadha, N. S. edition. 3. D °वी.

एवं कलान्तरेष्वप्युदाहार्यम् ।

चतुर्वर्गे धर्मशास्त्रविरुद्धत्वं यथा—

सततं स राजसूयैरीजे विप्रोऽश्वमेधैश्च ॥ ४१२ ॥ [ रुद्रट ११.६ ]

अत्र विप्र इति । क्षत्रियस्य हि तत्राधिकारः ।

अर्थशास्त्रविरुद्धत्वं यथा—

अहंकारेण जीयन्ते द्विषन्तः किं नयश्रिया ॥ ४१३ ॥ [ ]

द्विषज्जयस्य हि नयमूलत्वं स्थितं दण्डनीतौ ।

कामशास्त्रविरुद्धत्वं यथा—

तवोत्तरौष्ठे बिम्बोष्ठि दशनाङ्को विराजते ॥ ४१४ ॥ [

उत्तरौष्ठमन्तर्मुखं नयनान्तं च मुक्त्वा चुम्बनवद्दशनरदनस्थानानीति हि कामशास्त्रे स्थितम् ।

मोक्षशास्त्रविरुद्धत्वं यथा—

'देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसम्पदः' ॥ ४१५ ॥ [ ]

मध्यमोदीच्यवा[1] चैव नन्दयन्ती तथैव च ।
कार्मारवी[2] च विज्ञेया तथान्ध्री कैशिकी मता ॥
[ नाट्यशास्त्र २८ श्लो. ४२-४५ (नि. सा ) ]

इत्येतासां मध्याद् या षड्जोदीच्यवती जातिस्तस्या सकाशादित्यर्थ ।

**कलान्तरेष्वप्युदाहार्यमिति** । तत्र चित्रकलाविरोधो यथा—

कालिङ्ग लिखितमिद वयस्य पत्रं
पत्राङ्गैरपातितकोटिकण्टकाश्च[3] ॥ ४०१ ॥

'कालिङ्गं पतिताग्रकण्टकम्' इति[4] पत्त्रविदामाम्नायः । एव कलान्तरेष्वभ्यूह्यम् ।

**क्षत्रियस्य हीति** । तथा च स्मृति.—

(86) राजा राजसूयेन स्वाराज्यकामो यजेत । राजा सर्वतो विजीती
अश्वमेधेन यजेत ॥ [ ] इति ।

**देवताभक्तित इति** ।

(87) चतुर्विधा भजन्ते मा जनाः सुकृतिनः[5] सदा ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । [ भगवद्गीता ७.१६-१७ ]

1 D वी. 2 E °मी. 3. E °कण्टकाश्च 4. D adds हि. 5. सुकृतिनोऽर्जुन is the familiar reading

एतस्यार्थस्य मोक्षशास्त्रेऽस्थितत्वाद् विरुद्धत्वम् ।

त्यक्तपुनरात्तत्वं यथा—

'लग्नं रागावृताङ्ग्या (पृ० २११) । ४१६ । [ ] इति ।

अत्र विदितं तेऽस्त्वित्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः । क्वचिद् गुणः—

शीतांशोरमृतच्छटा यदि कराः कस्मान्मनो मे भृशं
संप्लुष्यन्त्यथ[1] कालकूटपटलीसंवासमं दूषिताः ।
किं प्राणान्न हरन्त्युत प्रियतमासंजल्पमन्त्राक्षरै-
रक्ष्यन्ते किमु मोहमेमि हहहा नो वेद्मि का मे गतिः ॥ ४१७ ॥
[ अभिनवगुप्तस्य ]

अत्र ससन्देहालङ्कारस्त्यक्त्वा त्यक्त्वा पुनरुपात्तो रसपरिपोषाय ।

परिवृत्तौ विनिमयितौ नियमानियमौ सामान्यविशेषौ विध्यनुवादौ च यत्र । तद्भावस्तत्त्वम् । तत्र परिवृत्तो नियमोऽनियमेन यथा—

यत्रानुल्लिखिताक्षमेव निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥४१८॥ [ ]

अत्रच्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता इति नियमे वाच्ये तस्याभास इत्यनियम उक्तः ।

परिवृत्तोऽनियमो नियमेन यथा—

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।

इत्युक्तनीत्या ज्ञानित्वेन[2] यका भक्तिः सा नात्र विवक्षिता । अपि त्वार्तत्वादिभिस्त्रिरूपा ।

अनुल्लिखिताक्षमिति । अनभिव्यक्ताकारम् ।

इति[3] ॥ आचार्यश्रीहेमचन्द्रविरचिते विवेके तृतीयोऽध्यायः ॥

1 I संश्लिष्यन्त्यथ. 2. E ज्ञानत्वेन. 3. I श्रीहेमचन्द्राचार्य°.

वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यमीक्ष्णं ।
स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥ ४१९ ॥*

अत्र शोण इत्यनियमे वाच्ये शोण एवेति नियम उक्तः ।

परिवृत्तं सामान्यं विशेषेण यथा—

कल्लोलवेल्लितदृषत्परुषप्रहारै-
रत्नान्यमूनि मकराकर मावमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ ४२० ॥

[भल्लट० ६२]

अत्र 'एकेन किं न विहितो भवतः स नाम' इति सामान्ये वाच्ये कौस्तुभेनेति विशेष उक्तः ।

परिवृत्तो विशेषः सामान्येन यथा—

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ ४२१ ॥

[विद्धशाल० ३.१]

अत्र ज्योत्स्नामिति विशेषे वाच्ये श्यामामिति सामान्यमुक्तम् ।

परिवृत्तो विधिरनुवादेन यथा—

अरे रामाहस्ताभरण मधुपश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥ ४२२ ॥

[ ]

अत्र विधौ वाच्ये विरहिप्राणदमनेति अनुवाद उक्तः ।

* This verse is found in the Bhojaprabandha at V. 230.

परिवृत्तोऽनुवादो विधिना यथा—

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशां
अकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिनां
अपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥ ४२३ ॥
[वेणी० ३.३४]

अत्र शयित इत्यनुवादे वाच्ये शेषे इति विधिरुक्तः । प्रयत्नेन परिबोध्यसे इति विधौ वाच्ये परिबोधित इत्युक्तमिति परिवृत्तविधित्वमपि[1] । अत्र चान्वर्थबलादेवाधिगतेः पदादिदोषाणां विशेषलक्षणं न [2]प्रणीतम् ।

अथापवादानाह —

९२) नानुकरणे ॥ ८ ॥

दोषा इत्यनुवर्तते । अनुकरणविषये निरर्थकादयः शब्दार्थदोषा न भवन्ति । उदाहरणं प्रागेव दर्शितम् ।

९३) वक्त्राद्यौचित्ये च ॥ ९ ॥

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना न दोषो गुणः । तथोदाहृतम् ।

९४) क्वचिद् गुणः ॥ १० ॥

वक्त्राद्यौचित्ये क्वचिद् गुण एव । तथैवोदाहृतम् ॥

इति । **आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञ-काव्यानुशासनवृत्तौ** दोषविवेचनस्तृतीयोऽध्यायः ॥

---

1. L °मिति. 2. P, L प्रतीतम्.

सगुणौ शब्दार्थौ काव्यमित्युक्तम्। गुणानां च रसोत्कर्षहेतुत्वं सामान्यलक्षणं प्रतिपादितम्। इदानीं तद्भेदानाह—

**९५) माधुर्यौजःप्रसादास्त्रयो गुणाः ॥ १ ॥**

त्रयो न तु दश पञ्च वा। लक्षणव्यभिचाराद्, उच्यमानगुणेष्वन्तर्भावाद्, दोषपरिहारेण स्वीकृतत्वाच्च। गुणा इति रसस्य गुणाः, शब्दार्थयोस्तु भक्त्या—इत्युक्तमेव।

**न तु दश पञ्च वेति।** अयं भावः—माधुर्यौजःप्रसादा एव गुणाः, ते च मुख्यवृत्त्या रसस्यैवेति प्राक् सामान्यगुणलक्षणे निर्णीतम्। ततश्चैते शब्दार्थाश्रयत्वेनान्ये च गुणा यत् कैश्चन प्रतिपाद्यन्ते तन्न युक्तमिति। तथा हि—

(88) 'ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः' दश इति **केचित्**। [काव्यालङ्कारसूत्र ३·१·४]

तत्र (89) 'अवगीतस्य हीनस्य वा वस्तुनः शब्दार्थसम्पदा यदुदात्तत्वं+ निषिञ्चन्ति कवयस्तदोजः' इति **भरतः**। [ ]

यथा—

गोमायवः शकुनयोऽत्र शुनां गणो²ऽत्र लुण्ठन्ति³ कीटकृमयः परितस्तथैते।
त्वं सम्पदं सकलसत्त्वकृतोपकारां नो दृष्टवान् यदपि तच्छव वञ्चितोऽसि ॥४०२॥
[ ]

(90) अनवगीतस्याहीनस्य वा वस्तुनः शब्दार्थयोरर्थसम्पदा यदनुदात्तत्वं निषिञ्चन्ति कवयस्तर्हि तदनोजः स्यादिति **मङ्गलः**। [ ]

1. D drops गुण.

\+ In the text of the नाट्यशास्त्र ओजः is described as follows

अविगीताविहीनोऽपि स्यादुदात्तावभावकः।
यत्र शब्दार्थसम्पत्तिस्तदोजः परिकीर्तितम् ॥

(C. S. S. XVII. 103)

समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम्।
सा तु स्वरैरुदारैश्च तदोजः परिकीर्त्यते ॥

(N. S. XVI. 104)

2 E गुणो. 3. E लुम्पन्ति.

यथा—

ये सन्तोषसुखप्रबुद्धमनसस्तेषां* न भिन्ना मुदो
येऽप्येते धनलोभसंकुलधियस्तेषां तु दूरे नृणाम् ।
धिक् तं कस्य कृते कृतः स विधिना तादृक्पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ ४०३ ॥
[ सुभाषितावली (१०२७); भर्तृहरिः वैराग्य० २९ ]

(91) कवीनामभिधेयं प्रति त्रयः पन्थानः । एते यदुत न्यूनमुत्कर्षन्ति, अधिकमपकर्षन्ति, यथार्थं वस्तु स्थापयन्ति, तत् कथमिवायं गुण इति दण्डी ।
[ ]

(92) तस्मात् संमास[1]भूयस्त्वमोजः । [ काव्यादर्श १·८० ]

तच्च गद्यविभूषणं प्रायेण, वृत्तवर्त्मन्यपि गौडास्तदाद्रियन्ते । प्रथममाख्यायिकादिषूपलभ्यते । द्वितीयं यथा—

दूरोद्दण्डतडित्करालतरलज्योतिश्छटाडम्बर-
स्फारस्फूर्जितदुर्जयाम्बुसचिवज्याघोषघूत्कारिणाम् ।
यस्यैकस्य शतानि पञ्च धनुषां दैत्याहवेषु व्यधु-
र्लोलीभावगभीरघोरमखिलब्रह्माण्डकोलाहलम् ॥ ४०४ ॥
[ ]

(93) रीतित्रयेऽप्योजसः साधारणत्वाद् गौडीय[2]निर्देशो न युक्तिमानिति वामनो मङ्गलश्च । तस्माद् 'गाढत्वमोजः'। [ काव्यालङ्कारसूत्र ३·१·५+ ]

यथा—

भस्मवर्म फणिनः पतिर्गवामस्थिपङ्क्तिरिति ते परिग्रहः ।
ईश इत्ययमनन्यचुम्बितश्चन्द्रचूड तदपि त्वयि ध्वनिः ॥ ४०५ ॥
[ ]

एवं रीत्यन्तरेऽपि । ओजसि हेत्वन्तरमवमृश्यतां, न पुनर्गाढत्वं, तद्धि शुद्धमोजसः प्रत्युत हानिहेतुः । यथा—

* The correct reading is तेषामभिन्नो मुदो. See सुभाषितावलि (B. S. S.), notes p. 33.

1. A, B समासे. 2. A, B, C, D गौडीया°.

+ गाढबन्धत्वमोजः । That is how the sūtra stands in the N. S. edition.

वज्रेणान्तर्भु वज्रिन् जहि बहु विशतं वासुके शेष घोणां
दन्तैर्दिग्दन्तिनोऽक्ष्णो विघटयत पुटानङ्गुलीर्हि त्रिशूलैः ।
दंष्ट्वन्यध्वं श्रवःस्थाः प्रलयजलमुचः कूर्म आकम्पयोर्वी
मैनाक क्षुद्रिवक्षस्तटमटतु रणे कुम्भकर्णोऽस्तनिद्रः ॥ ४०६ ॥
[ ]

तस्माच्च गाढत्वमोजः । अर्थगुणस्तु (94) 'अर्थस्य प्रौढिरोजः' (काव्यालङ्कारसूत्र ३·२·२) इति **वामनः** ।

तत्र—

(95) पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च... ......... ...॥
[ काव्यालङ्कारसूत्र ३·२·२–३ ]

इति या प्रौढिरोजस्तद् वैचित्र्यमात्रम् । साभिप्रायत्वरूपं चौजोऽपुष्टार्थत्व-दोषाभावमात्रं न गुणः । किं च । भोः सहृदया अर्थो जडस्तस्याभिप्राय इति केयं भाषा । वक्तृश्रोत्रोः स इति चेत्तर्हि तोऽर्थस्य गुण इति कथम् । अथ वस्त्वन्तराक्षेपकत्वमेव तस्य गुण इत्युच्यते, तद्वस्त्वन्तरमाक्षेप-वक्त्रभिप्रायरूपमेवमाक्षेपकत्वमपि कविव्यापारबलादेव, तथाविनिवेशनाप्रकारयोगे तथाभावात् । अत एव प्रौढिर्वस्तुतो वक्तृगतैव, सा त्वर्थे काममुपचर्यतामित्यलं बहुना ।

(96) 'विभक्तिवाच्यवाचकयोगादनुक्तयोरपि शब्दार्थयोः प्रतिपत्तिः प्रसाद' इति **भरतः** । [ ]+

पदपूर्विका तदर्थावगतिरिति शब्दार्थयोर्ग्रहणम् । यथा—

यस्याहुर्गतिगम्भीरजलदप्रतिमं गलम् ।
स वः करोतु निःसङ्गमुदयं प्रति मङ्गलम् ॥ ४०७ ॥

1 E °न्तभ्रं. 2. E दन्तैदि 3 E °क्ष्णोर्वि°. 4. A, B द्विशूलैः.. 5. The fourth pāda runs as follows साभिप्रायत्वमस्य च ॥ 6. E drops तद्. 7. E तथानि°. 8 विभक्त°.

+ The Nāṭyaśāstra reads as follows :

अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते ।
सुखशब्दार्थसंबोधात् प्रसादः परिकीर्त्यते ॥ C S. S. XVII. 99

सेयं विशेषणाधारा विशेष्याणामुक्तिरिति **वामनीयाः** । तस्मात्, (97) शैथिल्यं प्रसादः । (काव्यालङ्कारसूत्र ३·१·६) ओजो विपर्ययात्मा दोषोऽसौ कथ गुण इति । गाढत्वसंप्लुतं शैथिल्यमेव गुण इति चेत् । परस्परविरोधित्वाद् गाढत्वशैथिल्ययोः कथमेकत्र सन्निवेशः संभवतीति । अनुभवादेव विरोधप्रतिषेध इति चेत् । यदाह—

(98) करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः ।
यथानुभवतः सिद्धस्तथैवौजःप्रसादयोः ॥

[काव्यालङ्कारसूत्र ३·१·९–१०]

सेयं[1] दृष्टान्तस्यैव तावदसिद्धिः । दृष्टान्तविघातश्च दार्ष्टान्तिकमपि प्रतिहन्ति । तथा हि—सामाजिकजनो नाट्यकर्मणि करुणरसवासितचेताः प्रथमं दुःख्यति[2] पात्रप्रयोगवैशारद्येन च पश्चात् सुख्यति । ओजःप्रसादयोः पुनर्युगपदेवानुभवप्रतिज्ञा । यदि च तत्त्वं विवेच्यते तदा सर्वेषामपि रसानां प्रतीतिश्चमत्कारसारत्वात् सुखरूपैवेति दृष्टान्त एव न संगच्छते । तस्माद् विकासहेतुः सर्वत्र प्रसाद इति[3]। अर्थगुणस्तु (99) वैमल्यं प्रसादः*। (काव्यालङ्कारसूत्र ३·२·३) इति । प्रयोजकपदपरिग्रहो हि वैमल्यम् । तच्चाधिकपदत्वदोषनिराकरणात् स्वीकृतमेव ।

(100) 'स्वभावस्पष्टं विचारगहनं वचः श्लिष्टम्' इति **भरतः** ।

[ ]+

यथा—

क्षणं स्थिताः पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥ ४०८ ॥

[कुमार० ५·२४]

1. A, B, C श्रेय. 2. C दुष्यति. 3. D, E drop इति.

* Vāmana's text reads : अर्थवैमल्यं प्रसादः ॥

\+ The Nāṭyaśāstra reads :

विचार्य(? र)ग्रहणं वृत्त्या स्फुटं चैव स्वभावतः ।
स्वतः सुप्रतिबन्धश्च श्लिष्टं तत्परिकीर्त्यते ॥
ईप्सितेनार्थजातेन संबद्धानुपरस्परम् ।
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते ॥ C. S. S. ed., XVII. 97-98

The Nirṇayasāgar edition does not give the first verse. The second verse is identical. Compare, however, N. S. Vol. II GOS. XVI. 97-98.

सेयमभिधानाभिधेयव्यवहारे वैदग्धी, न पुनः सन्दर्भधर्मः । रचनारूपता हि गुणस्य स्वरूपमिति **वामनीयाः** । तस्मात् (101) 'मसृणत्वं श्लेषः' । तदाह—यस्मिन् सति बहून्यपि पदानि एकपदवद् भासन्ते स श्लेषः ।

[ काव्यालङ्कारसूत्र ३·१·११ ]

यथा—

'अस्त्युत्तरस्या दिशि देवतात्मा' इति ॥ ४०९ ॥ [ कुमार० १·१ ]

मसृणमदन्तुरतायां हि रीतिवैशसोपनिपातः । न चान्यतररसनिर्वाहे निषेवन्ते[2] । तस्मात् (102) 'अशिथिलं श्लिष्टम्' इति **दण्डी** । [ काव्यादर्श १·४३ ]+

यथा[3]—

प्रेक्षामृदङ्गनिनदानुपकर्ण्य तूर्णमम्भोदनादरभसान्ननृतं मयूरैः ।
यन्मन्दिरे सरलकण्ठमकण्ठकूजमुन्मण्डलीकृतशिखण्डमकाण्ड एव[4] ॥ ४·१० ॥

[ ]

सोऽयमोजःप्रकार एव । अदृष्टगौडसन्दर्भस्य वा दर्शनमित्युपेक्षणीयम् । गौडा हि शिथिलमाद्रियन्ते[5] । यथा—

लीलाविलोलललनाललितालकलासकाः ।
विलुसमालतीमाला जलकालानिला ववुः ॥ ४११ ॥ इति ।

[ ]

अर्थगुणस्तु (103) 'घटना श्लेषः' । क्रमकौटिल्यानुल्बणत्वोपपत्तियोगो हि घटना ।

[ काव्यालङ्कारसूत्र ३·२·४ ]

यथा—

'दृष्ट्वैकासन'(पृ. ११०)—इति ।

संविधानकभवं वैचित्र्यमात्रमिदं न गुणः ।

(104) 'परस्परविभूषणो गुणालङ्कारग्रामः समम्' इति **भरतः** ।

[ ]+

1 D drops म. 2. A, B निषेधन्ते. 3 A, B, C drop यथा. 4. E कण्ठमकुचकू°. 5. E शैथिल्य. 6. A, B drops स्त्रं.

+ The Nāṭyaśāstra reads ·

अन्योन्यसदृशं यत्र तथान्योन्यभूषणम् ।
अलङ्कारगुणाश्चैव समासात् समता यथा ॥ C. S.S. XVII. 100

नातिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः ।
न दुर्बोधा तैश्च कृता समत्वात् समता मता ॥ N. S. XVI. 101

यथा—

'स्मरनवनदी' (पृ. १११–११२) ॥ ४१२ ॥ इति ।

(105) भिन्नाधिकरणा हि गुणालङ्कारास्तत्कथमन्योन्यं भूषयेयुरिति **दण्डी**। श्लेषयमकचित्राणि हि प्रायेण गुणान् विगृह्य वर्तन्ते । अनुप्रासोऽपि प्रचुरं[1] प्रयुक्तस्तद्वदेव । तस्मात् (106) प्रबन्धेष्वविषमं समम्* । [काव्यादर्श १·४७] ते च प्रौढो मृदुर्मध्यश्चेति त्रय. । प्रौढमृदुमध्यवर्णविन्यासयोनित्वात् । प्रौढो यथा—

आहत कुचतटेन तरुण्याः साधु सोढममुनेति पपात ।
त्रुटयत प्रियतमोरसि हारात पुष्पवृष्टिरिव मौक्तिकवृष्टि. ॥ ४१३ ॥
[शिशुपाल० १०·७४]

मृदुर्यथा—

ललितमङ्गमपाङ्गविलोकितं स्मितमुधालवपल्लवितोऽधरः ।
इति मनो जयतः प्रमदाजनं मनसिजस्य जयन्ति शिलीमुखाः ॥ ४१४ ॥
[ ]

मध्यो यथा—

ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु ।
क्षिप्तमायतमदर्शयदुर्व्यां काञ्चिदाम जघनस्य महत्त्वम् ॥ ४१५ ॥
[शिशुपाल० १०·७७]

तदिदं वृत्तिभ्यो न पृथग्भवतीति **वामनीयाः**। (107) तस्माद् येन रीतिविशेषेणो[2]पक्रमस्तस्यापरित्याग आ समाप्तेरिति समताया रूपम् । तन्मुक्तके प्रबन्धे च ।
[काव्यालङ्कारसूत्र ३·१·१२–१३]

वैदर्भमार्गनिर्वाहो यथा—

'किं व्यापारैः—' ॥ ४१६ ॥ इति ।

गौडमार्गनिर्वाहो यथा—

क्षुद्राः क्वायं तपस्वी क्व च वदनवनच्छेदनिम्रधृतमज्ज-
व्याजाज्यस्फारधाराहुतिहुतहुतभुक्पच्यमानैः कपालैः ।
जातास्थिस्फोटमीतिप्रविघटितवलद्वामपार्श्वप्रवेश-
क्लाम्यत्सव्येतरार्धाकुलितह[3]रहठाकृष्टखड्गो दशास्यः ॥ ४१७ ॥
[ ]

1 A, B drop प्रचुर. * The Kāvyādarśa reads समं बन्धेष्वविषमम् ।
2. E °विशेषणो°. 3. °हरि°.

पांचालमार्गनिर्वाहो यथा—

ते काकुत्स्थपृषत्कजर्जरजरत्तालद्रुमस्थाणव-
स्ते विन्छिन्नमहेन्द्रकन्दरकणत्कर्णेषु टङ्काङ्किताः ।
ते लीलाशबरेन्दुशेखरशरव्याक्षेपवीथीभुवो
दुर्गाह्या अपि गाहिताः शशिरुचा कीर्त्या वनान्तास्तव ॥ ४१८ ॥

[ ]

एवं प्रबन्धेऽपि ।

प्रयोगमार्गं प्रति च सन्तः प्रमाणम् । ते च न सर्वत्र समतां वैचित्र्याय संगिरन्ते । तथा हि—

अज्ञानाद्यदि वाधिपत्यरभसादस्मत्परोक्षे हृता
सीतेयं प्रतिमुच्यतामिति वचो गत्वा दशास्यं वद ।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥ ४१९ ॥

[हनुमन्० ७.४४]

इत्यादौ मसृणमार्गत्यागो गुणः । (108) तस्मात् समता न वक्तव्या । अर्थगुणस्तु 'अवैषम्यं समता' । [काव्यालङ्कारसूत्र ३.२.५]

प्रक्रमाभेदो ह्यवैषम्यं यथा—

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमाः ।
मनसि च गिरं ग्रथ्नन्तीमे किरन्ति न कोकिलाः ॥ ४२० ॥ इति ।

[औचित्यविचारचर्चायां (श्लो. २६) मालववुवलयस्य]

प्रक्रमभेदो ह्यवैषम्यं यथा—

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमाः ।
मलयमरुतः सर्पन्तीमे वियोगिधृतिच्छिदः ॥ ४२१ ॥ इति ।

मधुग्रीष्मर्तुप्रतिपादनपरेऽत्र द्वितीयपादे प्रक्रमभेदः । मलयमरुतामसाधारणत्वात् । ततश्चापदोषत्वमेवात्र गुण इति ।

(109) अर्थस्य गुणान्तरसमाधानात् समाधिरिति भरतः ।

[ ]+

1 A,B,C,D पञ्चाल°. 2 B °रशृणत्. 3. E च्छिन्न. 4. A,B,C,D drop ह्यवैषम्य. 5. A, B, C, D drop इति. 6. A, B, C, D प्रक्रमाभेदो. 7. E drops ह्यवैषम्यं.

\+ उपमास्वियहिष्टानां (? °माधुपदि°) अर्थानां यत्नतस्तथा ।
प्राप्तानां चातिसंयोगः समाधिः परिकीर्त्यते ॥

Nāṭyaśāstra (C. S. S.) XVII. 101

अभियुक्तैर्विशेषस्तु योऽर्थस्यैवोपलभ्यते ।
तेन चार्थेन संपन्नः समाधिः परिकीर्त्यते ॥

Nāṭyaśāstra (Nirṇayasāgar) XVI. 102

यथा[1]—

परिणतशरकाण्डच्छायमच्छाच्छया यत्
किसलयितमिवासीच्चारुलावण्यलक्ष्म्या ।
तदनुदिवसमस्यास्तोयविच्छेदसीदन्-
नवकुवलयदामश्यामलं जातमङ्गम् ॥ ४२२ ॥ [ ]

सोऽयमतिशयोक्तिविशेष इति **वामनीयाः** । तस्मात् (110) 'आरोहावरोहक्रमः समाधिः' । [ काव्यालङ्कारसूत्र ३·१·१२ ]

तत्रारोहपूर्वोऽवरोहो यथा—

शृङ्गोत्खातभुवः कृतान्तमहिषादुत्त्रस्त उच्चैःश्रवाः
श्रुत्वैरावणकण्ठगर्जितमयं क्रुद्धोऽम्बिकाकेसरी ।
संगीनागतकम्बलाश्वतरयोः प्रेक्षागृहद्वारि च
प्रेक्ष्य स्कन्दशिखण्डिनं चकितयोः कस्मान्मुखं म्लायति ॥ ४२३ ॥
[ ]

अवरोहपूर्व आरोहो यथा—

यद्वर्गाभिर्जगाहे गुरुशकुलकुलास्फालनत्रासहास-
व्यस्तोरुस्तम्भिकाभिर्दिशि दिशि सरितां दिग्जयप्रक्रमेषु ।
अम्भो गम्भीरनाभीकुहरकवलनोन्मुक्तिपर्यायलोलत्-
कल्लोलाबद्धमुग्धध्वनिचकितकणत्कुम्भं[2] कामिनीभिः ॥ ४२४ ॥

(111) तदिदं गुरुलघुसंचययोरन्योन्यान्तरणमिति **दण्डी** । तस्मादन्यधर्मस्यान्यत्र समाधानात् समाधिः । [ काव्यादर्श १·९३[+] ]

यथा—

प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः
कपोलः पाण्डुत्वादवतरति ताडी[3]परिणतिम् ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-
मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥ ४२५ ॥ [ ]

1. E drops यथा. 2. A, B, C, D °कुङ्कुमं.
+ अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।
सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥
3. C °परिणति. A drops परिणति.

सेयमुपचरिता वृत्तिरिति चेद् गुणः, योगवृत्त्या किमपराद्धमिति । अर्थगुणस्तु
(112) 'अर्थदृष्टिः समाधिः'। [काव्यालङ्कारसूत्र ३.२.६]
यथा—

अग्रादपि मध्यादपि मूलादपि सर्वतोऽप्यशोकस्य ।
पिशुनस्थमिव रहस्यं यतस्ततो निर्गतं कुसुमम् ॥ ४२६ ॥ [पद्मप्राभृतक ४][१]

अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत् कथं काव्यं स्यात्।* ततश्च सकलसत्कविदृष्टः काव्यार्थः समाधिः स्यादिति नार्थगुणः समाधिः।
(113) बहुशो यच्छ्रुतमभिहितं वा वाक्यमनुद्वेजकं मनसः तन्मधुरमिति भरतः।+
[ ]

दयितजनरूक्षाक्षराक्षेपवचनेऽपि[1] तत्समानमिति वामनीयाः। तस्मात्
(114) 'पृथक्पदत्वं माधुर्यम्' [काव्यालङ्कारसूत्र ३.१.२०]
(115) तदिदमनुभवविरुद्धमिति दण्डी। समासेऽपि माधुर्यस्य दर्शनात्।
यथा—

अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखान्तम् ।
करतलनिषण्णमबले वदनमिदं किं न तापयति ॥ ४२७ ॥ इति ।
[ ]

तस्माद् (116) 'रसवन्मधुरम्'। [काव्यादर्श १.५१]
रसश्च द्विधा—वाग्वस्तुविषयत्वेन। तयोः श्रुतिवर्णानुप्रासाभ्यां वाग्रसः। अनुप्रासो ह्यलङ्कारः। कथं तस्य गुणत्वम्। अग्राम्याभिधेयता तु वस्तुरसः। असभ्यार्थनिबन्धनं हि ग्राम्यता। यथा—

ब्रह्मचर्योपतप्तोऽहं त्वं च क्षीणा बुभुक्षया।
भद्रे भजस्व मा तूर्णं तव दास्याम्यहं पणम् ॥ ४२८ ॥ [ ]

१. The Padmaprābhrtaka reads the verse as follows
मूलादपि मध्यादपि विटपादप्यङ्कुरादशोकस्य ।
पिशुनस्थमिव रहस्यं समन्ततो निष्क्रमति पुष्पम् ॥

* अर्थो द्विविधोऽयोनिरन्यच्छायायोनिश्च ।
काव्यालङ्कारसूत्र ३.२.७

\+ बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥
Nāṭyaśāstra(C. S. S.)XVII. 102

बहुशो यत्क्रुतं काव्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति तस्माद्धि तन्माधुर्यमुदाहृतम् ॥
Nāṭyaśāstra(N. S.) XVI. 103

1. E वचनेन.

सोऽयं दोषाभावो न गुणः एतेनोक्तिवैचित्र्यरूपं माधुर्यं वामनोक्तोऽप्यर्थगुणो[1] निरस्त एव । तस्मादाह्लादकत्वं[2] माधुर्यमिति ।

(117) सुखशब्दार्थं सुकुमारमिति भरतः । [ ]+

यथा—

अङ्गानि चन्दनरजःपरिधूसराणि ताम्बूलरागसुभगो[3]ऽधरपल्लवश्च ।
अच्छाञ्जने च नयने वसनं तनीयः कान्तासुभूषणमिदं विभवावशेषः[4] ॥ ४२९ ॥
[ ]

(118) 'मुखशब्दमेव' इति वामनः । [ ]*

यथा—

हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रलताक्रियोचिते स्वनामचिह्नं निचखान सायकम् ॥ ४३० ॥
[रघु० ३.५५]

सोऽयं श्रुतिकटुत्वदोषाभावो न गुणः । माधुर्यप्रकार एवायम् । अर्थगुणस्तु
(119) 'अपारुष्यं सौकुमार्यम्' । [काव्यालङ्कारसूत्र ३.२.११]

यथा—

स किलेन्द्रप्रयुक्तेन शौरिणा भूमिनन्दनः ।
चक्रघातोपदिष्टाध्वा नीतोऽत्यन्तप्रवासताम् ॥ ४३१ ॥ [ ]

सोऽयममङ्गलरूपाश्लीलत्वदोषाभावो न गुणः । यदि वा उक्तिविशेष[5]पर्यायोक्तालंकारविषय एवासौ ।

(120) बहुभिः सूक्ष्मैश्च विशेषैः समेतमुदारमिति भरतः [ ][1]

1. E निरर्थे 2. A, B ह्लादत्व. 3 A, B सुलभो. 4. E वचनं. 5. E विभवाय शेष॰.

\+ सुखप्रयोज्यैर्यच्छब्दैर्युक्त सुश्लिष्टसन्धिभिः ।
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते ॥ Nāṭyaśāstra (C.S.S )XVI. I04
सुखप्रयोज्यैर्यच्छब्दैर्युक्तं सुश्लिष्टसंधिभिः ।
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते ॥ Nāṭyaśāstra(N. S.)XVI. 105

* अजरठत्वं सौकुमार्यम् ॥ काव्यालङ्कारसूत्र ३.१.२१

१. अनेकार्थविशेषैर्यत् सूक्तैः सौष्ठवसंयुतैः ।
उपेतमिति चित्रार्थैः उदात्तं तच्च कीर्त्यते ॥ Nāṭyaśāstra (C.S.S.)XVI. 106
दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम् ।
अनेकभावसंयुक्तमुदारं तत् प्रकीर्तितम्॥ Nāṭyaśāstra (N.S.)XVI. 107

यथा—

ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छद-
च्छायाधाम पुनर्मृणाललतिकालावण्यभाजोऽत्र ये ।
ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रिय-
स्तेऽमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशोः कराः ॥ ४३२ ॥

[ ]

उल्लेखवानयमर्थः कथं गुण इति **वामनीयाः** । तस्माद् (121) 'विकटत्वमुदारता' यस्मिन् सति नृत्यन्तीव पदानीति वर्णना भवति । [काव्यालङ्कारसूत्र ३.१.२२] । यथा—

अत्रान्तरे रणितहारलतानितम्बसंवाहनस्खलितवेगतरङ्गिताङ्गी ।
देवी व्यपास्य शयनं धृतमाननन्तुरन्तःपुरं गतवती सह सौविदल्लैः ॥ ४३३ ॥

[विद्धशाल० १·३९]

सोऽयमीषदमसृणोऽनुप्रासप्रभावो न गुणः । ओजःप्रकार एव चायम् । अर्थगुणस्तु—(122) 'अग्राम्यत्वमुदारता' [काव्यालङ्कारसूत्र ३.१.१२]

यथा—

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमान्तं परमिह युवामेव भजथः ।
अयि द्वन्द्वं दिष्ट्या तदिह सुभगे संवदति वा-
मतः शेषं चेत् स्याज्जितमथ तदानीं गुणितया ॥ ४३४ ॥

[ ]

सोऽयं दोषाभावो न गुणः ।

(123) यस्मिन्न तथास्थितोऽपि तथास्थित एवार्थः प्रतिभाति सोऽर्थव्यक्तिर्गुण इति **भरतः** । [ ]

यथा—

च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं
द्वयं चक्रीकृत्य प्रहसितमुखी शैलतनया ।

1 E °मतो.

* यस्यार्थानुप्रवेशेन मनसा परिकल्प्यते ।
अनन्तरं प्रयोगस्य सार्थव्यक्तिरुदाहृता ॥

Nāṭyaśāstra (C.S.S.) XVII. 105

सुप्रसिद्धा धातुना तु लोककर्मव्यवस्थिता ।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्तिता ॥

Nāṭyaśāstra (N.S.) XVI. 106

अवोचद् यं पश्येत्यवतु स शिवः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥ ४३५ ॥
[सुभाषितावलौ (श्लो. ६६) चन्द्रकस्य]

सोऽयं प्रसादादभिन्न इति **वामनीयाः** । तस्माद् यत्र पुरस्तादिव वस्तुनोऽवगतिः पश्चादिव वाचां सार्थव्यक्तिः । यथा—

महेश्वरे वा जगतां महेश्वरे जनार्दने वा जगदन्तरात्मनि ।
न वस्तुभेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥ ४३६ ॥
[भर्तृहरिः वैराग्य० ८४]

(124) सोऽयमुक्त्यन्तराभिहितः प्रसाद एवेति **दण्डी** । तस्मादनेयार्थत्वमर्थस्यार्थव्यक्तिः । [काव्यादर्शे १·७३]* तत्र चास्तोकमुदाहरणम् । दोषाभावोऽयं कथमिव गुणः । तथा चेद् बहुत्वाद्दोषाणां शतं गुणाः स्युः । अर्थगुणस्तु (125) वस्तुनः स्फुटत्वमर्थव्यक्तिः । [काव्यालङ्कारसूत्र ३·२·१३]+ यथा—

पृष्ठेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रु बहिः पलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥ ४३७ ॥
[ ]

कविवचनवैशारद्यतो वस्तुनः स्फुटत्वं न निसर्गतः । तदुक्तम्—

(126) निवेशयति ह्यर्थांश्च तथापि तथेति यो ।
महाकवीनां विकटा वाणी विजयतामसौ ॥ [ ]

अपि च । जातिर्नामायमलङ्कार इति ।

(127) श्रोत्रमनःप्रह्लादजनकं कान्तमिति **भरतः** । [ ]

1. A, B, C, D वा. 2. A drops महाकवी°. 3. E °जननं.

* अर्थव्यक्तिरनेयत्वम् ॥

\+ वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ।

? यो मनःश्रोत्रविषयः प्रसादजनको भवेत् ।
शब्दबन्धः प्रयोगेण स कान्त इति भण्यते ॥
Nāṭyaśāstra (C. S S) XVII. 107
यन्मनःश्रोत्रविषयमाह्लादयति हीन्दुवत् ।
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥
Nāṭyaśāstra (N. S.) XVI. 104

यथा—

दद्दशुर्द्वारदेशस्थां सीतां वल्कलधारिणीम् ।
अङ्गदाह्लादनङ्गस्य रतिं प्रव्रजितामिव ॥ ४३८ ॥ [ ]

तदिदं माधुर्यसाधारणमिति वामनीयाः । तस्मात्—
(128) 'औज्ज्वल्यं कान्तिः' । [काव्यालङ्कारसूत्र ३·१·२५]
यदभावे पुराणी बन्धच्छायेयमिति व्यपदिशन्ति । यथा—

स्त्रीणां केतकगर्भपाण्डुसुभगच्छेदावदातप्रभे
मन्दं कुड्मलिताः कपोलफलके लावण्यनिष्यन्दिनि ।
अन्यां कामपि कामनीयककलामातन्वते नूतनां
शीतांशोर्बिसकन्दकन्दलशिखामुग्धश्रियो रश्मयः ॥ ४३९ ॥ [ ]

ओजोऽप्यौज्ज्वल्ययोगात्तर्हि कान्तिः । (129) तस्माल्लोकसीमानतिक्रम कान्तिरिति दण्डी [काव्यादर्श १.८५*] । सा च द्विधा वार्तावर्णनयो । तत्रोपचारवचनं वार्ता । प्रशंसावचनं वर्णना । वार्ता यथा—

एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥ ४४० ॥
[कुमार० ६·६३]

वर्णना यथा—

तदाननं निर्जितचन्द्रकान्ति कंदर्पदेवायतनं मनोज्ञम् ।
प्रदक्षिणीकर्तुमितः प्रवृत्ते विलोचने मुग्धविलोचनायाः ॥ ४४१ ॥
[ ]

लोकसीमातिक्रमः पुनरकान्तिः । तत्र वार्ता यथा—

मम दृष्टस्य राजेन्द्र तव दीर्घेण चक्षुषा ।
चरणद्वितयस्याग्रे नित्यं लुठति चन्द्रमाः ॥ ४४२ ॥
[ ]

1. A, B, C, D °नी.

* The Kāvyādarsa reads :

कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात् ।
तच्च वार्ताभिधानेषु वर्णनास्वपि दृश्यते ॥

वर्णना यथा—

वदनस्य तवैणाक्षि लक्ष्यते पुरतः शशी ।
पिण्डीकृतेन बहुना कज्जलेनेव निर्मितः ॥ ४४३ ॥ [ ]

सेयमतिशयोक्तेर्यन्त्रणा न पुनर्गुणान्तरमिति । अर्थगुणस्तु (130) 'दीप्तरसत्वं कान्तिः' इति वामनः । [काव्यालङ्कारसूत्र ३·२·१४]

यथा—

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत् प्रत्युत पाणिसंपुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥ ४४४ ॥ इति[1] ।
[ ]

रौद्रादयो हि[2] दीप्ता रसास्ततोऽन्ये तु शृङ्गारादयस्तद्विपरीताः, तन्निबन्धनं[3]मकान्तिस्तर्हि स्यात् । अथवा व्यङ्ग्यरसादिस्वरूपनिरूपणेनैव कान्तिः स्वीकृतेति ।

ओजःप्रसादमधुरिमाणः साम्यमौदार्यं च पञ्चेत्यपरे । तथा हि—यददर्शितविच्छेदं पठतामोजः, विच्छिद्य पदानि पठतां प्रसादः, आरोहावरोहतरङ्गिणि पाठे माधुर्यम्, ससौष्ठवमेव स्थाने पठतामौदार्यम्, अनुच्चनीचं पठतां साम्यमिति । तदिदमलीकं कल्पनातन्त्रम् । यद्विषयविभागेन पाठनियमः स कथं गुणनिमित्तमिति ।

छन्दोविशेषनिवेश्या गुणसंपत्तिरिति केचित् । तथा हि । स्रग्धरादिष्वोजः ।

यथा—

ताम्यत्यामज्जमज्जन्मणिमसृणफणाचक्रवाले फणीन्द्रे
यत्सेनोद्दामहेलाभरचलितमहाशैलकीलां बभार ।
कृच्छ्रात्पातालमूला[4]विलहलनिरालम्बजम्बालनिष्ठः
पृष्ठाष्ठीलप्रतिष्ठामवनिमवनमत्कर्परः कूर्मराजः ॥ ४४५ ॥ [ ]

इन्द्रवज्रोपेन्द्रवज्रादिषु प्रसादो यथा—

यथा यथा स्याः पदमङ्ककेषु प्रमोदलक्ष्म्या निदधे[5] मदस्य ।
तथा तथा कार्मुकमाततज्यं प्रसूनधन्वा कलयांचकार ॥ ४४६ ॥
[ ]

मन्दाक्रान्तादिषु माधुर्यं यथा—

'किं व्यापारैः' । ४४७ । इति ।

1. A, B, C, D drop इति. 2. D drops हि. 3. E °नं कान्ति°. 4. E °कावलवहल°. 5. S, E निधत्ते.

शार्दूलादिषु समता यथा—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ४४८ ॥

[ शाकुन्तल २.६ ]

विषमवृत्तेष्वौदार्यं यथा—

'निरवधि च निराश्रयं च (पृ. १८०) ॥ ४४९ ॥ [ ] इति ।

सोऽयमनवगाहितप्रयोगाणां विभागक्रमः । तथा हि—स्रग्धरादिष्वनोजोऽपि । यथा—

शम्भो केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या-
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद् विभोर्वः ॥ ४५० ॥

[ मुद्राराक्षस १.१ ]

इन्द्रवज्रादिष्वप्रसादो यथा—

विविच्य बाधाः प्रभवन्ति यत्र न तत्र मिथ्यामतयश्चरन्ति ।
संसारमोहस्त्वगमन्य एव दिङ्मोहवत् तत्त्वधिया सहास्ते ॥ ४५१ ॥

[ ]

मन्दाक्रान्तादिष्वमाधुर्यं यथा—

सर्वप्राणप्रगुणमघवन्मुक्तमाहत्य वक्ष-
स्तत्सङ्घाद्विघटितबृहत्खण्डमुच्चण्डरोचिः ।
एवं वेगात् कुलिशमकरोद् व्योमविद्युत्सहस्रै-
र्भर्तुर्वक्त्रज्वलनकपिशास्ते च रोषाट्टहासाः ॥ ४५२ ॥

[ महावीरचरित १.४५ ]

शार्दूलादिष्वसाम्यं यथा—

'अज्ञानाद्यदि वाधिपत्यरभसात्' (पृ. २८०) ॥ ४५३ ॥

विषमवृत्तेष्वनौदार्यं यथा—

अयमहिमरुचिर्भजन्प्रतीचीं कुपितवलीमुखतुण्डताम्रबिम्बः ।
जलनिधिमकरीभिरीक्ष्यते द्राग् नवरुधिरारुणमांसपिण्डलोभात् ॥ ४५४ ॥

[ ]

1. D drops च 2. E वियो. 3. E प्रणव°. 4. E दश.

तत्र माधुर्यस्य लक्षणमाह—

**९६) द्रुतिहेतुर्माधुर्यं शृङ्गारे ॥ २ ॥**

द्रुतिरार्द्रता गलितत्वमिव चेतसः । शृङ्गारेऽर्थात् संभोगे । शृङ्गारस्य च ये हास्याद्भुतादयो रसा अङ्गानि तेषामपि माधुर्यं गुणः ।

**९७) शान्तकरुणविप्रलम्भेषु सातिशयम् ॥ ३ ॥**

सातिशयमिति । अत्यन्तद्रुतिहेतुत्वात् ।

एतद्व्यञ्जकानाह—

**९८) तत्र निजान्त्याक्रान्ता अटवर्गा वर्गा ह्रस्वान्तरितौ रणावसमासो मृदुरचना च ॥ ४ ॥**

निजेन निजवर्गसम्बन्धिनान्त्येन ङञणनमलक्षणेन[1] शिरस्याक्रान्ता अ-टवर्गाः टठडढरहिता वर्गा ह्रस्वान्तरितौ च रेफणकारौ । असमास इति । समासाभावोऽल्पसमासता वा, मृद्वी च रचना । तत्र माधुर्ये माधुर्यस्य व्यञ्जिकेत्यर्थः । यथा[2]—

शिञ्जानमञ्जुमञ्जीराश्चारुकाञ्चनकाञ्चयः ।
कङ्कणाङ्कभुजा भान्ति जितानङ्ग तवाङ्गनाः ॥ ४२४ ॥

तदेवं यथान्यैर्गुणाना लक्षणमभिहितं तथा न वाच्यम् । यथायोगं लक्षण-व्यभिचाराद् विवक्षितगुणेष्वन्तर्भावाद्दोषपरिहारेण स्वीकृतत्वाच्चेति ।

**द्रुतिरिति** । द्रुतिहेतुत्व माधुर्यस्य लक्षण न तु श्रव्यत्वम् । ओजः-प्रसादयोरपि श्रव्यत्वात् । तेन (131) 'श्रव्यं नातिसमस्तार्थशब्दं मधुर-मिष्यते'[+] । [भामह २·३] इति माधुर्यलक्षणत्वेन श्रव्यत्वं यद् **भामहे**नोक्तं तन्न युक्तमित्यर्थः ।

**अर्थादिति** । यद्यपि सभोगविप्रलम्भोभयरूपः शृङ्गारस्तथापि गोबली-वर्दन्यायेनानन्तरविप्रलम्भप्रयोगसामर्थ्याच्छृङ्गारः संभोग इत्युक्तः[3] ।

**अङ्गानीति** । यद्यपि हास्याद्भुतयोर्विकासहेतुतया ओजोऽप्यस्ति तथापि शृङ्गाराङ्गतया माधुर्यमेव प्रकृष्टं प्रतीयत इत्यर्थः ।

1. P omits णे. 2. P drops यथा. + The Chaukhamba edition reads श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते । 3. E °नानन्तरं विप्रलम्भप्रयोगात सामर्थ्याच्छृङ्गारसंभोग.

दारुणरणे रणन्तं करिदारणकारणं[1] कृपाणं ते।
रमणकृते रणरणकी पश्यति तरुणीजनो दिव्यः ॥ ४२५ ॥
[ ]

न पुनरेवं यथा—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि[2] माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ ४२६ ॥
[ ]

अत्र शृङ्गारप्रतिकूला वर्णाः।

बाले मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां
किं त्वं पक्षान्तवान्तैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः।
एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभा
दावाग्नेर्व्योम्नि लग्ना मलिनयति दिशां मण्डलं धूमलेखा ॥ ४२७॥
[सुभाषितावलौ (१७१६) धाराकदम्बस्य]

अत्र दीर्घसमासः परुषरचना च विप्रलम्भशृङ्गारे विरुद्धा।

ओजसो लक्षणमाह —

९९) दीप्तिहेतुरोजो वीरबीभत्सरौद्रेषु क्रमेणाधिकम् ॥ ५ ॥

दीप्तिरुज्ज्वलता, चित्तस्य विस्तार इति यावत्। क्रमेणेति वीराद् बीभत्से ततोऽपि रौद्रे, तेषामङ्गेऽद्भुते च सातिशयमोजः।

एतद्व्यञ्जकानाह—

**न पुनरेवमिति**। अयं भावः—यथान्यैः प्रतिकूलवर्णलक्षणो दोष उक्तस्तथा न वाच्य एतद्गुणविपर्ययेणैव स्वीकृतत्वात् तस्य[3]।

**वर्णा इति**। समासरचनयोरुपलक्षणमिदम्। माधुर्यौजःप्रसादव्यञ्जकेषु च वर्णादिष्वभिहितेषु वृत्तयो रीतयश्चाभिहिता एव। तदव्यतिरिक्तस्वरूपत्वात् तासाम्।

1 I करिदारुणकारणं. 2. I कलिकण्ठि. 3 D drops तस्य.

**१००) आद्यतृतीयाक्रान्तौ द्वितीयतुर्यौ युक्तो रेफस्तुल्यश्च टवर्गशषा वृत्तिदैर्घ्यमुद्धतो गुम्फश्चात्र ॥ ६ ॥**

आद्येन द्वितीयस्तृतीयेन चतुर्थ आक्रान्तो वर्णस्तथाध उपरि उभयत्र वा येन केनचित् संयुक्तो रेफस्तुल्यश्च वर्णो वर्णेन युक्तस्तथा टवर्गोऽर्थाण्णकारवर्जः, शषौ च । दीर्घः समासः, कठोरा रचना च । अत्रौजसि । ओजसो व्यञ्जिकेत्यर्थः । यथा—

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशांघ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः ॥४२८॥
[हनुमन्नाटक ८.४८]

न पुनरेवं यथा—

देशः सोयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति नो
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥ ४२९ ॥
[वेणी० ३.३३]

अत्र च यथोक्तवर्णाभावोऽनुद्धता रचना असमासश्च विरुद्धः ।

अथ प्रसादलक्षणमाह—

**१०१) विकासहेतुः प्रसादः सर्वत्र ॥ ७ ॥**

विकासः शुष्केन्धनाग्निवत् स्वच्छजलवच्च सहसैव चेतसो व्याप्तिः । सर्वत्रेति सर्वेषु रसेषु ।

एतद्व्यञ्जकानाह—

**१०२) इह श्रुतिमात्रेणार्थप्रत्यायका वर्णवृत्तिगुम्फाः ॥ ८ ॥**

श्रुत्यैवार्थप्रतीतिहेतवो वर्णसमासरचनाः । इह प्रसादे । प्रसादस्य व्यञ्जका इत्यर्थः । यथा—

1. S drops च.

दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः
सन्तश्चेदमृतेन किं यदि खलास्तत्कालकूटेन किम् ।
किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया
संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥ ४३० ॥

[ ]

माधुर्यौजःप्रसादव्यञ्जकाश्च वर्णा उपनागरिका परुषा कोमला च वृत्तिरित्याचक्षते । वैदर्भी गौडीया पाञ्चाली चेति रीतय इत्यन्ये । यदाह—

(32) माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा कोमला परैः ॥
केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ॥

[काव्यप्रकाश ९.८०-८१]

यद्यपि गुणेषु नियता वर्णादयस्तथापि—

**१०३) वक्तृवाच्यप्रबन्धौचित्याद् वर्णादीनामन्यथात्वमपि ॥९॥**

तत्र वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव वर्णादयः । यथा–

मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥४३१॥

[वेणी० १.२२]

अत्र यद्यपि न वाच्यं क्रोधादिव्यञ्जकं काव्यं चाभिनेयार्थं, तथापि भीमसेनस्य वक्तुरौचित्यादुद्धता वर्णादयः ।

---

**अत्रेति** । यदि हि क्रोधादिव्यञ्जकं वाच्य भवेत्तत उपपद्येरन्नुद्धता रचनादय । न चैतदनभिनेयार्थं, येन स्वेच्छाप्यनुमन्येत रचनादीनाम् । किं त्वभिनेयार्थमिदम् । न च तत्र रौद्रादावप्युद्धता रचनादय उपपन्नाः । अतो वक्त्रौचित्यादेव रचनादीनामप्यन्यथात्वमत्रेत्यर्थः ।

---

1 D °नुमा°. 2. A, B, E °नामन्यथा°.

क्वचिद् वक्तृप्रबन्धानपेक्षा वाच्यौचित्यादेव । यथा—

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥ ४३२ ॥

[छलितरामायणे ]

क्वचिद् वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव । यथा—आख्यायिकायां शृङ्गारेऽपि न मसृणा वर्णादयः । कथाया रौद्रेऽपि नात्यन्तमुद्धताः । नाटकादौ रौद्रेऽपि न दीर्घसमासादयः ।

**न मसृणा इति** । गद्यस्य विकटनिबन्धाश्रयेण च्छायावत्त्वात् ।

**नाटकादौ रौद्रेऽपीति** । न केवलं करुणविप्रलम्भयोः । रौद्रेऽपि न दीर्घसमासादयो निबन्धनीयाः । कथमिति चेत्, उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतीतौ व्यवधायका विरोधिनश्च सर्वात्मनैव परिहार्याः । एवं च दीर्घसमासः । समासानामनेकप्रकारसंभावनया रसप्रतीतिं कदाचिद् व्यवदधातीति तस्मिन्नात्यन्तिकमभिनिवेशः शोभते, विशेषतोऽभिनेयार्थे काव्ये । तत्रापि करुणविप्रलम्भशृङ्गारयोः । तयोर्हि सुकुमारत्वात् स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति । रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ मध्यमसमासोऽपि, कदाचिद् धीरोद्धतनायकसम्बद्धव्यापाराश्रयेण दीर्घसमासोऽपि वा तदाक्षेपाविनाभाविरसोचितवाच्यापेक्षया न विगुणो भवतीति सोऽपि[4] नात्यन्तं परिहार्यः । सर्वत्र च प्रसादाख्यो गुणो व्यापी । स हि सर्वरससाधारण इत्युक्तम् । प्रसादातिक्रमे ह्यसमासोऽपि करुणविप्रलम्भशृङ्गारौ न व्यनक्ति । तदपरित्यागे मध्यमसमासोऽपि[5] प्रकाशयति । तस्मात् सर्वत्र प्रसादोऽनुसर्तव्य. । अत एव च—

यो य. शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपं
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥ ४५५ ॥

[वेणी० ३·३२]

1. P काकुस्थ°. 2. E drops नि. 3. E °त्यन्तमभि°. 4. E सोऽत्यन्तं.
5. D °पि न प्र°. Cf. Dhvanyāloka, p. 322. °समासापि न न प्रकाशयति।
6. A, B, C, D मदं. 7. E °तया.

एवमन्यदप्यौचित्यमनुसर्तव्यम् ॥

इति । **आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञ-काव्यानुशासनवृत्तौ** गुणविवेचनश्चतुर्थोऽध्यायः ॥

---

इत्यादौ प्रसादाख्य एव गुणो न माधुर्यं नाप्योजः समासाभावात् । न चाचारुत्वम्, अभिप्रेतरसप्रकाशनात् ।

**एवमन्यदपीति** । मुक्तकेषु रसबन्धाश्रयेण न दीर्घसमासा रचना । अन्यथा तु कामचारः । संदानितकादिषु विकटनिबन्धौचित्यान्मध्यमसमासादीर्घ-समासे एव रचने । प्रबन्धाश्रितेषु तु मुक्तकादिषु यथोक्तप्रबन्धविशेषौचित्य-मेवानुसर्तव्यम् । पर्या[1]बन्धेषु पुनरसमासामध्यमसमासे एव । कदाचिद् रौद्रादि-विषये दीर्घसमासायामपि संघटनायां परुषा ग्राम्या च वृत्तिः परिहर्तव्या । परिकथायां कामचारः । तत्रेतिवृत्तमात्रोपन्यासेनात्यन्तं[2] रसबन्धानभिनिवेशात् । खण्डकथासकलकथयोस्तु प्राकृत[3]प्रसिद्धयो· कु[4]ल्वादिनिबन्धनभूयस्त्वाद दीर्घसमासाया अपि न विरोधः । वृत्तौचित्यं च यथारसमनुसर्तव्यम् । सर्ग[5]बन्धे तु रसतात्पर्ये यथारसमौचित्यम् । अन्यथा तु कामचार । द्वयोरपि मार्गयो· सर्गबन्ध-विधायिनां दर्शनाद् रसतात्पर्यं साधीय इति ॥

इति । **आचार्यश्रीहेमचन्द्रविरचिते विवेके चतुर्थोऽध्यायः ॥**

---

1. E पर्यायब°. 2. E °त्यन्तरस°. 3. E °तसिद्ध°. 4. A, B शुल्का.
5. A, B सबन्ध.

'शब्दार्थौ सालङ्कारौ काव्यम्' इत्युक्तम्। तत्रालङ्काराणाम् 'अङ्गाश्रिता अलङ्काराः' इति सामान्यलक्षणमुक्तम्। अथ विशेषलक्षणस्यावसरस्तत्रापि शब्दालङ्काराणां षण्णां तावदाह—

**१०४) व्यञ्जनस्यावृत्तिरनुप्रासः ॥ १ ॥**

व्यञ्जनस्येति जातावेकवचनम्। तेनैकस्यानेकस्य वा व्यञ्जनस्यावृत्तिः पुनः पुनर्निबन्धो रसाद्यनुगतः प्रकृष्टोऽदूरान्तरितो न्यासोऽनुप्रासः। तत्रैकस्य सकृदावृत्तौ न किञ्चिद् वैचित्र्यमर्थादसकृदावृत्तिर्लभ्यते। अनेकस्य तु सकृदसकृच्च। तत्रैकस्यासकृदावृत्तिर्यथा—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥ ४३३ ॥

अनेकस्य सकृदावृत्तिर्यथा—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ ४३४ ॥

[सुभाषितावलौ (२१५३) भगवद्वाल्मीकिमुनेः]

अत्र 'रु-रि-न्द-न्दि'-इत्यादेरनेकस्य सकृदावृत्तिः। यथा वा—

नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविसर्गमग्नौ ॥ ४३५ ॥

[रघु० ७.२५]

अत्र द्वयोर्द्वयोस्त्रयाणां त्रयाणां च व्यञ्जनानां सकृदावृत्तिः। यथा वा—

'धूसरितसरिति'। ४३६। इति।

---

**षण्णामिति**। अनुप्रासयमकचित्रश्लेषवक्रोक्तिपुनरुक्ताभासानाम्।

---

1. D षडिति. The Vakroktijīvita (II. 3.16) reads धूसरसरिति।

अनेकस्यासकृदावृत्तिर्यथा —

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि
ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥ ४३७ ॥

[सुभाषितावलौ (१७०८) भट्टबाणस्य]

अत्र 'रुधि' इत्यादेः ।

**१०५) तात्पर्यमात्रभेदिनो नाम्नः पदस्य वा लाटानाम् ॥२॥**

शब्दार्थयोरभेदेऽपि अन्वयमात्रभेदिनो नाम्नः पदस्य वा एकस्यानेकस्य वा सकृदसकृच्चावृत्तिर्लाटानां संबन्धी लाटजनवल्लभोऽनुप्रासः । तत्रैकस्य नाम्नः सकृदावृत्तिर्यथा---[1]

स एष भुवनत्रयप्रथितसंयमः शङ्करो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयञ् जयति जातहासः स्मरः ॥ ४३८ ॥

[ ]

अत्र करेति नाम्नः । असकृद् यथा—

दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥ ४३९ ॥

[रघु० ८·२९]

अत्र दशेति नाम्नः । अनेकस्य सकृद् यथा—

'जयति क्षुण्णतिमिरः' (पृ. २००) । ४४० । इति ।

असकृद् यथा—-

वक्त्रायन्ते नदीनां सितकुसुमधराः शक्रसंकाश काशाः
काशाभा भान्ति तासां नवपुलिनगताः स्त्रीनदीहंस हंसाः ।

1. L drops from स एष भुवनत्रय to यथा (l. 16).

हंसाभाम्भोदमुक्तस्फुरदमलवपुर्मेदिनीचन्द्र चन्द्र-
श्चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां काल कालः ॥ ४४१ ॥

[ ]

पदैकस्य सकृद् यथा—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥ ४४२ ॥

[ ]

असकृद् यथा—

न भवति भवति च न चिरं भवति चिरं चेत् फले विसंवदति ।
कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ४४३ ॥

[सुभाषितावलौ (२३६) रविगुप्तस्य]

अनेकस्य सकृद् यथा—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥ ४४४ ॥

[ ]

असकृद् यथा—

किञ्चिद् वच्मि न वच्मि वच्मि यदि वा किं वच्मि वच्मीदृशम्
दृश्यन्ते न भवादृशेषु पतिषु स्वेषामदोषे दमाः ।

**यस्य न सविधे इति** । अत्र यत् पूर्वार्धे दवदहनत्वं विधेयं तुहिनदीधितित्वं चानुवाद्यम् । तदुभयमप्युत्तरार्धे विपरीतं ज्ञेयमिति ।

**किञ्चिद् वच्मीति** । भवादृशेषु पतिषु सत्सु स्वेषामात्मीयानामदोषे दमा दोषं विना सर्वस्वापहारिणः केऽपि न दृश्यन्ते केवलं त्वदीया एव गुणा ईदृशाः सन्ति । एतदेव सवितर्कमाह—ते किं सन्तीति । हृदयं हि सर्वस्य सर्वस्वभूतमेवेति ।

1. I drops असकृद् यथा. 2. A चाद्यम्. 3. A, B drop न. 4. E drops हि.

ते किं सन्ति न सन्ति सन्ति यदि वा के सन्ति सन्तीदृशाः
[1]सर्वस्तेऽद्य गुणैर्गृहीतहृदयो लोकः कुतो वर्तते ॥ ४४५ ॥

**१०६) सत्यर्थेऽन्यार्थानां वर्णानां श्रुतिक्रमैक्ये यमकम् ॥ ३ ॥**

आवृत्तिरिति वर्तते । सत्यर्थे भिन्नार्थानां वर्णानां स्वरसहितव्यञ्जनानामुपलक्षणाच्च वर्णस्य वर्णयोश्चावृत्तिः श्रुत्यैक्ये क्रमैक्ये च यमौ

**वर्णस्येति** । वर्णस्य पादान्तरगतत्वेनावृत्तिर्न वैचित्र्यमादधातीति तस्मिन्नेव पादे आवृत्यन्तरविचित्रितायां नैरन्तर्येणावृत्तौ यमकता ज्ञेया । यथा—

नानाकारेण कान्तभ्रूराराधितमनोभुवा ।
विविक्तेन विलासेन ततक्ष हृदयं नृणाम् ॥ ४५६ ॥ [ ]

मध्यान्तयोरपि—

उदाररचनारोचिर्भासुरा राजते कथा । ४५७ । इति ।
अकलङ्कय शङ्काङ्कामिन्दुमौले मतिं मम ॥ ४५८ ॥

यथा वा—

विविधधववना नागगर्धनानाविविततगगनानाममज्जनाना ।
शशरुरुललना नावबन्धुं धुनाना मम हि हिततना नाननस्वस्वनाना ॥ ४५९ ॥
[ काव्यालङ्कारसूत्र ४.१.२, हरिप्रबोधादुद्धृत. ]

विविधानि धववनानि यस्याम् । नागान् हस्तिनो गृध्यन्ति अभिलपन्ति ऋक्षाश्चतुरा महान्तो वा नानाप्रकारा ये वयः पक्षिणो व्याडादयस्तैर्व्याप्तं गगनं यस्याम् । अविद्यमानो नाम्नो नमनं यत्र तथाभूतं कृत्वा मज्जन्तो जना यत्र । अनितीत्यना संस्फुरेति यावत् । स्त्रीरूपिणी वा । शशानां रुरूणां च ललनं यस्याम् । नौ आवयोः । अबन्धुं शत्रुं धुनाना । मम यस्माद् हितं तनोति । [2]अमुख आत्मीयः स्वन एव आनः प्राणो यस्याः सा । एवं समुद्रभूर्हरिणा हलधरं प्रत्यभिधीयते । **वर्णयोर्यथा**—

भ्रमर द्रुमपुष्पाणि भ्रम प्रीत्यै पिबन्मधु ।
का कुन्दकुसुमे प्रीतिः काकुं कृत्वा विरौषि यत् ॥ ४६० ॥ [ ]

तस्मिन्नेव पादे यथा—

हन्त हन्तररातीनां धीर धीरर्धिता तव ।
कामं कामन्दके नीतिरस्याऽऽरस्या दिवानिशम् ॥ ४६१ ॥ इति ।
[ ]

1. S °सर्वस्तेषु गुणै°. 2. E अमुख्य आ°.

द्वौ समजातौ तत्प्रतिकृतिर्यमकम् । तेनैकस्याक्षरस्य द्वयोर्बहूनां वा द्वितीयं सदृशं निरन्तरं सान्तरं वा शोभाजनकमलङ्कारः ।

मधुपराजिपराजितमानिनी.. .....। ४४६ ।　(हरविजय ३.२)

इत्यादावुभयेषामनर्थकत्वे

.. .. ..स्फुटपरागपरागतपङ्कजम् । ४४७ ।　(शिशुपाल० ६.२)

इत्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वेऽन्यार्थानामिति न युज्यते वक्तुमिति सत्यर्थे—इत्युक्तम् । न च तदर्थस्यैव शब्दस्य पुनः शक्यमुच्चारणं पौनरुक्त्यप्रसक्तेरिति सामर्थ्यलब्धेऽपि भिन्नार्थत्वे यत्र स एवार्थः प्रसङ्गेन पुनः प्रतिपिपादयिषितो भवति [1]बन्धबन्धुरत्वादिना च प्रयुक्त एव शब्दः पुनः प्रयुज्यते—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ॥ ४४८ ॥

(सुभाषितावलौ २२०)

इत्यादौ तत्र पौनरुक्त्यदोषाभावाद् यमकत्वं केन निवार्येतेत्यन्यार्थानामित्युपात्तम् । श्रुत्यैक्यग्रहणं लोकप्रतीतितुल्यत्वपरिग्रहार्थम् । तेन दन्त्यौष्ठ्यौष्ठ्यवकारबकारादिवर्णभेदे लघुप्रयत्नतरालघुप्रयत्नतरकृते च भेदे, संयोगस्थयोः सजातीययोर्व्यञ्जनयोर्वास्तवे विशेषे यमकबन्धो न विरुध्यते । यथा—

तस्यारिजातं नृपतेरपश्यदवलम्बनम् ।
ययौ निर्ज्झरसंभोगैर[2]पश्यदबलं वनम् ॥ ४४९ ॥

अवलम्बनं पार्ष्णिग्राहाक्रन्दासारादि । प्रपातपानीयास्वादैः पानीयानि तनूकुर्वत् । अबलं सैन्यरहितं वनं काननम् । अत्रैकत्र वबौ दन्त्यौष्ठ्यौष्ठ्यौ । अपरत्र ओष्ठ्यदन्त्यौष्ठ्यौ । अपश्यदित्येकत्रैकः शकारोऽपरत्र द्वौ । तथा—

भवानि ये निरन्तरं तव प्रणामलालसाः ।
मनस्तमोमलालसा भवन्ति नैव ते क्वचित् ॥ ४५० ॥

[देवीशतक ५९]

1. S, I 4 बन्धुबन्धुरत्वादिना. 2. S °पश्यद°.

चित्तमोहमलेन जडाः। अत्र लालसेति प्रथमलकारोऽलघुप्रयत्नतरः। मलालसेत्यत्र तु लघुप्रयत्नतरः। तथा नकार-णकारयोरस्वरमकार-नकारयोर्विसर्जनीयस्य भावाभावयोरपि न विरोध इति केचित्। यथा—

वेगं हे तुरगाणां जयन्नसावेति भङ्गहेतुरगानाम् ॥ ४५१ ॥
[　　　　]

पातयाशु रथं धीर समीरसमरंहसम्।
द्विषता जहि निःशेषं पृतनाः समरं हसन् ॥ ४५२ ॥ [　　　　]

द्विषतां मूलमुच्छेत्तुं राजवंशादजायथाः।
द्विषद्वयस्त्रस्यसि कथं वृकयूथादजा यथा ॥ ४५३ ॥ [　　　　]

क्रमैक्यग्रहणात् 'सरो रसः' इत्यादौ।

प्रवण[1] प्रणवो यत्र प्रथमः प्रमथेषु[2] यः।
रणवान् वारणमुखः स वः पातु विनायकः ॥ ४५४ ॥ [　　　　]

इत्यादौ च यमकत्वं मा भूत्।

१०७) तत्पादे भागे वा ॥ ४ ॥

तद् यमकं पादे तस्य च भागे भवति। तत्र पादजं पञ्चदशधा। तथा हि—प्रथमो द्वितीयादौ वर्तते द्वितीयस्तृतीयादौ। तृतीयश्चतुर्थ इति षट्। प्रथमो द्वितीयतृतीययोर्द्वितीयचतुर्थयोस्तृतीयचतुर्थयो-र्द्वितीयस्तृतीयचतुर्थयोरिति चत्वारः। प्रथमस्त्रिष्वपीत्येकः। प्रथमो द्वितीये तृतीयश्चतुर्थे इति। प्रथमश्चतुर्थे द्वितीयस्तृतीय इति द्वौ। अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे इति। यथा—

चक्रं दहतारं चक्रन्द हतारम्।
खड्गेन तवाजौ राजन्नरिनारी ॥ ४५५ ॥　　[रुद्रट ३.४]

कश्चिद् राजानमाह—समूहम्, घ्नता, अरिसंबन्धि, रुरोद भ्रमाशा अत्यर्थम्।

1. P, S ताप?　2 S प्रथमेषु

संयतं याचमानेन यस्याः प्रापि द्विषा वधः ।
संयतं या च मानेन युनक्ति [1]प्रणतं जनम् ॥ ४५६ ॥
[देवीशतक १४]

रणं, देव्याः, जितेन्द्रियं, पूजया, ज्ञानेन वा ।

प्रभावतो नामन वासवस्य प्रभावतोऽ नाम नवासवस्य ।
प्रभावतो नाम नवा सवस्य विच्छित्ति[2]रासीत्त्वयि विष्टपस्य ॥ ४५७ ॥
[ ]

प्रभावात् । शक्रस्य । तेजस्विनः । नामन नतेः कारक । अनाम नमनरहित । अतश्च विष्टप्स्य प्रभौ स्वामिनि त्वयि नवसोमरसस्य सवस्य यज्ञस्य नवा विच्छेद आसीत् । नवा-इत्येक एव निपातः प्रतिषेधार्थः । नामेत्यभ्युपगमे निपातः । इत्यादि ।

अर्धावृत्तिर्यथा --

सा [3]रक्षताद‌पाग ते रसकृद्गौर[4]बाधिका ।
मारक्षतादपारात[5]रसकृद्गौर[6]वाधिका ॥ ४५८ ॥ [देवीशतक १६]

मा देवी, त्रायताम्, अनन्ता, तव, रागकृदभिमतं वस्त्वित्यर्थः । वाग्रूपा, पाल्नी, उत्कृष्टक्षतेः, अपगतविपक्षात्, अविरतम्, गौरवेणाधिका सर्वेषां गुरुरित्यर्थः ।

श्लोकावृत्तिर्यथा --

स त्वारं भरतो वश्यमवलं वित्ततारवम् ।
सर्वदा रणमा[7]नैषीदवानलसमस्थितः ॥ ४५९ ॥
[रुद्रट ३·१८]

सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानल समस्थितः ॥ ४६० ॥
[रुद्रट ३·१९]

1. I प्रणती. 2. I °राशीत्त्वयि. 3. I रक्षतो. 4. S, I बाधिका. 5. S drops र.
6. I बाधिका. 7. I drops from सत्त्वारम्भ to °स्थितः.

महापुरुषः, पुनः, शत्रुसमूहम्, भरात्, वशे वर्तमानम्। बल्रहितं, दीर्घाक्रन्दं, सर्वकालं संग्रामं प्रापयामास। अवानल्सं अपि तु त्वरितं गच्छन्। अस्थीनि तस्यत्युपक्षिणोति[1]। सत्त्वेन ये आरम्भास्तेषु रतः। सर्वथा आश्रितं तरुत्वग् वसनं येन शत्रुसमूहेन। सर्वेषां दारणे यो मानस्तमिच्छति। दवाग्निना समं स्थितं यस्य।

तथा भागजस्य द्विधा विभक्ते पादे प्रथमपादादिभागः पूर्ववद् द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्वित्यष्टाविंशतिर्भेदाः। श्लोकान्तरे हि न भागावृत्तिः संभवति। यथा—

सरस्वति पदं चित्तसरस्वति विधेहि मे।
त्वा विना हि न शोभन्ते नराः काया इवामुभिः॥ ४६१॥
[ ]

करेण ते रणेष्वन्तकरेण द्विषता हताः।
करेणवः क्षरद्रक्ता भान्ति सन्ध्या घना इव॥ ४६२॥
[काव्यादर्श ३.२६]

भवानि शं विधेहि मे भवानिशं कृपापरा।
उपासनानि यज्जनोऽभवानि शसति त्वयि॥ ४६३॥
[ ]

**चित्तसरस्वतीति।** चित्तसमुद्र।

**अन्तकरेणेति।** द्विषतामन्तविधायिना।

**भवानीति।** हे गौरि, शं सुखम्। अनिशमनवरतम्। न विद्यते जन्म येभ्यस्तान्यभवानि॥

1. P क्षणोति.

+ In all the Mss. of the Viveka this *pratika* comes after परागत. But the order of verses adopted in the original according to P, S and L require it to precede परागत. It seems that the Mss. of the Viveka follow the original of I

पैरागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः ।
परागतमिव क्वापि परागततमम्बरम् ॥ ४६४ ॥

[काव्यादर्श ३.२७]

पातु वो भगवान् विष्णुः सदा नवघनद्युतिः ।
स दानवकुलध्वंसी सदानवरदन्तिहा ॥ ४६५ ॥

[काव्यादर्श ३.२८]

पदद्वयं कपालिनः पुनातु लोकपालिनः ।
अलीयते नतो हरिः स यत्र पङ्कजप्रभे ॥ ४६६ ॥ [ ]

एवमन्यान्यप्युदाहार्याणि ।

**परागतेति**। परा प्रतिपक्षभूता पर्वते तरुपङ्क्तिरिव। अत्र च व्यतिकरे परागेण रणरेणुना व्याप्तं गगनं परागतमिव न जाने क गतमित्यर्थः ।

**सदेति**। सर्वदा। स इति विष्णुः। समदस्य कुवलयापीडाख्यस्य वरदन्तिनो हन्ता ।

तत्र पादद्वयगतत्वेन '**सरस्वति**' इत्याद्युदाहरणमेकमेव प्रदर्शितम् । पादत्रयगतत्वेन च यमकं केषांचिन्नाभिमतमिति, लक्ष्यव्याप्तिदर्शनाय '**करेण**' इत्याद्युदाहरणचतुष्टयं दर्शितम्। एतेषु च प्रथमपादाद्यभागस्य द्वितीयपादाद्यभागेष्वावृत्तिर्दर्शिता। पादान्त्यभागस्य द्वितीयपादान्त्यभागेनावृत्तिप्रदर्शनार्थं तु **पदद्वय**मित्याद्युदाहृतम् ।

**अन्यान्यपीति**। तत्रोदाहृतशेषाण्याद्यभागजानि यथा—

सरस्वति यथा रत्नान्यनन्तानि स्फुरन्ति हि ।
सरस्वति तथा चित्ते शब्दार्थाः संस्फुरन्तु मे ॥ ४६२ ॥
परमा या समृद्धिः स्यात् सुखदुःखविवर्जिता ।
तस्या हेतुं नमामीशं[7] परमायाविनाशनम्[8] ॥ ४६३ ॥
योगिगम्य गुणातीतं मधुकेतुं विभुं हरिम् ।
मधु केतुं नमाम्याद्यं[9] दसदैत्यविनाशनम् ॥ ४६४ ॥ [ ]

1. I puts this verse and the next before भवानि श etc. 2. E drops from पादत्रय° to दर्शितम्। 3. D, E °द्विभागस्य. 4. D द्विभा°. 5. E adds प्रथमभागान्तपादस्य before पादान्त्य. 6. E drops तु. 7. A drops from शं परमा. 8. C °विनाशनाम्. 9. A drops from म्याद्यं to शनम्.

त्रिधा विभक्ते द्वाचत्वारिंशत्। चतुर्धा विभक्ते षट्पञ्चाशत्। प्रथमपादादिगतान्त्यार्धादिभागा द्वितीयपादादिगताद्यार्धादिभागे यम्यन्त इत्याद्यन्वर्थतानुसरणेनानेकभेदमन्तादिकादिकम्। अन्तादिकमाद्यन्तकं

मधोः केतुरिव। मधु ब्रह्म केतुं ज्ञातुम्। 'कि कितं ज्ञाने' ['कि-कितौ ज्ञाने' –सिद्धहेम° ३·१४ अन्ते] इत्यस्य।

प्रणमामि सुरारिघ्नं शिवं सोमं भवान्तकम्।
यो बिभर्ति प्रपन्नेषु शिवं सोमं च मूर्धनि ॥ ४६५ ॥ [ ]

सह उमया।

सुरासुरशिरोरत्नघृष्टपादनखांशवे।
शंकराय नमस्तस्मै शंकराय जगत्त्रये ॥ ४६६ ॥ [ ]

सुखकराय।

पयोधरारवाः स्वराः पयोधरा जवान्विताः।
पयोधरान् संरन्त्यतोऽ पयोधरान वियोगिनः ॥ ४६७ ॥
[ ]

जलधारी आरवो येषाम्। दुःसहाः। मेघाः। कुचान। असंजातस्तन्यान।

माधवाय नमस्तस्मै धेनुकान्तविधायिने।
धेनुकान्तगृहस्थायोमाधवाय नमोऽस्तु ते ॥ ४६८ ॥ [ ]

धेनुको नाम खररूपधारी विष्णुघानाय कंसप्रयुक्तो दैत्यः। गोवल्लभगृहभासीनाय।

जगदेकगुरुर्यो हि जगदे कमलोद्भवा।
भवतः पातु देवोऽसौ भवतः पार्वतीप्रियः ॥ ४६९ ॥ [ ]

जगदेकगुरुरिति ब्रह्मणा यः कथितः। युष्मान्। संसारात्।

देवि त्वा ये गिराजस्र सत्यसन्धेत्युपासते।
देवित्वाऽऽये भजन्ते ते सत्यसंधेयसम्पदाम् ॥ ४७० ॥

एतानि वृत्त्युदाहरणपञ्चकेन सहाद्यभागजानि चतुर्दश। एवमन्त्यभागजान्यप्युदाहरणीयानि।

**अन्तादिकमिति**। दिङ्मात्रम्। यथा—

1. S drops कादिकं. I drops °दिका. 2. E कितथा. 3. E °न्तिकम्. 4. °सरन्त्येते. 5. A, B °स्तनान्. 6. A चतुर्दशेः. B चतुर्दशे.

तत्समुच्चयः। मध्यादिकर्मादिमध्यमन्तमध्यं मध्यान्तकं तेषां समुच्चयाः। तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वनियतेऽवस्थान आवृत्तिरिति प्रभूततमभेदं यमकम्।

नारीणामलसं नाभि लसन्नाभि कदम्बकम्।
परमाक्रमनङ्गस्य कस्य नो रमयेन्मनः ॥ ४७१ ॥

[रुद्रट ३·२४]

अलसं क्रियासु सविलासम्। न अभि अपि तु सभयम्। आद्यन्तकं यथा—

पिनाकिने नमस्त्रातदैत्यभीवेपिनाकिने।
नीलकण्ठमपीक्षन्ते योगिनो हंसमेव यम् ॥ ४७२ ॥ [ ]

भीवेपिनो भयकम्प्राः।

**तत्समुच्चय इति।** आद्यन्तकान्तादिकयोर्योगः। यथा—

ससार साकं दर्पेण कन्दर्पेण ससारसा।
शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा ॥ ४७३ ॥ [रुद्रट ३.३५]

प्रवव्रुने। सार्धम्। दर्पेण कामेन च। लक्ष्मणाख्यपक्षियुक्ता। काण्डम्। नूतनशकटा। धारयन्ती। न अविभ्राणा अपि तु पक्षिशब्दयुक्ता। ऋतुविशेषः। नूतना। एवं मध्यादिक-आदिमध्य-अन्तमध्य-मध्यान्तकतत्समुच्चयानामुदाहरणान्यभ्यूह्यानि। मध्यादिकादयो भेदाः संभविनोऽपि न हृद्या इति नोदाह्रियन्त इति केचित्।

**तस्मिन्नेव पादे इति।** न तु पादान्तरे। तत्रादिभागस्य मध्यभागेनावृत्तिर्यथा—

स रणे सरणेन नृपो बलितावलितारिजनः।
पदमाप दमात्स्वमतेरुचित रुचितं च निजम् ॥ ४७४ ॥

[रुद्रट ३.५३]

स संग्रामे। प्रयाणेन हेतुना। बलवत्त्वेन वेष्टितारिजनः। पदं राज्यलक्षणम्। उपशमाद् हेतोः। अनुरूपमभीष्टं च। आदिभागस्यान्तभागेन यथा—

घनाघ नाथं न नभा घनाघनानुदारयन्नेति मनोऽनु दारयन्।
सखेऽदयं तामविलासखेदयन्नहीयसे गोरथवा न हीयसे ॥ ४७५ ॥

[रुद्रट ३·५४]

1. S °कर्मादि°.

एतत्पथिकस्य प्रावृषि सुहृदोच्यते—बहुपाप । श्रावणे मासो वार्षुकमेघान् विस्तारयन् नायमेति । मनोऽर्थाद् विरहिणाम् । पश्चात् स्फोटयन् । निर्दयं तां कान्ताम् । निर्लील । उद्वेजयन् । सर्पवदाचरसि । यद्वा कियत्तवैतद्वलीवर्दाभ्यूनो न भवसि ।

मध्यस्यान्तेन यथा—

असतामहितो महितो युधि सारतया रतया ।
स तयोरुरुचे रुरुचे परमेभवते भवते ॥ ४७६ ॥ [रुद्रट ३·५५]

अननुकूलः । अत एव पूजितः । उत्कृष्टतया बलवत्तया वा । तदेकरक्तया । स कश्चिद् वीरः । प्रसिद्धया । विस्तीर्णकान्तये । प्रीतिमुत्पादितवान् । प्रकृष्टगजयुक्ताय । तुभ्यम् ।

आदेर्म[1]ध्यान्ताभ्यां यथा—

स्तेनतास्तेनतास्ते[2] नता मानवामा नवा मानवाः ।
दानवादानवा दानवा[3] वा नरावाऽनरा वानराः ॥ ४७७ ॥ [ ]

चिरंतनस्य कस्यचिदनुचरस्य तत्कालीनानामनुजीविनामात्मसमर्पणेन केनचिन्नरपतिनापमानितस्य तमेव प्रतीयमुक्तिः—हे नराव नृप । तव प्रणताः । नूतनाः । पुरुषाः । स्तेनतया चौर्येण क्षिप्तस्वामिलक्ष्मीकाः । दर्पेण प्रतिकूलाः । दानकथायामस्तुतिपराः । दानवा एव । 'नृ [नॄ] नये' इत्यस्य नरो न्यायस्तद्रहिता वानरा एव चेति ।

अनियते स्थाने आवृत्तिर्यथा—

कमलिनीमलिनी दयितं विना न सहते सह तेन निषेवितम् ।
तमधुना मधुना निहितं[6] हृदि स्मरति सा रतिसारमहर्निशम् ॥ ४७८ ॥
[रुद्रट ३·५७]

पद्मिनीम् । भ्रमरी । न[7] क्षमते । तां दृष्ट्वा तप्यन् इत्यर्थः । सार्धम् । तं प्रियम् । इदानीम् । वसन्तेन । क्रीडाप्रधानम् ।

**प्रभूततमभेदमिति** । महाकविभिराद्दतस्यानियतदेशावयवस्य यमकस्यासंख्यत्वात्, इत्यर्थः ।

1. C interpolates °नुजीविन्यन्ता between मध्या and भ्यां. 2. C omits the last स्ते नता. 3. C, B omit the last दानवा. 4. B omits one वानरा. 5. E एवेति 6. E नियत. 7 E drops न.

एतस्य च कविशक्तिख्यापनमात्रफलत्वेन पुरुषार्थोपदेशानुपायत्वात् काव्यगड्डुभूतेति भेदलक्षणं न कृतम् । काव्यं हि महाकवयः सुकुमारमतीनां पुरुषार्थेषु प्रवर्तनाय विरचयन्ति । न च पृथग्यत्ननिर्वर्त्ययमकादिनिरुद्धरसं तत्तथा सुखोपायः । सरित्पर्वतसागरादिवर्णनमपि वस्तुवृत्त्या रसभङ्गहेतुरेव, किमङ्ग न कष्टकाव्यम् । तथा च लोल(? ल्ल)टः ।

(33) यस्तु सरिदद्रिसागरनगतुरगपुरादिवर्णने यत्नः ।
कविशक्तिख्यातिफलो विततधियां नो मतः प्रबन्धेषु ॥
यमकानुलोमतदितरचक्रादिभिदोऽतिरसविरोधिन्यः ।
अभिमानमात्रमेतद्गड्डरिकादिप्रवाहो वा ॥ इति । [ लोल(? ल्ल)टः ]

**१०८) स्वरव्यञ्जनस्थानगत्याकारनियमच्युतगूढादि चित्रम् ॥ ५ ॥**

स्वरादीनां नियमश्च्युतं गूढादिश्च चित्रसादृश्यादाश्चर्यहेतुत्वाद् वा चित्रम् ।

तत्र स्वराचित्रं यथा--

जय मदनगजदमन वरकलभगतगमन ।
गतजननगदमरण भवभयगनरशरण ॥ ४६७ ॥ [ ]

हृस्वैकस्वरम् । एवं दीर्घैकस्वरद्वित्र्यादिस्वरनियम उदाहार्यम् ।

**न च पृथग्यत्ननिर्वर्त्येति** । यदाह **ध्वनिकारः**—

(132) रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥ इति ॥
[ ध्वन्यालोक २·१७ ]

**दीर्घैकस्वरद्वित्र्यादिस्वरनियम** इति । दीर्घैकस्वरनियमे यथा—
वैधैरैनैरशैरैन्द्रैरैजैरैलैजैनैः सैद्धैः ।
मैत्रैनैकैर्वै धैर्यैः स्वैं रैदैः स्वैधै दैवैस्तैस्तैः ॥ ४७९ ॥ [ ]

1. S °पदेशेऽनु°. 2. P, I, L °पुरारि°. 3. I, L °श्च्युतगूढादिश्च. 4. E °पद°.

व्यञ्जनचित्रं यथा —

न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥ ४६८ ॥

[किरात० १५.१४]

रणपराङ्मुखा गणाः कुमारेण जगदिरे इति प्रक्रमः । हे नानानना अनेकरूपवदनाः, स न ना, न पुरुषो, य ऊनेन हीनेन जितः । विजितहीनोऽपि पुरुषोऽपुरुषः । ननु सम्बोधने । जितोऽप्यजित एव यो न जितप्रभुः । सोऽपि पाप एव, यो जितं जितं नुदतीति । एकव्यञ्जनम् । एवं द्वित्र्यादि व्यञ्जननियमे उदाहार्यम् ।

विधिर्विरञ्चिः । ईर्लक्ष्मीस्तस्या इनो भर्ता विष्णुः । ईश शिव. । इन्द्रो हरिः । ईजः कन्दर्पः । इला भूः । जिनोऽर्हन् । गिद्धा देवविशेषा । मित्रो रविः । रैदो धनद । देवा. सुराः । तेषां सम्बन्धिभिः तैस्तैः । अनेकैर्धैर्यैः रैर्वित्तैश्च वै स्फुटं स्तुतः । समन्तादेधं समृद्धो भवान्यहम् ।

द्विस्वरनियमे यथा –

धिर्तिरिर्थातिमिर्तिक्षिभि–र्विधिर्विनिर्भिगिद्धिलिट ।
मम त्र्यक्ष नमद्दक्ष हर स्मरहर स्मर ॥ ४८० ॥ [ ]

पृथिव्या. पालनपरिच्छेदप्रेरणासूत्रीर्वेत्ति निभिसिद्धी लेढि चेति क्विपि सबोधनं मा स्मरेति ।

त्रिस्वरनियमे यथा—

क्षितिविजितिस्थिति–विहितिव्रतरतयः परगतयः ।
उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥ ४८१ ॥

भूमेविजयस्य मर्यादायाश्च विधाने नियमपराः । विस्तीर्णम् । रुद्धवन्तः । दुःसहम् । विक्षिप्तवन्तश्च । युधिष्ठिरादयः । आदिग्रहणाच्चतु स्वरादिनियमेऽप्यभ्यूह्यम् ।

**द्विव्यादिव्यञ्जननियमे** इति । द्विव्यञ्जननियमे यथा—

भूरिभिर्भारिभिर्भीराभूभारैरभिरेभिरे ।
भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ ४८२ ॥ [शिशुपाल० १९.६६]

1. I नागनानना ननु. 2. E °वाम्य°. 3 A, B, C, D °परिच्छेदं प्रेरण°.
4 A मा. 5 E द्विव्यं° 6 C भिरेभेरवोरेभिभिरिभार°. E रभ्राभैर°.

स्थानमुरःकण्ठादि । तच्चित्रं यथा—

अगा गां गाङ्गकाकाकगाहकाघककाकहा ।
अहाहाङ्गखगाङ्कागकङ्कागखगकाकक: ॥ ४६९ ॥ [ काव्यादर्श ३·९१ ]

कश्चित्पुरुषः स्तूयते—हे गाङ्गकाकाकगाहक गङ्गासम्बन्धीपज्जलकुटिलगतिविलोडक, त्वं कुत्सितपापान्येव वायसास्तेषां हन्ता । जिहीते[1]: क्विपि हानं हाः । न हां गतिं जहाति यत्तथाविधमङ्गं यस्य स खगः सूर्यश्चिहं यस्य स गिरिरर्थान्मेरुस्तत्र कङ्काख्याः पर्वतपतत्रिणः काककाः[2] शब्दकारिणो यस्य । स त्वं पापहा मेरुनिवासिभिः पक्षिभिरपि प्रख्याप्यमानकीर्तिर्गामगाः स्वर्गं गतोऽसीत्याशंसायां भूतवन्निर्देशः । कायति अर्थमभिधत्त इति काकः शब्दः औणादिके के तं करोतीति णिचि तदन्तात्[3] णके च काककः । कण्ठस्थानम् । एवं द्वित्र्यादिस्थानानियम उदाहार्यम् ।

बहुभिः । कङ्कटपताकादिभारयुक्तैः । भयप्रदाः । भुवो भारभूतैः । ढुढौकिरे । संजग्मिरे इति यावत् । दुन्दुभिवन्नदनशीलैः । मेघश्यामैः । निर्भयै[4]र्गजैः । गजा ।

त्रिव्यञ्जननियमे यथा—

देवानां नन्दनो देवो नोदनो देवनिन्दिनः ।
दिव दुदाव नादेन दाने दानवनन्दिनः ॥ ४८३ ॥

[ काव्यादर्श ३·९३ ]

देवो विष्णुः । स्वर्गमुपतापयामास किमिद[5]मित्युपजातशङ्कमकरोत् । नादेन वक्षोस्थिशब्देन । दाने विदारणे । दानवनन्दिनो हिरण्यकशिपोः ।

आदिग्रहणाच्चतुर्व्यञ्जनादिनियमेऽप्यभ्यूह्यम् ।

**द्वित्र्यादिस्थाननियम** इति । द्विस्थाननियमे यथा—

अनङ्गलङ्घनालग्ननानातङ्का सदङ्गना ।
सदानघ[6] सदानन्दिन् नताङ्गा[7]सङ्गसंगत ॥ ४८४ ॥ [ काव्यादर्श ३·९० ]

1. S °जिहाते:. 2. P I, L कका°. 3. तदन्तादकेणि च. 4. E निर्भरैः. 5. A, B कि.मित्युप°. 6. A gives सदानघ twice. C drops सदानघ. 7. E संगता.

कश्चित्कामिनमन्यासक्तं निजवधूनिमित्तं सानुनयं काचिदाह—हे सततमपाप, सतामानन्दकारिन्, प्रणताङ्गेष्वनुरागयुक्त सा सल्लना कामाक्रमणविलमानेकपीडा वर्तते । तत्तां रक्षेत्यर्थः । दन्तकण्ठलक्षणं स्थानद्वयमत्र ।

त्रिस्थाननियमे यथा—

अलिनीलालकलत क न हन्ति घनस्तनि ।
आननं नलिनच्छायनयनं शशिकान्ति ते ॥ ४८५ ॥

[ काव्यादर्श ३·८९ ]

अलिवन्नीला अलका एव चञ्चलत्वादिना लता यत्र । दन्त[1]तालुकण्ठलक्षणं स्थानत्रयमत्र । एवं चतुःस्थानादिनियमेऽप्युदाहार्यम् ।

**अर्धगतप्रत्यागतेत्यादि** । अर्धगतप्रत्यागतं यथा—

वेदापन्ने स श[2]क्ले रचितनिजरुगुच्छेदयत्नेऽरमेरे
देवासक्तेऽमुदक्षो वलदमनयदस्तोदुर्गासवासे ।
सेनाम्नर्गादुदस्तोऽदयनमदलवक्षोदमुक्ते सवादे
[3]रेमे रत्नेऽयदच्छे गुरुजनितचिरक्लेशसन्नेऽपदावे ॥४८६॥ [रुद्रट ५·१७]

स कश्चित् कस्मिन् रत्ने रत्नभूते पुरुषे रेमे निर्वृतोऽभवत् । वेदान् आपन्ने । प्रियवदे । क्रूनः सहजाया अविद्याख्यरुज उच्छेदे यत्नो येन । न रमन्ते सुजनेषु धर्मे चेत्यस्मान् दुर्जनानीरयति यः । देवभक्ते । अविद्यमानहर्षाण्यक्षाणि यस्य स. । जितेन्द्रिय इत्यर्थः । शक्त्युपशमनीतीनां दाता । व्यथायाः परकृताया दुर्गा इव दुर्गा. । शरा इत्यर्थः । तानपि क्षिपन्ति ये तेषां स्थाने । राजप्रणतिकरणान्नियुक्त. । अदयया दर्पोत्थेन हिंसया च त्यक्ते । प्रमाणशास्त्रकुशले । अयमनुकूलं दैवं ये यान्ति खण्डयन्ति तान् द्यति छिनत्ति यः । यदि वा अयन अगच्छन अच्छो नैर्मल्य नाम गुणो यस्य तस्मिन शुद्धचरिते । गुरुभिः शुश्रूष्यमाणे जनितो यश्चिर क्लेशस्तेन श्रान्ते तत्र वा सक्ते । पदरहितानवति यः ।

**श्लोकगन[4]प्रत्यागतं** यथा—

निशितासिरतोऽभीको न्येजतेऽमरणा रुचा ।
सारतो न विरोधी न (? नः) स्वाभासो भरवानुत ॥ ४८७ ॥

[ किरात० १५·२२ ]

तनुवारभसो भास्वानधीरोऽविनतोरसा ।
चारुणा रमते जन्ये कोऽभीतो रसिताशिनि ॥ ४८८ ॥

[ किरात० १५·२३ ]

1. E दन्तातालु° 2 D शक्ते. 3. E drops from रेमे to पुरुषे in line 15.
4 A drops प्रत्यागत.

कुमारेण गणा जगदिरे इति प्रक्रान्तम् । हे अविद्यमानमरणाः । तीक्ष्णखड्गप्रसक्तः । भीरहितः । बलात् । न न विरोधी । सुष्ठु आभासत इति स्वाभासो दर्शनीयः । धुर्यश्च । उतः चार्थे । वर्मणा बभस्तिः । तेजस्वी । रुचा तेजसा हेतुना न्येजते न कम्पते । निशब्दः प्रतिषेधार्थः । कः पुनरधीरो भयवान् । सिंहनादे नादनशीले समरे कमनीयेनोन्नतवक्षसा । क्रीडतीति । सर्वतोभद्रं यथा—

जितानया या नैताजितारसाततसारता ।
न सावना नावसानयातनारिरिना तया ॥ ४८९ ॥　　[ देवीशतक २५ ]

जिता अनीतयोऽननुकूलदैवं वा यया । प्रणतानां रणात्तारणं आतननमाततं सह तेनेति सविस्तरा दृढता । बहुतरं दार्ढ्यमित्यर्थः । न न सरक्षणा । अर्थाद् भक्तानाम् । अन्तकालदुष्कृतः विपाकताडनाया वैरिणी स्वामिनी तयेत्युत्तरणे संबन्धः । अत्र न केवलमधोधः क्रमेण स्थितानां पादानां प्रातिलोम्येन स्थितिर्यावदर्धभ्रमस्यापि । तत्र हि प्रथमादिपादानां प्रथमैश्चतुर्थतृतीयद्वितीयप्रथमपादानामष्टमैश्चाक्षरैः प्रथमः पादः । एवं द्वितीयसप्तमैस्तृतीयषष्ठैश्चतुर्थपञ्चमैश्च द्वितीयतृतीयचतुर्थपादाः । इह च सर्वं तदेवोपलभ्यत इत्यर्धभ्रमस्याप्यवस्थानात् सर्वतोभद्रम् ।

अर्धभ्रमं यथा—

ससत्त्वरतिदे नित्यं सदरामर्षनाशिनि ।
त्वराधिककसन्नादे रमकत्वमकर्षति ॥ ४९० ॥　　[ किरात० १५·२७ ]

सपौरुषाणा रागप्रदे । सभयानां कोपापहारिणि । त्वरयाधिकप्रसरत्सिंहनादे रणरसिकत्वमपनयति ।

तुरङ्गपदागतं यथा—

सेना लीलीलीना नाली लीनाना नानालीलीली ।
नालीनालीले नालीना लीलीली नानानानाली ॥ ४९१ ॥

[ रुद्रट ५·१५ ]

1. A, B बलस्ति.　2. E drops नि.　3. E °नादेन ना°.　4. A, B, C, E नयाजि°.　5. A, B °त्युत्तरेण; C: the reading is unintelligible. 6. E drops द्वितीय.　7. E drops अर्धभ्रमं.　8. A, B, C, E all have some unnecessary additional letters. A: 55 b: a figure to represent the verse is drawn on the margin; B: through mistake the figure is drawn on a previous page (56 b); C, D, E have no figure.

सेना अहं ना पुरुषो लड(डल)योरेकत्वस्मरणमिति ईले स्तौमि । लीला विद्यन्ते येषा तान् लीलिन' ईट्टे स्तौतीत्येवंशीलो यः स स्वामी यासाम् । युद्धविषये सविलासान् नरानर्चयति यासां प्रभुरित्यर्थः । आल्मनर्थो विद्यते यस्य स नाहम् । लीनानि अनांसि रथादौ यस्य स' । नानाप्रकारा या आल्यो व्यूहरचनास्तासु या लीनेयन श्लेषस्तां लान्ति गृह्णन्ति ये ते विद्यन्ते यस्य । न आलीनानामाश्रितानामली भृङ्ग' उपजीवक. आलीनाः श्लिष्टाः । लीलिनी लीलावती इला भूर्येषां ते नृपा विद्यन्ते यस्येति मत्वर्थीय. । नानाप्रकारा नरो यस्य । आलवान् मूर्खः । न आली अनाली अमूर्ख' । अनेन तुरग खेल्यते । तथा हि—

(133) खाश्वो द्व्यग्निर्विधुशरः स्तनाश्व. सागराष्टमः ।
त्रिपृष्ठोऽब्ध्यम्बुधिस्त्र्यङ्घ्रि' खाग्निर्द्वीषुः खसप्तमः ॥
त्र्यन्तोऽब्धिपष्ठस्त्र्यम्भोधिस्तुर्याक्षिस्तनचन्द्रमा' ।
त्र्यग्निरब्धिस्तर्माङ्घ्र्य' खाम्भोधिर्वह्निसायकः ॥
वेदाश्वो द्विवसु' खर्तुस्त्र्यश्वः खान्तोऽङ्घ्रिषष्ठकः ।
तुर्येषुद्व्यब्धिराद्याङ्घ्रिस्त्र्याद्योऽब्ध्याग्निर्ययोर्गमः ॥ [ ]

खादिभिरंकादीनि लक्ष्यन्ते । अत्र च ससासस्थं पूर्वपदं पङ्क्तेरुत्तरपदं तु कोष्ठकस्य ग्राहकम् । ययोरश्वस्य गम सञ्चारपदमिति यावत । एवमेव च तुरङ्गफलकस्यापरेऽप्यर्धे खेलनीय ।

गोमूत्रिका यथा—

काङ्क्षन्पुलोमतनयास्तनताडनानि वक्षःस्थलोत्थितरयाञ्चनपीडनानि ।
पायादपायभयतो नमुचिप्रहारी मायामपास्य भवतोऽम्बुमुचां प्रसारी ॥४९२॥
[ ]

पादगोमूत्रिकेयम् । अर्धगोमूत्रिका यथा—

चूडाप्रोन्निन्दुभागद्युतिदलिततम'कन्दलीचक्रवालो
देवो देयाद्दार वमसरजनतानन्दनोऽनन्यधामा ।
क्रीडावृत्तेशभामा वसदननिमच्छेदनीव भ्रुवा नो
देहं देवी दुरीर दममस्तननानन्दिनोमाऽन्यधामा ॥ ४९३ ॥

शं सुखम् । असाधारणस्थान' क्रीडया अपनीतः शिवक्रोधो यया । भ्रुवा भ्रूक्षेपेण अस्माक शरीरे दुःप्रसार्यमुपशमं सन्ततप्रणता प्रतीहारेण । उमा च अपूर्वद्युतिः ।

1 E adds च 2. E drops ही. 3. E °दने च. 4. E दुबारं.
5. E दुरप°

गतिर्गतप्रत्यागतादिका, तच्चित्रं यथा—

वारणागगभीरा सा साराऽभीगगणारवा ।
कारितारिवधा सेनाऽनासेधा वरितारिका ॥ ४७० ॥

[ शिशुपाल० १९.४४ ]

करिगिरिदुर्विगाहा । उत्कृष्टा । अभीगानामप्राप्तभयानां भटसमूहानां जयध्वनिना युक्ता । विहितशत्रुक्षया । स्वार्थे णिग् । अविद्यमान आसेधो यस्याः । मया सह युद्ध्यध्वमिति वरिताः प्रार्थिता अरयो यया सा यदूनां सेना । द्विषतां बलं प्रयातेति पूर्वेण सम्बन्धः । अत्रायुक्पादयोर्गतिर्युक्पादयोः प्रत्यागतिरित्यर्धे ते एवेति पादगतप्रत्यागतम् ।

एवमर्धगतप्रत्यागतश्लोकगतप्रत्यागतसर्वतोभद्रार्धभ्रमतुरङ्गपदगोमूत्रिकादीन्युदाहार्याणि ।

आकारः खड्गमुरजबन्धाद्याकृतिः, तच्चित्रं यथा—

मारारिशक्रामेभमुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥ ४७१ ॥

श्लेकगोमूत्रिका यथा—

पायाद्वश्चन्द्रधारी सकलसुरशिरोलीढपादारविन्दो
देव्या रुद्धाङ्गभागः पुरदनुजदवः स्त्यानसंविन्निधानम् ।
कन्दर्पक्षोददक्षः सरससुरवधूमण्डलीगीतगर्वो
दैत्याधीशान्धकेनानतचरणनखः शङ्करो भव्यभाव्यः ॥ ४९४ ॥ [ ]

घनज्ञाननिधिः । भव्यैर्ध्येयः ।

देयान्नश्चण्डधामा सलिलहरकरो रुद्धकन्दाभविम्बो[1]
देहे रुग्भङ्गरागः सुरमनुजदमस्त्यागमम्पन्निधानम् ।
भन्दं दिक्[2]क्षोभदश्रीः सदसदरवधूखण्डनागीरगम्यो[3]ऽ
दैन्यैधी[4] बन्धहानावततरसनयः शंपुरो दिव्यसेव्यः ॥ ४९५ ॥ [ ]

तिग्मांशुः । रुजां विनाशे आसक्तः । भन्दं कल्याणम् । दिशां क्षोभदा श्रीर्यस्य । सत्योऽत[5] एव निर्भया या वध्वस्तन्निर्भर्त्सनवचसामविषयः । न दैन्यमेधयत इत्येवंशीलः । कर्मबन्धपरित्यागे विस्तीर्णरसो नयो यस्य । शं पिपर्ति पूरयति ।

आदिग्रहणाद्गजपदरथपदादीनि ज्ञातव्यानि ।

1. E °न्दाम्भ°. 2. C drops दिक्. 3. C, E °रवध्यो. 4. C, E °धीर्वं°. 5. A drops from सत्यो to रथ.

माता नतानां संघट्टः श्रियां बाधितसंभ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमादिजा ॥ ४७२ ॥
[ रुद्रट ५.६-७ ]

मारारिः शिवः । रामो मुसली । आसारतुल्यवेगेन सर्वेषामाद्या । खड्गः । तथा च द्राढिकान्तरे साधारणो मा-शब्दः । तस्य दक्षिणातोऽधःक्रमेण वर्णाश्चतुर्दश । शिखाया साधारणः साशब्दः । ऊर्ध्वक्रमेण वामतस्तावन्त एव यावन्माशब्दः साधारणः । एतत्फलम् । तस्यैव माशब्दस्य दक्षिणतो निःसरणक्रमेण वामतश्च प्रवेशक्रमेण वर्णाः सप्तसप्त । एषा द्राढिका । ततो माशब्दादूर्ध्वक्रमेण गण्डिकायां वर्णत्रयम् । उपरि माशब्दः साधारणः । तस्य दक्षिणतो वामतश्च तथैव चत्वारश्चत्वारो वर्णाः । एतच्च कुलकम् । ततस्तस्य माशब्दस्योपरि वर्णद्वयम् । एतन्मस्तकम् । सामामाशब्दा द्विःपञ्चकृत्वो द्विरावृत्ताः ।

या दमानवमानन्द-पदमाननमानदा ।
दानमानक्षमा नित्यधनमानवमानिता ॥ ४७३ ॥
[देवीशतक १५]

या इन्द्रियजयेन उत्तमो य आनन्दस्तस्य पदम् । विद्यया हि शम सुखलाभः । मुखस्य पूजां ददाति । निरपभ्रंशभाषणाद्धि मुखं पूज्यं भवति । दानमानक्षमा एव शाश्वतं धनं येषां तैः पुरुषैः पूजिता । मानं ज्ञानम् ।

मुरजबन्धः । तथा हि पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमाद्यक्षराणि चत्वारि । चतुर्थादिपादेभ्यः पञ्चमादीनि च चत्वारि गृहीत्वा प्रथमः पादः । द्वितीयात् प्रथमं प्रथमाद् द्वितीयतृतीये द्वितीयतृतीयाभ्यां चतुर्थे चतुर्थात् तृतीयद्वितीये । तृतीयात् पादात् प्रथममक्षरं गृहीत्वा द्वितीयः पादः । द्वितीयादष्टमं, प्रथमात् सप्तमषष्ठे, द्वितीयतृतीयाभ्यां पञ्चमे चतुर्थात् षष्ठसप्तमे तृतीयादष्टमं च गृहीत्वा तृतीयः

पादः । चतुर्थादिभ्यः प्रथमादीनि प्रथमादिभ्यः पञ्चमादीनि पादेभ्योऽक्षराणि गृहीत्वा चतुर्थः पादः । एवं मुसलधनुर्बाणचक्रपद्मादय उदाहार्याः ।

च्युतं मात्रार्धमात्राबिन्दुवर्णगतत्वेन चतुर्धा । तत्र मात्राच्युतकं यथा—

भूतियोजितभर्तव्यः कृपणाक्रान्तमण्डलः ।
महापदशुभावास त्वत्समः कुपतिः कुतः ॥ ४७४ ॥ [ ]

अत्र कृपणेति । विभूतिर्भस्म च । महापदेति शुभावासेति संबोधने पदद्वयम् । महापदोऽशुभस्यावासेति पदमेकं च ।

अर्धमात्राच्युतं यथा—

पयोधरभराक्रान्ते विद्युल्लेखाविराजिते ।
कान्तः सर्वजनाभीष्टो बाले दुःखेन लभ्यते ॥ ४७५ ॥ [ ]

मुसलेत्यादि । मुसलधनुषी यथा—

मायाविनं महाहावा रसायातं लसद्भुजा ।
जातलीलाऽयथासारवाचं महिषमावधीः ॥ ४९६ ॥

[ रुद्रट ५.८ ]

मामभीदा[1] शरण्या मुत् सदैवारुक्प्रदा च धीः ।
धीरा पविन्ना संत्रासात्त्रासीष्टा मातरारम ॥ ४९७ ॥

[ रुद्रट ५.९ ]

संदानितकमिदम्[2] । महान् हावश्चेष्टालङ्कारो यस्याः । वीररसेनागतम् । सारादनपेतं यथासारं न यथासारं वाग्यस्य । प्रतिज्ञाभ्रष्टमित्यर्थः । हे मातः, हतवती त्वम् । एवंभूता या सा त्वमारम व्यापारान्तरान्निवर्तस्व । मां भयात् त्रासीष्ठाः रक्ष्याः[3] । अभियं ददाति या मुत् हर्षरूपा । धीः संविद्रूपा ।

मुसलस्य न्यासो यथा—मा इत्यतःप्रभृत्यधोधःक्रमेण वर्णसप्तकम् । ततो वर्णदेशमात्रं दक्षिणपार्श्वे प्रसृत्याधोधःक्रमेण हस्तग्राह्यस्थानार्थं वर्णत्रयम् । ततो वामपार्श्वे प्रसृत्य वर्णपञ्चकम् । ततो मध्ये 'जा'शब्दः साधारणः ।

1. A, P, C, E मावमीदा. 2. E संदानिक°. 3. E drops रक्ष्याः.

तदुपरि दक्षिणपार्श्वे प्रसृत्योर्ध्वक्रमेण वर्णपञ्चकम् । तदुपरि वामपार्श्वे प्रसृत्य साधारणं वर्णत्रयम् । ततो दक्षिणपार्श्वे प्रसृत्य वर्णसप्तकम् ।

धनुषो न्यासो यथा—'मा'शब्दः शिखा, ततो माकारात् प्रभृत्याद्यमर्धं कुटिलमधःक्रमेण विन्यास्यम् । ततो 'धी'शब्दात् साधारणात् प्रभृति 'त्रा'-शब्दान्तमूर्ध्वक्रमेण न्यास । तत 'सं'शब्दः । पार्श्वे ततः 'त्रा' इति साधारणः । ततोऽपरपार्श्वे 'सा' इति । ततः 'त्रा' शब्दः साधारणः । ततोऽक्षरषट्कमूर्ध्वक्रमेण न्यासम् । ततो 'म' शब्दः साधारण· ।

बाणो यथा—

माननापरुषं लोकदेवीं सद्रस संनम ।
मनसा सादर गत्वा सर्वदा दास्यमङ्ग ताम् ॥ ४९८ ॥

[ रुद्रट ५·१० ]

पूंजयापगतो रोषो यस्यास्ताम् । त्रिभुवनदेवीम् । हे शोभनभक्तिरस । सम्यक् प्रणम । मनसा दास्यं गत्वा ता देवीम् । अङ्गेति प्रियाह्वाने । न्यासो यथा—अधोध क्रमेण वर्णचतुर्दशकम् । ततोऽक्षरद्वयं फलकार्थं (?र्ध) साधारणम् । तत ऊर्ध्वक्रमेणाक्षरचतुर्दशकम् । यथा वाँ—प्रथमपादेन ऊर्ध्वक्रमेण शर· । तत ऊर्ध्वं फलस्यादौ 'दे' तदूर्ध्वं च वामभागे 'वीम्' । मध्ये 'स·' । दक्षिणतो 'द्र·' । ततो मध्यसकार एव द्विः । तदुपरि फलाग्रे 'नमो' । अटनेर्वामत ऊर्ध्वक्रमेण 'मनौ' । मूले 'सा' साधारण· । दक्षिणतोऽधःक्रमेण 'दरम्' । दक्षिणवाजे ऊर्ध्वक्रमेण 'गत्वा सर्व' । तत· शरे 'सामा'वर्णयोरन्तरे 'दा' साधारण· वामवाजेऽध·क्रमेण 'स्यमङ्गताम्' ।

चक्रं यथा—

त्व वादे शास्त्रसक्तिन्या भासि वाचि दिवौकस ।
तवादेशास्त्रसंस्काराज्जयन्ति वन्दे द्विषः ॥ ४९९ ॥ [ देवीशतक ८० ]

हे अभिलषितदायिनि, वादे स्वपक्षपरपक्षपरिग्रहे शास्त्रसक्ताया भारत्या त्वम् । शोभसे । तथा देवा रिपूनभिभवन्ति । कुत तवाज्ञैवास्त्रं विना· शायाभिमन्त्रितं द्रव्यं तद्भावनाया हेतो ।

1 A, B साधार (?साधारात्) 2. E °पार्श्वत:. 3. A, B साधार: 4. E पूजाप°. 5 C °कार्धं फलसाधारम्. 6 A, B, C, D च. 7 A सोमा. 8. E °रम्बरे. 9 E तवादे°. 10. A, B °वनाय

अत्र पञ्चाक्षरयमनेऽप्यप्रत्यभिज्ञानादप्रत्यभिज्ञायमकम् ।

सदाव्या[1]जवशिष्याताः सदात्तजपशिक्षिताः ।
ददास्यजस्रं शिवताः सूदात्ताजदिशि स्थिताः ॥५००॥ [देवीशतक ८१]

सर्वदा अव्याजं जितेन्द्रियैर्ध्याताः । शोभनं कृत्वा गृहीतमन्त्रावर्तनैरभ्यस्ताः । श्रेयस्त्वानि सुष्ठूर्जितं विष्णुस्थानं परं ब्रह्म तत्र स्थिताः । गोमूत्रिका धेनुरियं क्रमव्युत्क्रमाभ्यां चतुर्विंशतिप्रकाराः । तथा हि—चतुर्ष्वपि पादेषु पङ्क्तिशो लिखितेषु प्रथमद्वितीययोस्तृतीययोश्चतुर्थयोश्च यदि[2] वा द्वितीयप्रथमयोस्तृतीयचतुर्थयोश्च यदि वा प्रथमद्वितीययोश्चतुर्थतृतीययोश्च यदि वा द्वितीयप्रथमयोश्चतुर्थतृतीययोश्चेति । प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च क्रमवैपरीत्याभ्यां प्रकाराश्चत्वारः । एवं प्रथमतृतीययोः शिष्टयोश्च प्रथमचतुर्थयोः शिष्टयोश्च द्वितीयतृतीययोः शिष्टयोश्च द्वितीयचतुर्थयोः शिष्टयोश्च तृतीयचतुर्थयोः शिष्टयोश्च चत्वारश्चत्वार इति साकल्येन षट्चतुष्का इति ।

हरेः स्वसार देवि त्वा जनना[3]श्रित्य तत्त्व[4]तः ।
वेत्ति स्वसार[5] देवित्वा योगेन क्षपिताशुभा ॥५०१॥ [देवीशतक ८२]

हे देवि, भवती गोविन्दस्य भगिनीमुपास्य जनसमूहो निजमुत्कर्षं परमार्थतो जानाति । कथम् । चित्तवृत्तिनिरोधेन व्यवहृत्य । कीदृग्जनता । विनाशितकिल्बिषा । तथा च **मनुः**—

(134) प्राणायामैर्दहेद्दोषान् प्रत्याहारेण संगतिम् ।
ध्यानेनानीश्वरान्भावान्धारणाभिश्च किल्बिषम् ॥ ५०२ ॥
[मनुस्मृति ६·७२+]

अनियतावयव यमकमेतत् ।

सदाप्नोति यतिर्ज्योतिस्तादृशं त्वत्प्रभावतः ।
प्रभावतः समो येन कल्पते मोहनुत्तितः ॥ ५०३ ॥ [देवीशतक ८३]

शोभनम् । आदित्यस्य तुल्यः । मोहविनाशात् । एतेन ज्योतिःस्वरूपा भगवतीति प्रतिपादितम् । यदुक्तम्—

(135) यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ ५०४ ॥
[भगवद्गीता १५·१२]

---

1. E °व्याजा°. 2. E drops from यदि वा to °चतुर्थयोश्च. 3. E (line 9) जनिता°. 4. C drops तत्त्व. 5. E adds योगित्वा after स्वसारं.

+ M. S (N. S. P.) reads °दोषान् धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥

The verse as quoted by Hemacandra, however, perfectly agrees with the quotation as cited by Kayyaṭa in his Devīśatakaṭīkā (page 24).

मध्ययमकमन्तादिकमिदम् ।

त्वं सद्गतिः सितापारा पराविद्योत्तितीर्षतः ।
संसारादत्र चाम्ब त्वं सत्त्वं पासि विपत्तितः ॥ ५०५ ॥ [ देवीशतक ८४ ]

त्व शोभना गतिः । निर्मला । अनन्ता । प्रकृष्टं तत्त्वज्ञानम् । अत्र भवे । हे मातः । प्राणिनमापदः । गूढचतुर्थः ।

परमा या तपोवृत्तिरार्यायास्तां स्मृति जनाः ।
परमायात पोषाय धियां शरणमादृताः ॥ ५०६ ॥ [ देवीशतक ८५ ]

हे जनाः अत्यर्थं सादराः सन्तः देव्यास्तां स्मृतिं स्मरणमागच्छत । किंविधा । या स्मृतिः प्रकृष्टा तपोवृत्तिः । देवीस्मरणमेव परमं तप इत्यर्थः । अनियतावयवं यमकमिदम् ।

प्रवादिमतभेदेषु दृशस्ते महिमाश्रयः ।
भान्ति त्वत्त्रिशिखस्येव शिखानामसमाश्रय. ॥ ५०७ ॥ [ देवीशतक ८६ ]

दर्शनानि महिम्नामाश्रयः । यानि प्रवादिनां भिन्नानि ज्ञानानि तास्त्वदीया दृष्टय इति तात्पर्यम् । भवत्रिशूलस्य कोटीना विषमधारा इव । अन्तयमकम् ।

यच्चेष्टया तव स्फीतमुदारवसु धामनः ।
तच्चेतो यात्यहिवत्तं मुदा रवसुधामत. ॥ ५०८ ॥ [ देवीशतक ८७ ]

यच्चेतस्तव श्रवणचिन्तनाध्ययनादिव्यापारेण विकसितं सावधानं च । अत एव शाश्वतधनरूपम् । तच्चेतो हर्षेणोपलक्षित धामतोऽनो मोक्षलक्षणात् । रवसुधां शब्दामृत शब्दब्रह्मोदय याति । गोमूत्रिकाबन्धो यमकं च ।

सुरदेशस्य ते कीर्ति मण्डनत्वं नयन्ति यैः ।
वरदे शस्यते धीरैर्भवती भुवि देवता ॥ ५०९ ॥ [ देवीशतक ८८ ]

स्वर्गस्य । ते पुमांसः । हे वरदे । धीरैरविकृतचित्तैः । तेषां कीर्तिः स्वर्गं यातीति भावः । अनियतावयवं यमकम् । पादपरावृत्त्या गोमूत्रिकापि ।

तत्त्वं वीतावततनुस्त्वं ततवती ततः ।
विन्त विन्तव वित्तत्वं वीनावीतवतां बत ॥ ५१० ॥ [ देवीशतक ८९ ]

यतस्त्वं भवती तत्त्वं परब्रह्मस्वरूपम् । वीतावततनुः विगतविस्तीर्णव्यथम् । विस्तारितवती । सांख्याना त्वमेव यस्मात् सर्वत्र प्रधानमित्यर्थः । ततो

1. A drops त्वं. B °चाम्बत्वे. 2. A drops रम तप. 3. E अत्र°. 4. E यात्यवि°. 5. A, C have some unnecessary additional letters.

हेतोर्हे वित् विद्ये, वीतसंज्ञा अवीतसंज्ञाश्च सांख्याना प्रधानपुरुषसद्भावका दश हेतवस्तद्वतां सांख्यानां तव वितत्वं वित्तं भवत्या धनत्वं प्रतीतम् । त्वं धनं प्रसिद्धमित्यर्थः । बतेत्याश्चर्ये । द्व्यक्षरः ।

> तारे शरणमुद्यन्ती सुरेशरणमुद्यमैः ।
> त्वं दोषापामिनोदग्रस्वदोषा पासि नोदने ॥ ५११ ॥ [ देवीशतक ९० ]

हे ताराख्ये देवि विमले वा, त्वं शरणं सती आश्रितत्राणायोत्तिष्ठमाना । शक्रस्य संग्रामम् । व्यापारैः । दोषक्षेपिणा उद्भटनिजबाहुना रक्षसि । प्रेरणकाले पलायितारो देवा भवतीं शरणमेत्य पुनः संग्रामसमर्थाः सम्पद्यन्त इति वाक्यार्थः । उद्यन्तीत्यत्रान्तादेशश्चिन्त्यः । अनियतावयवं यमकम् । पादगोमूत्रिकापि प्रागुक्तेन

सुरदेशस्य[1] ते कीर्तिम् (पृ. ३१८) ।५१२। इत्यनेन पादपरावृत्तिगोमूत्रिकाबन्धेन सह अमुना पादगोमूत्रिकाबन्धेन तूणबन्धोऽयम् । तथा हि—प्राक्तनश्लोकस्य प्रथमतृतीयपादाक्षरैरधोधःक्रमेण पङ्क्तिद्वये कृते गोमूत्रिकया[2] नालिरुत्पद्यते । अनावृत्त्यान्त्यवर्णाभ्या तु बुध्नम् । तदुपरिष्टाच्च 'तारे' इत्यादिश्लोकपादैरूर्ध्वक्रमेण पङ्क्तिचतुष्टये कृते पादगोमूत्रिकया मुखम् । अन्त्यानां वर्णानामनावृत्त्या शराकर्षणार्थं[3] द्वारप्रदेशदर्शनम्[4] । इति ।

> सुमातरक्षयालोक[5] रक्षयात्तमहामनाः ।
> त्वं धैर्यजननी पासि जननीतिगुणस्थिती. ॥ ५१३ ॥ [ देवीशतक ९१ ]

अक्षयज्ञानरक्षणेन । गृहीतं महन्मनो यया । धैर्योत्पादिका । अनियतावयवं मध्यादियमकम् ।

> ख्यातिकल्पनदक्षैका त्वं सामर्ग्यजुषामितः ।
> सदा सरक्षसा मुख्यदानवानामसुस्थितिः ॥ ५१४ ॥ [ देवीशतक ९२ ]

ख्यातिरेकत्र वेदानामन्यत्र दानवानां कल्पनं छेदनमपि । अद्वितीया । त्रयाणां वेदानां परिपूर्णत्वभाजामपि । इतोऽस्मिंल्लोके । अस्माज्जगतश्च । सरक्षणाभिमुख्यप्रदा । अकृतकानां[6] वेदविशेषणमिदम् । जीवितरूपा सती । सराक्षसानां प्रधानदैत्यानां दुःखासिका सत्यपि । रेफविवर्तकोऽयम् । 'र्ग्ये' इत्यत्र रेफ उपरिष्टादधश्च परिवृत्तः ।

> सिता संसत्सु सत्तास्ते स्तुतेरते सततं सतः ।
> ततास्तितेति तस्तेति सूतिः सूतिस्ततोऽसि सा ॥ ५१५ ॥ [ देवीशतक ९३ ]

---

1. A, B सुरादेशस्य. E drops ते. 2. E °काया. 3. E °रकर्ष°. 4. E °प्रदेशनम. 5 E सुमतेर°. 6. E भकृतानां.

हे देवि, यतो निर्मला । सभासु । शोभनता । तिष्ठति । स्तवात् । तव । सदा । साधोः । तथा विस्तीर्णा । विद्यमानता । एति दीर्घायुर्भवतीत्यर्थः । क्षिप्ता ईतिसृंतिरुपद्रवप्रभवो यस्यामस्तितायाम् । ततो हेतोः शोभना ऊतिः सुरक्षा । सा प्रसिद्धा भवसि त्वम् । द्वयक्षरः ।

त्वदाज्ञया जगत्सर्वं भासित मलर्नुद्यतः ।
सदा त्वया सगन्धर्वससिद्धमरिनुत्तितः ॥ ५१६ ॥ [देवीशतक ९४]

हे मलनुत् आवरणनिवारिणि, त्वच्छासनेन त्रैलोक्यं वर्तते । यतो रिपुक्षेपणात्त्वया प्रकाशितम् । अर्धगोमूत्रिकाबन्ध. ।

यतो याति ततोऽत्येति यया तां नायतां यतेः ।
मातामितात्तमतमा तमोतीता मति मम ॥ ५१७ ॥ [देवीशतक ९५]

यया मत्या यतो निवर्तते ततो विमुच्यते तां मम मतिं विगततमस्का नायता पालयताम् । भवतीत्यर्थः । या मतिश्रनुर्थाश्रमस्थस्य जननी । अपरिच्छिन्ना । अत एव प्रकृष्टतमा । त्र्यक्षरः । एते षोडश श्लोकाक्षके नेमेरारभ्य नाभिं यावत अनुलोमतो लिखिताः षोडशारा. । अत एव च नाभेरारभ्य पुनरनुलोमतो लिखिता अन्ये षोडश । इत्थ द्वात्रिंशदराः ।

महत्ता त्वं श्रिता दासजन मोहन्छिदावस ।
य· शुद्वत्व गत· पापमन्यस्य प्रसभं जय ॥ ५१८ ॥ [देवीशतक ९६]

माहात्म्यम् । हे मोहच्छिदज्ञाननाशिनि । आवस अधितिष्ठ । इति द्विविधो हि जनः, अपाप सपापश्च । अष्टवर्ग.

त्वं साज्ञासु जगन्मातः स्पष्टज्ञाता सुवर्त्मसु ।
प्रज्ञा मुख्या समुद्भासि तत्पृथुत्वं प्रदर्शय ॥ ५१९ ॥ [देवीशतक ९७]

हे जगन्मातर्, विविक्तं विदिता सती त्वं शोभनवर्त्मसु सन्मार्गेषु विषये आज्ञासु निरूपणासु सा मुख्या प्रज्ञा वर्तते । तस्याः प्रज्ञाया· पृथुत्वं समुद्भासनशीलं प्रकटीकुरु । अस्मादेव चेयमार्या प्रादुर्भवति—

आज्ञासु जगन्मात स्पष्टं ज्ञाता सुवर्त्मसु प्रज्ञा ।
भासि त्व सा मुख्या समुत्पृथुत्वं प्रदर्शय तत् ॥ ५२० ॥ [देवीशतक ९८]

शोभन वर्त्म येषा तद्विषयासु राजसे । स्पष्टं समुत् प्रकटमानन्दरूपं महिमानं तस्मात् । शेषं तथैव ।

हन्त्र्यो[7] रुषः क्षमा एता· सदक्षोभास्त्वमुद्यतः ।
सतेहितः सेवते ताः सततं य. स ते हितः ॥ ५२१ ॥ [देवीशतक ९९]

1 E drops सृति. 2. E °मुद्यत.. 3 C °ससिद्धिम°; E सगन्धर्वै ससिद्धि°; the Devīśataka (p. 27) reads सगन्धर्वै समिद्ध°. 4. A drops मत. 5. A drops वर्त्मसु. 6 E drops from सन्मार्गेषु to सुवर्त्मसु (1. 25). 7 E °हत:.

क्रोधस्य विनाशिन्य एताः क्षमाः शोभना अविकाराश्च त्वमसि । अतो हेतोर्य उन्नतः प्रकृष्टः सता शोभनेन मार्गेण ईहितो व्यापारितः सततं ताः सेवते स तेऽनुकूलः । [1]आद्यं यमकं तृतीयचतुर्थयोः ।

करोषि तास्त्वमुत्खातमोहस्थाने स्थिरा मतीः ।
पदं यतिः सुतपसा लभतेऽतः सशुक्लिम ॥५२२॥ [देवीशतक १००]

हे उन्मूलिताज्ञानपदे यतस्ता मतीर्मैत्रीप्रमुदितादिका अचलास्त्वं करोषि, अतो हेतोः यतिर्मुमुक्षुः सह शुक्लिम्ना वर्तते यत्तत् पदम् । तमोमलहीनमित्यर्थः । [2]अचटवर्गः । चत्वार एते नेमिश्लोकाः । एभ्यश्च प्रथमं प्रथमं त्रीणि त्रीण्यक्षराणि लिख्यन्ते । चतुर्थं चारश्लोकप्रारम्भाक्षरं भवति । इत्थं नेम्यर्धनिमीलनम् । पुनरनुलोमलिखिता[3]र-श्लोकषोडशकाच्चैवमेवान्त्यमक्षरं त्रिषु त्रिषु लिखितेषु चतुर्थं भवतीति नेमेर्द्वितीयमर्धं मीलितं भवति । एवमेव चान्तलिखितैस्तैरेव नेमिश्लोकैर्नाभिनिमीलनं भवति । अत एव चारद्वात्रिंशतो नेमिस्थानान्नाभितो वा तृतीयं तृतीयं चाक्षरमादाय वर्णद्वात्रिंशत श्लोकोऽयमुत्पाद्यते ।

देव्या स्वप्नोद्गमादिष्टदेवीशतकसंज्ञया ।
देशितानुपमामाधादेतां नोणसुतो नुतिम् ॥ ५२३ ॥ [देवीशतक १०१]

देव्या वागीश्वर्या स्वप्नाविर्भावे आदिष्टा या **देवीशतक**मिति संज्ञा तया देशो निर्देशो विद्यतेऽस्यास्तस्या भावो देशिता तयानुपमां देवीस्तोत्रतया सर्वातिशायिनीं **नोणसुतः श्रीमानानन्दवर्धननामा** स्तुतिमिमामकार्षीदिति ।

पद्मं यथा—

भासते प्रतिभासार रसाभाताहताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥ ५२४ ॥ [ ]

हे प्रज्ञातिशयोत्कृष्ट, वादे रसेन समन्ताद् दीप्ता हता अशोभा यया । एकाग्रीकृतहृदया वादे एव । देवैर्विजिगीषुभिः पण्डितैराभा यस्याः । बतेत्याश्चर्ये निपातः । एषोऽष्टदलपद्मबन्धः । तथा हि—भाशब्दः कर्णिकास्थाने । ततोऽक्षरद्वयेनैकं दिग्दलं निःसरणक्रमेण विदिग्दलं चाक्षरद्वयेन प्रवेशक्रमेण । ततः स एव भाशब्दः ।[4] ततोऽक्षरद्वयेन दिग्दलं निर्गमप्रवेशाभ्यां भाशब्दं यावत् । ततोऽक्षरद्वयेन विदिग्दलं निर्गमेण तावतैव [5]दिग्दलं प्रवेशेन भाशब्दं यावत् । [6]पुनर्भाशब्दो [7]निर्गमेण च तदेवाक्षरद्वयमित्यादिना क्रमेण दलाष्टकमुत्पाद्यमिति दिग्दलवर्णानां द्विर्भाशब्दस्य चाकृष्टत्व आवृत्तिः ।

आदिग्रहणात् हल–शक्ति–स्थूल (? शूल)–स्वस्तिक–नागपाशादयो ज्ञेयाः ।

1. A, B, C, D drop from आद्यं to चतुर्थयोः. 2. D drops अचटवर्गः. 3. E °ताक्षर°. 4. E adds क्रमेण. 5. E विदिग्दलं. 6. A °पुनर्भात्सानो
7 A drops निर्गमेण च तदेवा and repeats दिग्दलनिर्गम etc.

अत्र 'इन्दु' इत्यत्र नकारो व्यञ्जनं च्युतम् ।

बिन्दुच्युतं यथा—

सहसा नलिनी ताराशारिता गगनावनिः ।
शोभते भूमिपालानां सभा च विबुधाश्रिता ॥ ४७६ ॥
[ ]

सह हसेन विकासेनेत्यपि ।

वर्णच्युतं यथा—

सितनृशिरःस्रजा रचितमौलिशिरोमणिमौक्तिकैस्तथा
शिखिरुचिरोर्ध्वदृक् पृथुललाटतटे तिलकक्रिया च सा ।
स्फुटविकटाट्टहासललितं वदनं स्मितपेशलं च तद्
अभिनवमीश्वरो वहति वेषमहो तुहिनाद्रिजार्धयुक् ॥ ४७७ ॥
[ ]

अत्र गौरीश्वरवर्णने सिद्धिच्छन्दसि प्रतिपादमाद्याक्षरद्वयपातेऽन्त्या-क्षरसप्तकच्युतौ चेश्वररूपवर्णनमेव प्रमिताक्षरावृत्तेन। यदि वा आद्या-क्षरसप्तकच्युतौ अन्त्याक्षरद्वयपाते च गौरीवर्णनं द्रुतविलम्बितवृत्तेन ।

गूढं क्रियाकारकसंबन्धपादविषयत्वेन चतुर्धा ।

क्रियागूढं यथा—

स्तनगुरुजघनाभिराममन्दं गमनमिदं मदिरारुणेक्षणायाः ।
कथमिव सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः ॥ ४७८ ॥
[ ]

हे युवानः कथमिव यूयं न स्थ इति क्रियागूढम् ।

कारकगूढं यथा—

केनेमौ दुर्विदग्धेन हृदये विनिवेशितौ ।
पिबतस्ते शरावेण वारिकह्लारशीतलम् ॥ ४७९[+] ॥ [ ]

1 I सबन्धपाद°. In the Sarasvatīkaṇṭhābharaṇa (II. v. 367) the two halves interchange their places.

अत्र 'शरौ' इति कर्मणो गूढत्वम्।

संबन्धगूढं यथा—

न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि।
अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥ ४८० ॥

[काव्यादर्श ३.१०८]

अत्र नं मे चेत आगोरसाभिज्ञमिति संबन्धगूढम्।

पादगूढं यथा—

द्युवियद्गामिनी तारसंरावविहतश्रुतिः।
हैमे(? मी)पुमाला शुशुभे... .... ॥ ४८१ ॥

[किरात० १५.४३]

अत्र 'विद्युतामिव संहतिः' इत्यस्य गूढत्वाद् गूढत्वम्। गूढादीत्यादिपदेन प्रश्नोत्तरप्रहेलिकादुर्वचकादिग्रहः। एतच्च कष्टकाव्यत्वात् क्रीडामात्रफलत्वाच्च न काव्यरूपता दधातीति न प्रतन्यते।

**प्रश्नोत्तरेति**। तथा चाह—

(136) यस्तु पर्यनुयोगस्य निर्भेदः क्रियते बुधैः।
विदग्धगोष्ठ्यां वाक्यैर्वा तद्धि प्रश्नोत्तरं विदुः॥

[सरस्वतीकण्ठाभरण २·१३६]

यथा—

काहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन् किमुत्तरम्।
कथमुक्तं न जानासि कदर्थयसि यत् सखे ॥५२५॥ [ ]

अत्र कदर्थयसीत्येतत् कथवर्णाभ्यां मुक्तं दर्यसीत्युत्तरम्। एतच्च अन्तःप्रश्नबहिःप्रश्नजातिप्रश्नादिभेदैरनेकप्रकारं प्रकृतानुपयोगात् कविशक्तिख्यापनफलत्वाच्च प्रतन्यते।

**प्रहेलिका** यथा—

पयस्विनीनां धेनूनां ब्राह्मणः प्राप्य विंशतिम्।
ताभ्योऽष्टादश विक्रीय गृहीत्वैकां गृहं गतः ॥५२६॥ [ ]

1 I °गूढत्वं. 2. I drops न. 3 I चेतसा गो°. L चे सा गो°. 4. A drops जातिप्रश्ना. 5. A, B गृहे.

## १०९) अर्थभेदभिन्नानां शब्दानां भङ्गाभङ्गाभ्यां युगपदुक्तिः श्लेषः ॥ ६ ॥

'अर्थभेदाच्छब्दभेदः' इति नये वाच्यभेदेन भिन्नानामपि शब्दानां तन्त्रेण युगपदुच्चारणं भिन्नस्वरूपापह्नवनम् । श्लिष्यन्ति शब्दा अत्रेति श्लेषः । स च वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनरूपाणां शब्दानां भङ्गादभङ्गाच्च द्वेधा भवति । यथा—

अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ४८२ ॥

अत्र विधुर्विधिश्चेति उकार-इकारयोर्वर्णयोर्भङ्गः ।

ते गच्छन्ति महापदं भुवि परा भूतिः समुत्पद्यते
तेषां तैः समलङ्कृतं निजकुलं तैरेव लब्धा क्षितिः ।
तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिता नित्यशो
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥ ४८३ ॥
[सुभाषितावलौ (२५८७)]

अत्र महतीमापदं महत् पदं चेत्यादिपदानां भङ्गः ।

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतोहितप्राप्तये ।

धेन्वा ऊनाम् । एवमन्येऽपि प्रहेलिकाप्रकारा अभ्यूह्याः ।

तथा दुर्वचं दुःश्रवं दुर्बोधमपि क्रीडायां न विरुध्यते । यथा—

नांष्ट्रास्त्वाष्ट्रारिराष्ट्रे न भ्राष्ट्रे नादंष्ट्रिणो जनाः ।
धार्तराष्ट्राः सुराष्ट्रे न महाराष्ट्रे तु नोष्ट्रिणः ॥ ५२७ ॥

नाष्ट्रा राक्षसाः । त्वष्टुरपत्यमिति त्वाष्ट्रो वृत्रस्तस्यारिरिन्द्रस्तस्य राष्ट्रे स्वर्गे ।

1 I drops शब्दानां. 2. I नयेन. 3. I °वचनविभक्ति°.

लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ४८४ ॥
[ सुभाषितावलौ (४३) अमृतदत्तस्य ]

अत्र नीता ईहितप्राप्तये इति च स्त्रीनपुंसकलिङ्गयोः श्लेषः ।

कुरु लालसभूलेहे महिमोहहरे तुहारिविच्छिन्ने ।
हरिणारिसारदेहे वरे वरं हर उमे भावम् ॥ ४८५ ॥ [ ]

कश्चिद् युयुत्सुर्ध्यानानीतां भवानीं स्वकान्तां च संस्कृतप्राकृतया वाचा तुष्टुवे । हे उमे, हरे रुद्रे भावं श्रद्धां विधेहि । अर्थान्मम । कीदृशे हरे ? लालसमर्थान्मनस्तद्भुवं कामं लेढि स्म यस्तत्र । महिम्नैव वितर्कहर्तरि हरसन्निधौ हि सर्वाज्ञानाभिभव इति श्रुतिः । तोहन्त्यर्दन्ति येऽरयस्तैर्विरहिते सिंहबलशरीरे परिणेतरि श्रेष्ठम्। उमाया एव वा इमानि संबोधनपदानि । प्राकृते तु—हे वरे कान्ते तु(‘तुह)तव सम्बन्धिनि । कुरु लालसभ्रूलेखे महिमोहगृहे हारिणि विच्छिन्ने च तनुमध्यत्वात् । हरिप्रियाप्रधानवपुषि यद् वरं नयनाननस्तनजघनादि तन्मेऽभिलाषं हरतु कामं पूरयतु । एवं भाषान्तरभङ्गेऽप्युदाहार्यम् ।

**भाषान्तरभङ्गेऽपीति** । संस्कृतभाषाया मागध्या समावेशो यथा—

कुललालिलावलोले शलिलेशे शालशालिलवशूले ।
कमलाशवलालिबलेऽमाले दिशमन्तकेऽविशमे ॥ ५२४ ॥
[ रुद्रट ४·१२ ]

कश्चिज्जातसंसारभयो वक्ति—कुललालिनो महापुरुषान् लुनातीति । कर्मण्यण् । स चासौ लम्पटश्च तस्मिन् । शलं बध्रः तदुपलक्षितः खड्गो येषां तान् लिशत्यल्पीकरोति यस्तस्मिन् । गृहशालिनां छेदनशूले । लक्ष्म्याः शवानि अस्पृष्टतया दरिद्रास्तत्क्षालनशीलं बलं यस्य । क्षमारहिते । मलनं मालो धारणं क्षमेति यावत् । यमे एवंभूते सति ए विष्णौ दिशमविशम् विष्णुविषयं मार्गमहमास्थित इत्यर्थः । अपरोऽर्थो मागध्याम् । कुररपङ्क्तिरवैर्लोलं व्याप्तम् । रवशब्दस्य

1. P, I, L °यमनं. 2. A drops विष्णु. 3. E अपरार्थौ.

प्राकृते दीर्घः । सलिल तत् । सारसश्रेणिकूजितेन क्रूरं विरहिणां मारणसमर्थत्वात् । कमलमधुग्राहकैरलिभिः श्रेष्ठम् । मारयति शाम्यतो मुनीनपीत्यर्थः । विषमं वियोगिभीषणम् । अनेकपक्षिसंकुलं सलिलं दृष्ट्वा मुनयोऽपि क्षुभ्यन्ति किमु विरहिण इत्यर्थः ।

संस्कृतस्य पैशाच्या यथा—

कमनेकतमादानं सुरतनरजतु च्छलं तदासीनम् ।
अप्पतिमानं खमते सोऽगनिकानं नर जेतुम् ॥ ५२९ ॥

[ रुद्रट ४·१३ ]

कस्यचित् केनचित् पौरुषे स्तुतेऽन्योऽसहमान आह—हे सुरते प्रधानपुरुष, न तु रणे । खमते शून्यबुद्धे स त्वया वर्ण्यमानो राजादिः कं नरं जेतुमजतु गच्छतु । नास्त्येवासौ यं सोऽभिभवति । कीदृशं बहुतमोत्पत्तिस्थानम् । माया प्रसिद्धामाश्रयमाणम् । अर्थान्तरवृत्तित्वेन सकर्मकता । यद्वा मूर्तच्छद्मरूपं लब्धपदं च । अपां पत्युर्वरुणस्येव मानो यस्य । पर्वतस्येव निकानः कान्तिर्यस्य । (137) 'कनी(नै)दीप्तिकान्तिगतिषु' (हेमधातुपाठ ३३१) इति हि पठ्यते । अथवा न गच्छतीत्यगोऽनश्वरः । अभ्रष्टकान्तिमित्यर्थः । एवंविधा यदा नराः सन्ति तदा स त्वदुक्तः कमिव जयत्विति वाक्यार्थः । अथवा एवंविधा यदा न सन्ति सर्वे तेन यतो जितमतः स कं नर जेतुमजत्विति । स्तुतिरेवात्रापरोऽर्थः पिशाचभाषाया ।

कामे कृतमदाः सुरत्नरजतोच्छलद्दासीः ।
अप्रतिमाः क्षमते स गणिका न रञ्जयितुम् ॥ ५३० ॥ [ ]

अत्र हि द्वितीयार्थे षष्ठी । केनचिद् वेश्यानामुपचारः कृतः, ताभिस्तु तस्य न कृत इति सोऽत्र वर्ण्यते ।

संस्कृतस्य शौरसेन्या यथा—

संश्रादिमारसम्पत्ती सदागोरिजयेऽसुदे ।
तवसत्तीरदे सत्ते संसारे सुसमानदे ॥ ५३१ ॥ [ देवीशतक ७८ ]

हे देवि प्राणदायिनि, तव सम्बन्धिन्यौ सत्ते सतो विद्यमानस्य शोभनस्य च भाव इति द्वौ भावौ विद्यमानतोज्ज्वलताल‍क्षणौ विद्यमानापराधरिपुजयविषये विज्ञायमाना बलस्य समृद्धियोः ते तथाविधे वर्तेते इत्यर्थः । अरिविजये जनस्य तव सान्निध्यमौज्ज्वल्यं च लक्ष्यत इति भावः । अन्यत्ते सत्ते भवसागरे

1. E °नास्त्यसौ 2. E नन. 3. A, B °निरिव. 4 A, B शूरसेन्या. 5 A, B विजये.

आत्मनश्च परेषां च प्रतापस्तव कीर्तिनुत ।
भयकृद्भूपते बाहुर्द्विषां च सुहृदां च ते ॥ ४८६ ॥

अत्र नौतिनुदत्योः करोतिकृन्तत्योश्च प्रकृत्योर्भङ्गः ।

त्वदुद्धूतामयस्थानरूढव्रणकिणाकृतिः ।
विभाति हरिणीभूता शशिनो लाञ्छनच्छविः ॥ ४८७ ॥ [ ]

हरिणीभूतेति मृगीभूता, श्यामा संपन्नेति च। अत्र च्विङी-प्रत्यययोर्भङ्गः ।

शोभनपारप्रदे त्वयि सत्या त्वत्प्रभावेण संसारसागरादुत्तीर्यत इत्यर्थः । तथा सुसममनपभ्रंशमानं शब्दं यदि वा ब्रह्मस्तम्बपर्यन्त[1]चतुर्दशविधभूतसर्गे नित्योदिततया सुसमं साधारणत्वेनावस्थितं शब्दब्रह्म दत्तो ये ते तादृश्यौ । अपरोऽर्थः शूरसेन्या—'हे गौरि, जगत्सु सर्वदा दे[2] तव तपःशक्तिर्वज्रवदतिदृढलब्धिः । अनपायिनी वर्तत इत्यर्थः । कीदृशि । रदे आसक्ते । क्व । संसारे । सत्ते श्रेयःप्रधाने सत्त्वे सुशर्मैश्चित्तोद्रेकजयिभिर्मुमुक्षुभिः प्रणते । चित्तजय एव हि मोक्षः । तथा च—

(138) चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
तदेव तद्विनिर्मुक्तं मोक्ष इत्यभिधीयते ॥ [ ]

सस्कृतस्यापभ्रंशेन यथा—

आगममणिसुदमहिमसमसमदकृदपरजस्सु ।
किर सविभयवदितोसमय उज्जलभावसहस्सु ॥ ५.३२ ॥ [ देवीशतक ७९ ]

हे देवि, अपरजस्सु विगलितमोहेषु उत्क्रान्तजडताया सत्यां बलं येषां तेषु पुरुषेष्वनवसरे आगमा एव प्रकाशकत्वान्मणयस्तथा शोभनो दमश्चित्तोपशम एव निर्वापकत्वात् हिमं तयो संबन्धी योऽसौ समोऽनाकुलो हर्षस्तं कृन्तति यत् तदर्थादज्ञानम् । इतः संसारात् किर क्षिप । सविभयवत् यद्विना भयं यथा किरसि तद्वदज्ञानं किरेत्यर्थः । परोऽर्थः—जस्सु पर यस्य [3]केवलमागमाश्चेतासि तथाश्रुतमहिमा शास्त्राववबोध[4]शमादिविषयनिग्रहाः एते च सर्वे साम्यमनाकुलत्वं ददानाः कृता । किल सापि[5] भगवती तोषमयं निर्मलपदार्थसहस्रं सहस्रशब्दो बाहुल्यार्थे । देवीप्रसादविलसितं तत्तस्येति वाक्यार्थः ।

1. E drops पर्यन्त. 2. E drops दे. 3. E केवलाश्चे°. 4. A, B °धस्तथासमावि. C, E °धस्तथासमाधि. In C the readings in the whole line are very corrupt. 5. A, B, C सो.

विषं निजगले येन बभ्रे च भुजगप्रभुः ।
देहे येनाङ्गजो दध्रे जाया च स जयत्यजः ॥ ४८८ ॥ [ ]

अत्र गिलितं, निजे गले च दग्धो वपुषि चेति स्यादित्यादिविभक्त्योर्भङ्गः ।

प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ।
ददतां निर्वृतात्मान आद्योऽन्येऽपि मुदं जिनाः ॥ ४८९ ॥

[ तिलकमञ्जरी २ ]

अत्रैकवचनबहुवचनयोर्भङ्गः । एषामेव वर्णादीनामभङ्गाद् यथा—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥ ४९० ॥

[ काव्यादर्श २.३११ ]

उदयः शक्त्युपचयो गिरिविशेषश्च । रक्तमण्डलोऽनुरक्तप्रकृतिररुणबिम्बश्च । राजा नृपतिश्चन्द्रश्च । मृदुभिरखेदावहैः करैर्दण्डादिभिः किरणैश्चेत्यभङ्गः शब्दश्लेषः ।

अत्र प्रकरणादिनियमाभावाद् द्वावप्यर्थौ वाच्यौ । न चायमर्थालङ्कार इति वाच्यम् । अन्वयव्यतिरेकाभ्यां शब्दगतत्वेन प्रतीयमानत्वात् । तथा हि— उदयादिशब्दप्रयोगेऽलङ्कारस्तदर्थशक्त्युपचयगिर्यादिप्रयोगे तु नेति तद्भावतदभावानुविधायित्वात् शब्दालङ्कार एवायम् ।

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।
प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥ ४९१ ॥

[ उद्भट ४.१५ ]

ननु स्वरितादिगुणभेदाद्[1] भिन्नप्रयत्नोच्चार्याणां तदभेदादभिन्नप्रयत्नोच्चार्याणां च[2] शब्दानां बन्धोऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः[3] शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्ययमर्थालङ्कारमध्ये गणितोऽन्यैरित्याशङ्कयाह—**न चायमर्थालङ्कार इति ।**

**स्वयं चेति ।** गौरीपक्षे—किसलयवद्दीप्यमानाभ्यां कराभ्यां शोभते ।

1. E स्वरता°. 2. A, B put च after शब्दानां. 3. E बन्धे.

इत्यादौ तु सङ्करत्वमेव युक्तम् । अथवा न्यायपरीक्षायामुपमात्वमेव । तथा हि—यथा गुणक्रियासाम्य उपमा, तथा शब्दमात्रसाम्येऽपि दृश्यते । 'सकलकलं पुरमेतज्जातं संप्रति सितांशुबिम्बमिव' इत्यादौ । न च तत्र श्लेषत्वं वक्तुं[1] युक्तम् । पूर्णोपमाया निर्विषयत्वापत्तेः । गुणक्रियासाम्ये सा भविष्यतीति चेत्, न । अर्थश्लेषस्य निर्विषयत्वप्रसङ्गात् । अथ 'दिशः प्रसादयन्नेषः' (पृ. ३८२) इत्यादौ वक्ष्यमाण उपमाविरहितोऽर्थश्लेषस्य विषयः कल्प्यते । तद् द्वयोरप्यन्यत्र लब्धसत्ताकयोरेकत्र संनिपाते संकरतैव प्राप्नोति । गुणक्रियासाम्यमुपमा शब्दसाम्यं तु श्लेष इति विशेषस्यानभिधानाच्छब्दसाम्यमुपमाया विषयः । श्लेषस्य तूपमया विरहित इति 'स्वयं च पल्लवा–' (पृ. ३२८) इत्यादावुपमैव न्याय्या । एवं च—'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका' (उद्भट ४.१७) इत्यादौ न विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोध एव । अत्र हि श्लेषस्य प्रतिभामात्रं न तु प्ररोहः । न च विरोधाभास इव विरोधः श्लेषाभासः श्लेषः । तस्मादेवमादिषु वाक्येषु[2] श्लेषप्रतिभोत्पत्तिहेतुर[3]लङ्कारान्तरमेव ।

सुखेनाप्तुं यन्न शक्यं फलं तत्र लुब्धानामीहितं प्रददाति । सन्ध्यापक्षे—उज्ज्वलसूर्यमरीचिभिः शोभिता, स्वापफले[4] विश्रान्तौ यो न लुब्धस्तद्विषये हितं प्रददाति ।

**अलङ्कारान्तरमिति** । समासोक्त्यादिरूपम्, न तु श्लेष इत्यर्थः । तथा च—

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥ ५३३ ॥

[ ]

1. I drops वक्तुं. 2. I drops वाक्येषु. L वचेषु. 3. I drops हेतु.
4. A, B फलैः.

## ११०) अर्थैक्ये द्व्यादिभाषाणां च ॥ ७॥

द्वित्रिचतुष्पञ्चषण्णां भाषाणामर्थाभेदे युगपदुक्तिर्द्व्यादिभाषाश्लेषः। तत्र संस्कृतप्राकृतमागधपिशाचशूरसेनापभ्रंशभाषाणां द्वियोगे पञ्चदश, त्रियोगे विंशतिः, चतुर्योगे पञ्चदश, पञ्चयोगे षट्, षड्योगे एकः।

---

इत्यत्र समासोक्तित्वम्। तत्पुरःसर इति आगच्छन्त्या इव सन्ध्यायाः[1] कामुकवद् दिवसः पुरःसरः संमुखं सरतीति व्याख्येयम्। न तु पदातिन्यायेनाग्रे दिवसो[2] गच्छति सन्ध्या च पश्चादिति। एवं हि वर्षशतैरपि समागमो न भवतीति किं चित्रम्।

'नालस्य प्रसरः' (पृ. ३६५) इत्यादौ अन्योक्तित्वम्।

यो गोपीजनवल्लभः स्तनतटव्यासङ्गलब्धास्पद-
　　श्छायावाञ्चवरक्तको बहुगणश्चित्रश्चतुर्हस्तकः।
कृष्ण सोऽपि हताशया व्यपहृतः कान्तः कयाऽद्य मे
　　किं राधे मधुसूदनो न हि न हि प्राणाधिकश्चोलकः ॥५३४॥ [　　]

इत्यत्र ससन्देहत्वम्। यदि वान्योक्ते सारूप्यादिः, ससन्देहस्य च सादृश्यादिः, श्लेषव्यतिरेकेण विविक्तोऽप्यस्ति विषयस्तदात्रापि श्लेषस्यान्योक्तिससन्देहानुग्राहकत्वेन प्रवृत्तत्वात् संकरत्वं भवतु, न तु श्लेषत्वमिति।

अलौकिकमहालोक-प्रकाशितजगत्त्रय।
स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ॥५३५॥ [　　]

आदाय चापमचलं कृत्वा हीनं गुणं विषमदृष्टिः।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥५३६॥ [　　]

अचलं पर्वतं निश्चलं च। अहीना सर्पाणामिनं स्वामिनं हीनं च। विषमा त्रिरूपा अस्थिरा च। अच्युतः कृष्णः गतिशून्यश्च।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः।
न निशाकरवज्जातु कलावैकल्यमागतः ॥ ५३७ ॥

इत्यादौ च एक[3]विषयरूपकविरोधव्यतिरेकानुग्राहकः श्लेष इति सङ्कर एवायम्। एवमन्यत्राप्यूह्यमिति।

---

1. A, B दिवसपुरःसरः. C, E drop सरः. 2. E °सोपि ग°. 3. A drops विषयरूपक.

सर्वमिलने भाषाश्लेषस्य सप्तपञ्चाशद् भेदाः। एते च पूर्वोक्तभाषाश्लेषभेदे भिन्नार्थत्वेऽपि द्रष्टव्याः।

संस्कृतप्राकृतयोर्योगे यथा—

सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम्।
विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥ ४९२ ॥

[मालतीमाधव ६.१०]

संस्कृतमागध्योर्यथा—

शूलं शलन्तु शं वा विशन्तु शंबला[1] वशं विशङ्का वा।
अशमदशं दुःशीला दिशन्ति काले खला अशिवम् ॥ ४९३ ॥

[रुद्रट ४.१८]

शलन्तु गच्छन्त्वधिरोहन्त्वित्यर्थः। शं शुभं वा यान्तु। संकीर्णाः पापकारिण इति यावत्। विशङ्काः सन्तो वशं बन्धनं वा विशन्तु। यतोऽविद्यमानोपशमावस्थं यथा भवत्येवमेते खला अकल्याणं दिशन्त्येव।

संस्कृतपैशाच्योर्यथा—

चम्पककलिकाकोमल-कान्तिकलापाथ दीपिकानङ्गी।
इच्छति गजपतिगमना चपलायतलोचना लपितुम् ॥ ४९४ ॥

[रुद्रट ४.१९]

संस्कृतसौरसेन्योर्[2]यथा—

अधरदलं ते तरुणा मदिरामदमधुरवाणि सामोदम्।
साधु पिबन्तु सुपीवरपरिणाहि[3]पयोधरारम्भे ॥ ४९५ ॥

[रुद्रट ४.२०]

सुपीवरेत्याद्यपि संबोधनपदम्।

संस्कृतापभ्रंशयोर्यथा—

1. P, L शवला. 2. S शूरसेन्यो. I सूरसेन्यो. L शूरसेन्यौ. 3. I °परिणाह°.

क्रीडन्ति प्रसरन्ति मधु कमलप्रणयि लिहन्ति।
भ्रमरा मित्र सुविभ्रमा मत्ता भूरि रसन्ति ॥ ४९६ ॥

[ रुद्रट ४.२१ ]

एवं द्वियोगान्तरे त्रिचतुःपञ्चयोगेषु चोदाहर्यम्। षड्योगे यथा—

अलोलकमले चित्तललामकमलालये।
पाहि चण्डि महामोहभङ्गभीमबलामले ॥ ४९७ ॥

[ देवीशतक ७४ ]

हे चण्डि देवि, रक्ष। अचपललक्ष्मि, मनःप्रधानपद्मालये। महामोहस्य जन्मलक्षाभ्यस्ताया अविद्याया भञ्जने उग्रं यद् बलं तेन अकलङ्के।

१११) उक्तस्यान्येनान्यथा श्लेषादुक्तिर्वक्रोक्तिः ॥ ८ ॥

अन्येन वक्त्रान्यथोक्तस्यान्येन प्रतिवक्त्रा श्लेपाद् भङ्गाभङ्गरूपा-दन्यथाभिधानं वक्रोक्तिः। भङ्गाद् यथा—

किं गौरि मा प्रति रुषा ननु गौरहं किं
कुप्यामि कां प्रति मयीत्यनुमानतोऽहम्।
जानाम्यतस्त्वमनुमानत एव सत्य-
मित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥ ४९८ ॥

[ रुद्रट २.१५ ]

अभङ्गाद् यथा—

कोऽयं द्वारि, हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं
कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात्।

---

नत इति। अस्मादनुमानात्। न उमा अनुमा अर्थात्सन्ध्या तस्या नत इत्यपि।

---

1 I मनःप्रसाधन°. 2 I हरः

कान्तेऽहं मधुसूदनो व्रज लतां तामेव मध्वान्विता-
　मित्थं निर्वचनीकृतो दयितया ह्रीतो हरिः पातु वः ॥४९९॥
[सुभाषितावली (१०४)]

काकुवक्रोक्तिस्त्वलङ्कारत्वेन न वाच्या। पाठधर्मत्वात्। तथा च (34) 'अभिप्रायवान् पाठधर्मः काकुः स कथमलङ्कारीस्यादिति **यायावरीयः**।' [काव्यमीमांसा अ. ७ (पृ. ३१)] गुणीभूतव्यङ्ग्यप्रभेद एव चायम्। शब्दस्पृष्टत्वेनार्थान्तरप्रतीतिहेतुत्वात्। यदाह **ध्वनिकारः**—

(35) अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते।
　सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥
[ध्वन्यालोक ३·३९]

**काकुवक्रोक्तिरिति**। 'ककि लौल्ये' (हेमधातुपाठ ६१८) इत्यस्य धातोः काकुशब्दः। तत्र हि साकाङ्क्ष[1]निराकाङ्क्षादिक्रमेण पठ्यमानोऽसौ शब्द प्रकृतार्थातिरिक्तमपि वाञ्छतीति लौल्यमस्याभिधीयते। यदि वा ईषदर्थे कुशब्दस्तस्य कादेशः, तेन हृदयस्थवस्तुप्रतीतेरीषद्भूमिः काकुः। काकुर्वा जिह्वा तद्व्यापारसम्पाद्यत्वात् काकुः। तद्रूपा वक्रोक्तिः काकुवक्रोक्तिरिति।

**पाठधर्मत्वादिति**। तथा च **भरतः**—

(139) सप्त स्वरास्त्रीणि स्थानानि चत्वारो वर्णा द्विविधा काकुः षडलङ्काराः षडङ्गानीति पाठ्यगुणाः।

[नाट्यशास्त्र १९·३७ अनन्तरं (C. S. S), अ. १७ श्लो. ९८ अनन्तरं (N. S.)]

तत्र काकौ स्वरा एव वस्तुत उपकारिणः। तत्परिकरभूतं तु स्थानादि। स्वरेषु प्रकृतिभूतेषु काकुरूपता जन्यते। तत्र स्थानशब्देनैषां स्वरूपनिष्पत्तेराश्रयो दर्शितः। उदात्ता[2]नुदात्तस्वरितकम्पितरू[3]पतया स्वराणां य[4]द् रक्तिप्रधानत्वमनुरणनमयं तत्त्यागेनोच्चनीचमध्यमस्थानस्पर्शित्वमात्रं पाठ्योपयोगीति दर्शितम्। यदि हि स्वरगता रक्तिः पाठ्ये प्राधान्येनावलम्ब्येत तदा गानक्रियासौ स्यात्, न पाठः।

---

1. A, B drop निराकाङ्क्षा.　2. A drops अनुदात्त.　3. E °स्वरूप°.
4. A, B यद्रक्ति.

अत एव गानवैलक्षण्ये सम्पन्ने बाह्यार्थसमर्पणेन चित्तवृत्तिसमर्पणया वाभिनयानुभावरूपतालाभाय काकुरर्थरसभेदेनाभिधीयते। तत एव काकुरूपत्वमेव सर्वत्रानुयायि, अभिनयत्वे तु मुख्योपयोगात्। तथा चोद्दीप्ताद्यलङ्कारेष्वपि काकुशब्देनैव मुनिर्व्यवहरति। काकोरेव हि प्रकारसंपादकाः परिपूर्णताधायिनोऽलङ्काराः। अलमिति पर्याप्त्यर्थ इह, न भूषणार्थः। अङ्गानि तु विच्छेदादीनि रसमर्थ शोभादिकं च पोषयितुं काकोरेवोपकारीणीत्येवं परमार्थतः काकुरेवेयं[1] पञ्चमी रूपान्तरैः पूर्णीक्रियते। काक्वा च पठ्यमानस्य स्वोचितचित्तवृत्तिरूपार्थाभिमुख्यानयनेनाभिनयतादीयत[2] इति काकुरेवात्र प्रधानमिति।

तत्र च[3] सप्त स्वराः—षड्जऋषभगान्धारमध्यमपञ्चम[4]धैवतनिषादवन्तः। एते रसेषूपपाद्याः। [नाट्यशास्त्र १९.३७, अनन्तरं (C. S. S.) अ. १७ श्लो. ९८ अनन्तरम् (N. S.)]

(140) हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ।
षड्जर्षभौ तु कर्तव्यौ वीररौद्राद्भुतेष्वथ॥

(141) निषादवान् सगान्धारः करुणे संविधीयते।
धैवतश्चापि कर्तव्यो बीभत्से सभयानके॥
[नाट्यशास्त्र १९.३८–३९ (C. S. S.), अ १७ श्लो. ९९–१०० (N. S.)]

(142) त्रीणि स्थानानि—उरः कण्ठः शिर इति। [ना शा. अ. १९ ३७ श्लोकानन्तरं (C.S.S.), अ. १७ श्लो. ९८ अनन्तरम् (N.S)]

अयमर्थः—शारीर्यां वीणायां केवलमुरःशिरःकण्ठलक्षणेभ्यस्त्रिभ्यः एव स्थानेभ्यो न तु षड्भ्यः (? षट्षष्टेः) स्वरः परित्यक्तरञ्जनात्मकगानोपयोगिस्वव्यापारः काकुभूतः संप्रवर्तते। बाह्यायां हि वीणायां प्रतिबिम्बात्मिकायां रञ्जनात्मकस्वरस्वरूप[5]व्यतिरेकेण न काकुसंपत्तिः। यदाह—

(143) शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु।
उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते॥ [ ]
[नाट्यशास्त्र १९ ४० (C.S.S.), अ १७ श्लो. १०१ (N.S)]

तत्र उरोनिष्पन्नेन मन्द्रनादेन समीपस्थानां कण्ठनिष्पन्नेन मध्यनादेन नातिदूरस्थानां शिरोनिष्पन्नेन तारेण दूरस्थानामाभाषणविधिः कार्यः। यद् वा मन्द्रस्वरेण

1. A, B omit काकुरेवेयं; C, E °रेवाय. 2. E drops तादीय. 3 E drops च. 4. D drops पञ्चम. + Cf. न तु षट्षष्टिस्वरपरित्यक्तरञ्जना° —Abhinavabhāratī, Vol. II, p. 388. 5. A, B, C स्वस्वररूप°.

पाठमारभ्य क्रमेण तारं गत्वा मध्येन परिसमाप्नुयादित्यभिप्रायः । उदात्तानुदात्तस्वरितकम्पिता वर्णाः । तत्र हास्यशृङ्गारयोः स्वरितोदात्तैर्वर्णैः पाठ्यमुपपाद्यम् । वीररौद्राद्भुतेषूदात्तकम्पितैः करुणबीभत्सभयानकेष्वनुदात्तस्वरितकम्पितैरिति । द्विविधा तु काकुः साक्षादत्रैव प्रतिपादयिष्यते ।

(144) उच्चो दीप्तश्च मन्द्रश्च नीचो द्रुतविलम्बितौ । पाठ्यस्यैते ह्यलङ्काराः—इति । [नाट्यशास्त्र १९.४५ (C. S.), अ. १७ श्लो. १०६ (N. S.)]

उच्चो नाम शिरःस्थानगतस्तारः स्वरः । स च दूरस्थाभाषणविस्मयोत्तरोत्तरसंजल्पबाधात्रासनादिषु [1] । दीप्तो नाम शिरःस्थानगतस्तारतरः । स चाक्षेपकलहविवादामर्षोत्कृष्टा[2]धर्षणक्रोधशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भर्त्सनाक्रन्दादिषु । मन्द्रो नामोरःस्थानस्थः । स[3] हि निर्वेदग्लानिचिन्तौत्सुक्यदैन्यव्याधि[4]गाढशस्त्रक्षतमूर्छामदादिषु । नीचो नामोरःस्थानस्थो मन्द्रतरः । स स्वभावाभाषण[5]व्याधितपःशान्तत्रस्तपतितमूर्छितादिषु । द्रुतो नाम कण्ठगतस्त्वरितः । स[6] लल्लमन्मनभयशीतज्वरार्तत्रस्तायस्तात्ययिककार्यावेदनादिषु । [नाट्यशास्त्र १९.४५ अनन्तरम् (C. S. S.), १७.१०६ अनन्तरम् (N. S.)] लल्लं[7] सविलासम् । मन्मनमव्यक्तम् । अहमेव मनो मन्ता यत्रेत्यनेनाश्रूयमाणम् । लल्लमन्मनौ नायिकागतावेव बालविनोदनसान्त्वनादौ । मुग्ध मुग्धेत्येवंप्रायपराभियोगानङ्गीकरणादौ वेति । आत्ययिकं[8] शीघ्रसम्पाद्यं यत्कार्यं तस्यावेदनम् । विलम्बितो नाम कण्ठस्थानस्थो मन्द्रः । [स] शृङ्गारवितर्कविचारामर्षासूयिताव्यक्तार्थप्रवादलज्जाचिन्तातर्जितविस्मितदीर्घरोगनिपीडनादिषु ।

[नाट्यशास्त्र १९.४५ अनन्तरम् (C. S. S), १७.१०६ अन्तरम् (N. S.)]

हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता ।
वीररौद्राद्भुतेषूच्चा दीप्ता चापि प्रशस्यते ॥
भयानके सबीभत्से द्रुता नीचा च कीर्तिता ।
एवं भावरसोपेता काकुः कार्या प्रयोक्तृभिः ॥

[नाट्यशास्त्र १९.५७–५८ (C. S. S), १७.११७–११८(N. S.)]

अङ्गानि—विच्छेदोऽर्पणं विसर्गोऽनुबन्धो[9] दीपनं प्रशमनमिति । तत्र विच्छेदो नाम विरामकृत[·] । अर्पणं नाम लीलायमानमधुरवल्गुस्वरेण पूरयतेव रङ्गं

1 Bharata has दूराह्वान after सजल्प. E °संजल्पत्रासनाबाधादिषु. 2. E °त्कृष्टा. 3. A, B, C, D drops स हि. 4. C दैन्याव्याधिः. Bharata has दैन्यावेशव्याधि. 5. E स्वभाषाभा°. 6. A, B, C, D drop स. 7. Bhara[ta] has लज्जित. 8. E आत्यायिक. 9. E °विसर्गो बन्धो°.

सा च काकुर्द्विविधा[1]—साकाङ्क्षा निराकाङ्क्षा च। वाक्यस्य साकाङ्क्षनिराकाङ्क्षत्वात्। यस्माद् वाक्याद् यादृशः सङ्केतबलेनार्थः प्रतीयते, न तादृश एव किन्तु न्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्तद् वाक्यं साकाङ्क्षम्। तद्विपरीतं निराकाङ्क्षम्। वक्तृगता ह्याकाङ्क्षा वाक्य उपचर्यते। सा च प्रकरणबलान्निश्चीयते। विशिष्टविषयत्वं च तस्यास्तत एवावसीयते।

विषयोऽपि त्रिविधः—अर्थान्तरं, तदर्थगत एव विशेषः, तदर्थाभावो वा। यथा—'देशः सोऽयमरातिशोणितजलैर्' (पृ. २९१) इति। अत्र साकाङ्क्षकाकुप्रभावात् 'ततोऽभ्यधिकं कुरुते' इत्यर्थान्तरे गतिः।

यन पठ्यते। विसर्गो नाम वाक्यन्यास[2]। अनुबन्धो नाम पदान्तरेष्वविच्छेदोऽनुच्छ्वसनम्। दीपनं नाम त्रिस्थानशोभि वर्धमानस्वर च। प्रशमनं नाम तारगताना स्वराणामवैस्वर्येणावतरणम्। तत्र हास्यशृङ्गारयोरर्पणविच्छेददीपनप्रशमनसंयुक्तं पाठ्यं[3] कार्यम्। विच्छेदप्रशमनयुक्त करुणे। विच्छेदप्रशमनार्पणदीपनानुबन्धबहुलं वीररौद्राद्भुतेषु। विसर्गविच्छेदार्पणयुक्त बीभत्सभयानकयोरिति। सर्वेषामप्येतेषा मन्दमध्यतारकृत प्रयोगस्त्रिस्थानस्थो भवति। तत्र[4] दूरस्थाभाषणे तारं शिरसा, नातिदूरे मध्यं कण्ठेन, पार्श्वतो मन्द्रमुरसा प्रयोजयेत् पाठ्यमिति। मन्द्रात्तार गच्छेत्ताराद्व वा मन्द्रमिति।

[नाट्यशास्त्र १९.५८ अनन्तरम् (C. S. S.),
१७.११८ अनन्तरम् (N. S)]

तदेवं ध्वनिधर्मविशेषस्य काकोः पाठधर्मत्वमवस्थितम्।

**साकाङ्क्षमिति।** मन्द्रादितारान्तमपरिसमाप्तवर्णालङ्कारं कण्ठोरःस्थानगतं यथा भवति तथैतत् पठनीयम्।

**तद्विपरीतमिति।** यादृशो वाक्यात् संकेतबलेनार्थः प्रतीयते तादृश एव यत्रान्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्तदिति।

**निराकाङ्क्षमिति।** मन्द्रादितारान्तं परिसमाप्तवर्णालङ्कारं शिरःस्थानगतं यथा भवति तथेदं पठनीयमित्यर्थः।

**काकुप्रभावादिति।** उदात्तकम्पितवर्णस्योच्चदीप्तालङ्कारस्य वासमाप्त्या

1. S °द्विधा. 2. E °वाक्यविन्या°. 3. D drops from पाठ्यं to युक्तं. 4. E drops from तत्र to तद्विपरीतमिति (l. 23).

स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमवन्ध्यतामधिपयोधि सान्ध्यो विधिः ।
तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसाः ॥ ५०० ॥

[ ]

अत्र 'तदात्मज इहाङ्गदः' इति साकाङ्क्षया काक्वा स्वगता वालिपुत्रोचिता विशेषा अर्प्यन्ते ।

'निर्वाणवैरि(? र)दहनाः' (पृ. २३१) इति । अत्र भवन्तीति साकाङ्क्षा काकुर्भवनाभावमाह भवन्त्विति । वचनोच्चारणं त्वर्थेऽसंभावनां विदधदभावस्य निषेधात्मनो विषयं भवनलक्षणमर्पयति । न भवन्त्येवेत्यर्थः+ ।

या काकुपठितिस्तत्प्रभावादित्यर्थ । एवमुत्तरत्रापि साकाङ्क्षकाकूदाहरणद्वयं व्याख्येयम् ।

ननु श्रुतमर्थमनादृत्य कथं काकुरर्थान्तरं प्रतिपादयेत् । तत्रोक्तमन्यैः— वस्तुस्वभावोऽत्र द्रष्टव्यः, न हि दृष्टेऽनुपपन्नं नाम इति । वयं तु ब्रूमः—इह येयं प्रथमेन संवित्स्पन्देन प्राणोल्लासनया वर्णादिविशेषरूपहीना वाग् जन्यते सा नादरूपा सती हर्षोत्कादिचित्तवृत्तिं विधिनिषेधाद्यभिप्रायं वा तत्कार्यलिङ्गतया वा तादात्म्येन वा गमयतीति तावत् स्थितम् । तथा च प्राण्यन्तरस्य मृगसारमेयादेरपि नादमाकर्ण्य भयरोषशोकादि प्रतिपद्यते तदयं नादाच्चित्तवृत्त्याद्यवगमोऽनुमानं तावत् । ये त्वेते वर्णविशेषास्ते तन्नादरूपसामान्यात्मकवाक्तन्तुग्रन्थिमया इव प्राच्यप्रयत्नातिरिक्तनिमित्तान्तरापेक्षास्तत एवान्यत्राप्यभिप्रेतेऽन्यथापि प्रयोक्तुं शक्याः । अत एव [2]दृष्टव्यभिचाराः । नादस्तु झटित्युद्भिन्नमुखरागपुलकस्थानीयो नान्यथाकर्तुं पार्यत इत्यनन्यथासिद्धोऽन्यथासिद्धं शब्दार्थं बाधत एव वा यथोक्तं भीरुर्न मे भयमिति, अन्यप्रकारतां वा वाक्यार्थस्य विशेषार्पणेन विधत्ते ।

**वचनोच्चारणमिति** । वचनस्य भवन्तीति रूपस्य ॥

इति । **आचार्यश्रीहेमचन्द्रविरचिते विवेके पञ्चमोऽध्यायः ॥**

---

1. E °च्छेदप्राणो°. 2. A, B दृष्टिव्य°. + Here 'स्वस्था भवन्तु...' of the Sūtradhāra and स्वस्था भवन्ति of Bhīmasena (Veṇī., Prastāvanā vv. 7-8) are, it appears, to be considered together.

**११२) भिन्नाकृतेः शब्दस्यैकार्थतेव पुनरुक्ताभासः ॥ ९ ॥**

भिन्नरूपाणां सार्थकानर्थकानां शब्दानां एकार्थत्वमिवामुखे, न पुनः परमार्थतः, पुनरुक्तवदाभासनं पुनरुक्ताभासः । यथा—

सत्त्वं सम्यक्समुन्मील्य हृदि भासि विराजसे ।
द्विषामरीणां त्वं सेनां वाहिनीमुदकम्पयः ॥ ५०१ ॥

[ देवीशतक ५५ ]

हे देवि विगतरजोविकारे हृदि सत्त्वाख्यं गुणं प्रकाश्य शोभसे । अरीणामखिन्नां सनायकां[1] चमूमुत्कम्पितवती । अत्र 'भासि विराजसे' इत्यादयः शब्दाः सार्थकाः । उदकंपयःशब्दौ निरर्थकौ ।

इति । **आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणि**संज्ञस्वोपज्ञ-**काव्यानुशासन**वृत्तौ शब्दालङ्कारवर्णनः पञ्चमोऽध्यायः ॥ ५ ॥

1. S सनायिकां.

अर्थालङ्काराणामेकोनत्रिंशतमाह—

## ११३) हृद्यं साधर्म्यमुपमा ॥ १ ॥

[1]कार्यकारणादिकयोरसंभावादुपमानोपमेययोरेव साधर्म्यं भवतीति तयोरेव समानेन धर्मेण सम्बन्ध उपमा । हृद्यं सहृदय[2]हृदयाह्लादकारि । तेन सत्त्वज्ञेयत्वप्रमेयत्वादिसाधर्म्ये नोपमा, तथा 'कुम्भ इव मुखम्' इत्यादि शृङ्गारादौ च । हास्यादौ तु न दोषः । हृद्यग्रहणं च प्रत्यलङ्कारमुपतिष्ठते । साधर्म्यं च देशादिभिर्भिन्नानां गुणक्रियादिसाधारणधर्मत्वम् । अभेदे ह्येकत्वमेव स्यात् । तेन 'पुरुष इव पुरुषः' इति सत्यपि पुरुषद्वयस्य [3]पुंरुपत्वानुगमलक्षणे साम्ये नोपमा । यदा तु द्वितीयः पुरुषशब्दः [4]शब्दशक्तिमूलव्यङ्ग्यपरतयावदातकर्मवचनस्तदानी भिन्नत्वाद्भवत्येव । यथा—

निम्नत्वभिमुखः [5]शूरोऽनेकशो बहुशः परान् ।
सङ्ग्रामे विचरत्येष पुरुषः पुरुषो यथा ॥ ५०२ ॥ [ ]

एवं यत्रासाधारणताप्रतिपादनार्थमेकस्यापि भेदः कल्प्यते तत्राप्युपमा भवति । [6]यथा—

---

**एकोनत्रिंशतमिति ।** उपमोत्प्रेक्षारूपकनिदर्शनदीपकान्योक्तिपर्यायोक्तातिशयोक्त्याक्षेपविरोधसहो[7]क्तिसमासोक्तिजातिव्याजस्तुतिश्लेषव्यतिरेकार्थान्तरन्या[8]ससन्देहापह्नुतिपरिवृत्त्यनुमानस्मृतिभ्रान्तिविषमसमसमुच्चयपरिसंख्याकारणमालासंकराणाम् ।

**असाधारणताप्रतिपादनार्थमिति ।** एतत्सदृशमन्यद् नास्तीत्यसाधारणता तत्प्रतिपादना[9]र्थमित्यर्थः । यथा 'उभौ यदि व्योम्नि पृथक्प्रवाहौ'

---

1. I कार्यकारणयोरसं°. 2. I drops हृदय. 3. I पुरुषत्वानुगमनलक्षणे. 4. I drops शब्द. L द्वितीयपुरुषशब्दशक्तिः. 5. P, L शूरानेक°. 6. P drops यथा. 7. E drops क्ति. 8. E drops स. 9. A drops र्थमित्य.

न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुधलासवासास्ते तद्विलासा इव तद्विलासाः ॥ ५०३ ॥
[ ]

तत्र देशेनोपमानोपमेययोर्भेदो यथा—'मथुरेव पाटलिपुत्रमाढ्यजनपदम्। कालेन यथा—'वसन्त इव हेमन्तः कामिनां सुखहेतुः'। क्रियया यथा—'नृत्तमिव गमनमस्याः सविलासम्'। गुणेन यथा—'गौरीव श्यामा सुभगा'। जात्या यथा—'विप्र इव क्षत्रियः श्रोत्रियः'। द्रव्येण यथा—'तीर्थंकर इव गणधरः पूज्यः'। समवायेन यथा—'विषाणित्वमिव दंष्ट्रित्वं हिंस्रम्'। अभावेन यथा—'मोक्ष इव समाधौ दुःखाभावः'।

इत्यादौ कल्पितोपमायामन्यैरुत्पाद्योपमेत्यपरैरतिशयोक्तिरिति च व्यपदेश्यायां वर्णनीयस्य वस्तुनः प्राप्तोत्कर्षस्य धर्मस्य च साम्यसमन्वयसमुद्भवसातिशयत्वविरहात्सर्वेषां पुराणानां सद्भूतानां पदार्थानां नूतनमसद्भूतं किमपि काल्पनिकमुपमानं धर्मान्तरं वा विवक्षितसातिशयत्वसंपत्तये कवयः समुल्लिखन्ति। तथानन्वयेऽपि वर्ण्यमानसौकुमार्यमाहात्म्यात् काल्पनिकमप्युपमानमुपपन्नम्।

ननु वास्तवस्य द्वित्वस्याविद्यमानत्वाद्, उभयनिष्ठत्वाच्चोपमानोपमेयभावव्यवस्थितेरुपमया सह लक्षणानन्यत्वमनन्वयस्य न संभवतीत्याशङ्क्याह— **एकस्यापि भेदः कल्प्यत इति।** अयमभिप्राय.—समारोपितरूपस्य द्वित्वस्याभ्युपगमादुपमानोपमेयभावसंबन्धनिबन्धनत्वमुपमाया लक्षणं विद्यत एवेति नानन्वयः पृथगलङ्कारत्वेन वाच्य इति।

**विलासायुधः** कामः। अत्र सैव नितम्बिनीवेत्येतत्तद्विलासा इवेत्येतच्चोपमानतया विश्रान्तिमलभमानमन्यव्यावृत्तौ लक्षणयावतिष्ठते।

**विषाणित्वमिव दंष्ट्रित्वमिति।** अत्र (145) 'समासकृत्तद्धितेषु सबन्धाभिधानम्' इति वचनात् संयोगस्य चाभावादर्थात् समवायस्य संभवाद् यस्य गुणस्य हि[5] भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने (146) त्वतलौ' इति त्वप्रत्ययेन समवायस्याभिधानम्। तस्य च सत्यप्येकत्वे उपाधिनिबन्धनं भेदकल्पनं नान्याय्यम्। ततश्च विषाणोपाधिकः समवाय उपमानं दंष्ट्रोपाधिकस्तूपमेय इति।

**मोक्ष इवेति।** मोक्षे दुःखाभाव इव समाधौ दुःखाभाव इत्यर्थः।

---

1. I कामिनीसुख°. 2. E इत्यादावुत्पाद्योपमायामन्यैः कल्पितोपमेत्यपरै°. 3. E °द्भव: मा°. 4. D. drops सद्भूताना. 5. A, B drop हि. × D Folio 54 (ab) puts here नित्यसमास इति to उदाहार्यम् which comes after वदन चन्द्रादि तदुपमेयम्। See pp. 341-42.

## ११४) सोपमानोपमेयधर्मोपमावाचकानामुपादाने पूर्णा वाक्ये वृत्तौ च ॥ २ ॥

सेत्युपमा । प्रसिद्धमुपमानमप्रसिद्धमुपमेयम् । प्रसिद्ध्यप्रसिद्धी[1] च कविविवक्षावशादेव । धर्मो मनोज्ञत्वादिः । उपमावाचका इव-वा-यथा-शब्दाः सदृशसन्निभादयश्च । अमीषामुपादाने पूर्णा । सा च वाक्ये वृत्तौ च भवति । वाक्ये यथा—

क्षणं कामज्वरोच्छित्त्यै भूयः सन्तापवृद्धये ।
वियोगिनामभूच्चान्द्री चन्द्रिका चन्दनं यथा ॥ ५०४ ॥

[उद्भट : काव्यालङ्कार० १.१८]

**प्रसिद्धमिति** । इन्दुमुखी कन्या इत्यादौ प्रसिद्धं चन्द्राद्युपमानं, अप्रसिद्धं तु मुखाद्युपमेयम् । ननु

तत· कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ ५३८ ॥

[ महाभारत द्रोणपर्व ८·४०८ ]

इत्यादौ कामिनीगण्डादेरुपमानत्वं चन्द्रादेश्चोपमेयत्वमुपलभ्यते, तत् कथमुच्यते प्रसिद्धमुपमानमप्रसिद्धमुपमेयमित्याशङ्क्याह—

**प्रसिद्ध्यप्रसिद्धी चेति** । तथा हि स्त्रीमात्रस्य गण्डपाण्डुताया कल्पनानुपपत्तेः । कामयते प्रियतममिति यौगिकत्वाश्रयणे कामिनीशब्दात् प्रतीयमानहृदयस्थितदुर्लभमनोहारिप्रियतमाया गण्डश्चन्द्रादप्यधिकचमत्का[2]रदायित्वेन प्रधानतया प्रसिद्ध इति कविविवक्षावशादेव प्रसिद्ध्यप्रसिद्धी अङ्गीक्रियेते । न सर्वलोकप्रसिद्ध्येत्यर्थः । यैरपि प्राकरणिकमुपमेयमप्राकरणिकमुपमानमिति पक्षः समाश्रियते, तैरपि कविप्रसिद्धिरवश्यमङ्गीकर्तव्यैव । तथा हि—चन्द्रकामिनीगण्डादिना प्रसिद्धगुणेना[3]प्राकरणिकेन प्राकरणिकं मुखचन्द्राद्यप्रसिद्धगुणमुपमीयते । उप समीपे मीयते क्षिप्यते स्वसादृश्यपरिप्रापणादुपमेयं येन तदुपमानम् । यत्तु तेन समीपे क्षिप्यते सौन्दर्यादिगुणयोगित्वेन त[4]त्र प्राकरणिकेऽप्रसिद्धं वदनचन्द्रादि तदुपमेयम् ।

---

1. I प्रसिद्धाप्रसिद्धी. 2. E °रादा°. 3. E drops प्राकरणिकेन. 4. A, B तत्र प्रकरणे. C तत्र प्रकरणो.

परार्थाभिधानं वृत्तिः । सा च यद्यपि समास-तद्धित-नामधातुभेदेन त्रिविधा लुप्तायामुदाहरिष्यते तथापीह समासतद्धितयोरेव संभवति । यथा—

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
तरुण्य इव भान्ति स्म चक्रवाकैः स्तनैरिव ॥५०५॥ [ उद्भट १.१९ ]

अत्रेवेन नित्यसमासः ।

गाम्भीर्यमहिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥ ५०६ ॥ [ ]

अत्रेवार्थे तुल्यार्थे च वतिस्तद्धितः ।

## ११५) एकद्वित्रिलोपे लुप्ता ॥ ३ ॥

उपमानादीनां मध्यादेकस्य द्वयोस्त्रयाणां वा यथासंभवं लोपे लुप्तोपमा । सा च वाक्ये वृत्तौ च ।

एकलोपे वाक्यगता यथा—

अनाधिव्याधिसंबाधममन्दानन्दकारणम् ।
न किञ्चिदन्यदस्तीह समाधेः सदृशं सखे ॥ ५०७ ॥ [ ]

अत्र यद्यपि सदृशशब्दाभिधेयस्योत्कृष्टतरगुणत्वेनाप्राप्यताप्रतिपादनादुपमानत्वं बलादायातं, तथापि तस्य साक्षादनिर्देशादुपमानस्य लोपः । तथा—

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः सत्यं तस्यामृतं यथा ॥ ५०८ ॥ [ ]

अत्राह्लादकत्वादिधर्मलोपः । उपमेयोपमावाचकयोस्तु वाक्ये लोपो न संभवति । द्विलोपे यथा —

**नित्यसमास इति** । ये तु–इवेन नित्यसमासं नेच्छन्ति, तन्मते वाक्योपमायामिदमुदाहरणम् । समासोपमाया तु—

अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥ ५३९ ॥ [ ]

इत्युदाहार्यम् ।

1. A, B, C, D drop नित्य.

दुंढुल्लिंतु मरीहसि[1] कंटयकलिआइं केअइवणाइं ।
मालइकुसुमेण समं भमर भमंतो न पाविहिसि ॥ ५०९ ॥

अत्र धर्मोपमानयोर्लोपः । वृत्तौ एकलोपे यथा—
अनाधिव्याधिसंबाधममन्दानन्दकारणम् ।
न किञ्चिदन्यदस्तीह समाधिसदृशं सखे ॥ ५१० ॥ [　　　]

अत्र समासे उपमानस्यानिर्देशः । तथा—
राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
रम्भास्तम्भाविवोरू च करिकुम्भाविव स्तनौ ॥ ५११ ॥ [　　　]

अत्रैवेन नित्यसमासे धर्मलोपः । तथा—
शरदिन्दुसुन्दरमुखी कुवलयदलदीर्घलोचना सा मे ।
दहति मनः कथमनिशं रम्भागर्भाभिरामोरूः ॥ ५१२ ॥
[रुद्रट ८·२०]

अत्र बहुव्रीहौ उपमावाचकलोपः । तथा—
मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥ ५१३ ॥ [　　　]

अत्र नित्यसमासे 'कर्मकर्त्रोर्णमि' इवलोपः । तथा—
हंसो ध्वाङ्क्षविरावी स्यादुष्ट्रक्रोशी च कोकिलः ।
खरनादी मयूरोऽपि त्वं[2] चेद् वदसि वाग्मिनि ॥ ५१४ ॥

अत्र नित्यसमासे कर्तरि णिनि चोपमावाचकलोपः । यथा—
पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता ।
चक्रदेशीयजघना सा स्वप्नेऽपि न दृश्यते ॥ ५१५ ॥ [　　　]

अत्र तद्धितवृत्तौ धर्मलोपः । इवार्थश्च कल्पबादिभिः[3] साक्षाद्भिहितः । ईषदपरिसमाप्तः पूर्णेन्दुरिति पूर्णेन्दुसदृशमित्यर्थो न तु

1. I मरीहिसि. 2. I त्वां. 3. P कल्पवादिः.

पूर्णेन्दुरेवेति ईषदपरिसमाप्तिविशिष्टेऽर्थे कल्पबादीनां स्मरणात् । ईषदपरिसमाप्तः पूर्णेन्दुरिति वचनवृत्त्या यद्यपि रूपकच्छायां भजते तथापि प्रातीतिकेन रूपेणोपमैव । तथा ह्यत्र पूर्णेन्दुसदृशं वदनमित्ययमर्थः प्रतीयते, न त्वीषदपरिसमाप्तः पूर्णेन्दुरिति । यथा वा—

सूर्यीयति सुधारश्मिमनाथति मृतायते ।
मृतस्तु कान्ताविरहे स्वर्गेऽपि नरकीयति ॥ ५१६ ॥ [ ]

अत्र नामधातुवृत्तौ कर्माधाराभ्यां क्यनि कर्तुः क्विपि क्यङि च इवलोपः । द्विलोपे यथा—

ढुंढुल्लिंतु मँरीहसि कंटयकलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमंतो न पाविहिसि ॥ ५१७ ॥

अत्र कुसुमसदृक्षमिति समासे धर्मस्योपमानस्य च लोपः । तथा—

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥ ५१८ ॥

---

**वचनवृत्त्येति** । सामानाधिकरण्यरूपया । ननु कथमीषदपरिसमाप्तिर्घटते यावता पूर्णेन्दुशब्देन पूर्णेन्दुजातिरुच्यते तदाधारो वा द्रव्यम् । तत्र जातिस्तावदेका निरवयवा चेति सर्वात्मनाश्रयं समाप्ता । द्रव्यमपि यत्तया सबद्धं तत्सर्वतः संपूर्णत्वात् समाप्तमेव । तस्मादसंभव एवास्याः । सामानाधिकरण्यमपि पूर्णेन्दुकल्पं वदनमिति वदनशब्देन प्राप्नोति तस्यार्थान्तरवाचित्वाच्चैष दोषः । इह शब्दादुच्चरिताद् द्वय प्रतीयते । शब्दार्थौ जातिद्रव्यं वा । अभिधेयसंबन्धेन वा अशब्दार्थभूता अपि गुणाः । यत्र चैतदुभयमस्ति तत्र परिसमाप्तिः । यत्र त्वन्यतरन्नास्ति तत्रेषदपरिसमाप्तिः । तत्रेह पूर्णेन्दुजातिहीने आह्लादनादिगुणहीने वा द्रव्ये वर्तत इत्युपपद्यते । ईषदपरिसमाप्तिः । सामानाधिकरण्यमुपपद्यत एव कथं यदा तावत् पूर्णेन्दुजातिहीने केनचित् साधर्म्येण वदनशब्दाभिधेयेऽर्थे वर्तितवान् पूर्णेन्दुशब्दः कल्पप्रत्ययमुत्पादयति तत् वदनशब्देन सामानाधिकरण्यं भवति । उभयोरेकार्थवृत्तित्वात् । यदा तु गुणहीने पूर्णेन्दुजातीय एव पूर्णेन्दुशब्दस्तदापि यथा गौर्वाहीक इति । सामानाधिकरण्यं तथा भविष्यति । गुणहीनो हि पूर्णेन्दुः पूर्णेन्दुकल्पशब्देनोच्यते तेन च तुल्यं वदनमिति तदापि पूर्णेन्दुकल्पशब्देनाभिधायिष्यते ।

---

1. I, S कर्माधारयोः. 2. I, S मरीहिसि. 3. S °कल्पिआइं. 4. S °केअइ°. 5. P मालय. L मालइं. 6. A drops वदनमिति. 7. S शब्देन न प्रा°. 8. E °ह पूर्णेन्दुशब्दः वृ°. 9. E °ण्यमप्युप°.

अत्र समासे धर्मस्येवस्य च लोपः । यथा वा—

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ५१९ ॥

अत्र नामधातुवृत्तौ सहस्रायुधमिवात्मानमाचरतीत्यात्मा उपमेयः । स चेवादिश्च लुप्तः । आचारलक्षणश्च धर्मः क्यन्प्रत्ययेन साक्षादभिहितः । तथा—

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥ ५२० ॥

[　　　　]

अत्र नामधातुवृत्तौ धर्मस्योपमावाचकस्य च लोपः । त्रिलोपे यथा—मृगनयनेति । मृगस्य नयने इति प्रथमं तत्पुरुषस्ततो मृगनयने इव नयने यस्या इति उष्ट्रमुखादित्वाद् बहुव्रीहिः । अत्र गुणद्योतकोपमानशब्दानां लोपः । यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इति रूपकसमासस्यैष विषयो न त्वस्योपमासमासस्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः । केचित्तु अयःशूलेनान्विच्छत्यायःशूलिक इत्यादौ क्रूराचारोपमेयतैक्ष्ण्यधर्मेवादीनां लोपे त्रिलोपिनीमुपमामुदाहरन्ति, तन्न युक्तम् । क्रूरस्याचारस्यार्थान्वेषणोपायादेरयःशूलतयाध्यवसानादतिशयोक्तिरेवेयम् । एवं दाण्डाजिनिक इत्यादिष्वपि द्रष्टव्यम् ।

**क्रूराचारोपमेयेति** । तथा ह्यत्रायःशूलमुपमानम्, अर्थान्वेषणोपायः कश्चिदुपमेयः तीक्ष्णत्वादिः साधारणो धर्मः, उपमानोपमेयभावश्चेति चतुष्टयमवगम्यते । तन्मध्याच्च शब्दस्पृष्टमुपमानमयःशूलेनेति शिष्टस्य तु त्रितयस्यार्थसामर्थ्यादवगतिरिति ।

**दाण्डाजिनिक इत्यादिष्वपीति** । तथा हि दम्भस्य दण्डाजिनतयाध्यवसितस्य जीवनक्रियाकरणत्वं दण्डाजिनेनार्थानन्विच्छति दम्भेन जीवतीति दाण्डाजिनिकः । दाम्भिक इत्यर्थः । एवं पार्श्वेनार्थानन्विच्छति–अनृजूपायेन

1. I क्यप्प्र°. 2. S drops च. 3. S °द्योतके उप°. 4. I °रेवायम्. 5. E °दिसा°.

मालोपमादयस्तूपमाया नातिरिच्यन्त इति न पृथग् लक्षिताः ।
तथा हि—

सोहं व्व लक्खणमुहं वणमाल व्व विअडं हरिवइस्स उरं ।
कित्ति व्व पवणतणयं आण व्व बलाइं से वलग्गए दिट्ठी ॥ ५२१ ॥
[ सेतुबन्ध १.४८ ]

इयमभिन्ने साधारणे धर्मे ।

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ५२२ ॥ [ ]

इति भिन्ने वा तस्मिन्नेकस्यैव बहूपमानोपादाने मालोपमा । तथा—

याम इव याति दिवसो दिनमिव मासोऽथ मासवद् वर्षम् ।
वर्षमिव यौवनमिदं यौवनमिव जीवितं जगतः ॥ ५२३ ॥ [ ]
नभ इव विमलं सलिलं सलिलमिवानन्दकारि शशिबिम्बम् ।
शशिबिम्बमिव लसद्द्युति तरुणीवदनं शरत् कुरुते ॥ ५२४ ॥
[ रुद्रट ८.२८ ]

जीवतीति पार्श्वक. । कांरातिको जाल्मिक इत्यर्थः । तथा शीतक उष्णक इत्यत्राप्यलसत्वशीघ्रत्वयोः शीतोष्णत्वाभ्यामध्यवसितयोः करणक्रिया प्रति विशेषणत्वमेव च । शीत करोति शीतकोऽलसः । जड इत्यर्थः । एवमुष्णक शीघ्रकारी दक्ष इत्यर्थः तथैव च 'श्वा मुमूर्षति', 'अश्मा लुलुठिषति', 'कूल पिपतिषति'—इत्यादि ।

**भाष्यकारस्यापि** चैवमादावतिशयोक्तिभेदत्वमेवेष्टम् । यदाह—(147) न तिङन्तेनोपमानमस्ति । आख्यातं नोपमानं भवतीत्यर्थः । एवं वर्तमानसामीप्यादावतिशयोक्तिभेदत्वं यथाप्रतीति योज्यम् । तथा च—(148) 'सत्सामीप्ये सद्वद्वा' (सिद्धहेम० ५।४।१) इति वर्तमानसमीपे भूते भविष्यति च वर्तमानवत् प्रत्यया भवन्ति । कदा देवदत्त आगतोऽसि, अयमागच्छामि, आगच्छन्तमेव मां विद्धि, अयमागमम्, एषोऽस्म्यागतः, कदा देवदत्त गमिष्यसि, एष गच्छामि, गच्छन्तमेव मां विद्धि, एष गमिष्यामि, एष गन्तास्मि । एवमन्यदपि ।

**हरिपतेः** सुग्रीवस्य । से इति रामस्य ।

1 S अणि व्व. 2 S °पादानं मा°. 3. P, L, I वर्ष इव. 4. E drops भेदत्व. 5. E °वष्यति°. 6. E °सामीप्ये.

अत्र यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे रशनोपमा । यथा—

अलिवलयैरलकैरिव कुसुमस्तबकैः स्तनैरिव वसन्ते ।
भान्ति लता ललना इव पाणिभिरिव किसलयैः सपदि ॥ ५२५ ॥

[ रुद्रट ८.३० ]

तथा—

कमलदलैरधरैरिव दशनैरिव केसरैर्विराजन्ते ।
अलिवलयैरलकैरिव कमलैर्वदनैरिव नलिन्यः ॥ ५२६ ॥

[ रुद्रट ८.३१ ]

अत्रोपमानोपमेययोरवयविनोः समस्तविषया । अवयवानां चैकदेशविषया ।

त्वाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
निलीनां नलिनीषण्डे कथं नु त्वां लभेमहि ॥ ५२७ ॥

अत्रोभयोरुपमेयत्वे उपमानत्वे चोपमेयोपमा ।

त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।
त्वन्मूर्तिरिव मूर्तिस्ते त्वमिव त्वं कृशोदरि ॥ ५२८ ॥

अत्रैकस्यैवोपमानत्वोपमेयत्वेऽनन्वयः ।

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ५२९ ॥

[ शिशुपालवध ३.८ ]

अत्रासद्भूतस्योपमानसम्भावनादुत्पाद्योपमा ।

तासां तु पश्चात् कनकप्रभाणां काली कपालाभरणा चकाशे ।
बलाकिनी नीलपयोदराजिः पुरःपरिक्षिप्तशतह्रदेव ॥ ५३० ॥

[ कुमार० ७.३९ ]

1. P, L, S. drop यथा. 2. I तु. 3. S कस्योपमा°. I °पमानोपमेयत्वे.

अत्र यथेष्टं विशेषणैरुपमेयं परिकल्प्य तादृशमेव सिद्धमुपमानमुपात्तमिति कल्पितोपमेत्यादौ[1]। आसां हि पृथग्लक्षणकरण एवंविधवैचित्र्यसहस्रसंभवादतिप्रसङ्गः स्यादिति ।

११६) असद्धर्मसंभावनमिवादिद्योत्योत्प्रेक्षा ॥ ४॥

प्राकरणिकेऽर्थेऽसन्तो[2] ये धर्मा गुणक्रियालक्षणास्तद्भावलक्षणा वा तेषां सम्भावनं तद्योगोत्प्रेक्षणमुत्प्रेक्षा। सा च इव-मन्ये-शङ्के-ध्रुवं-प्रायो-नूनम्–इत्यादिभिः शब्दैर्द्योत्यते । यथा—

बलं जगद्ध्वंसनरक्षणक्षमं क्षमा च किं संगमके कृतागसि ।
इतीव संचिन्त्य विमुच्य मानसं रुषेव रोषस्तव नाथ निर्ययौ ॥५३१॥
[ ]

अत्र रोषलक्षणस्य गुणस्योत्प्रेक्षा ।

असन्तोषादिवाकृष्टकर्णयोः प्राप्तशासनः ।
स्वधाम कामिनीनेत्रे प्रसारयति मन्मथः ॥५३२॥ [ ]

अत्र संतोषगुणाभावस्य ।

वियति विसर्पतीव कुमुदेषु बहुभवतीव योषिताम् ।
प्रतिफलतीव जरठशरकाण्डविपाण्डुषु गण्डभित्तिषु ॥
अम्भसि विकसतीव हसतीव सुधाधवलेषु धामसु ।
ध्वजपटपल्लवेषु ललतीव समीरचलेषु चन्द्रिका ॥ ५३३ ॥
[ ]

अत्र क्रियायाः ।

---

तद्भावलक्षणा इति । गुणक्रियाभावलक्षणाः ।

तद्योगोत्प्रेक्षणमिति । अन्यधर्माणां स्वधर्मीभूताद् वस्तुन उत्कलितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणामीक्षणमित्यर्थः । हृद्यग्रहणानुवृत्तेर्लोकातिक्रान्तगोचरत्वमस्या अभ्यनुज्ञातमेव । तेन यत्र कुतश्चिन्निमित्ताल्लौकिक्येव धर्माणां संभावना, न तत्रोत्प्रेक्षा । न हि 'भारं वहतीव पुंगवः', 'पयो ददातीव स्त्रीगवी' इत्युत्प्रेक्षा प्रवर्तते, लोकातिक्रान्तगोचराया एव संभावनाया उत्प्रेक्षागोचरत्वात् ।

1. I °मेत्यादि. 2. I omits असन्तः.

कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षा क्षामतां गतौ ॥ ५३४ ॥

[उद्भट ३.३]

अत्र दर्शनक्रियाभावस्य । एवं च—

हिरण्मयी साललतेव जङ्गमा च्युता दिवः स्थास्नुरिवाचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताकृतिः सुता ददे तस्य सुताय मैथिली ॥५३५॥

[भट्टि० २.४७]

तथा— 'अकालसन्ध्यामिव धातुमत्ताम्' ॥ ५३६ ॥

[कुमार० १.४]

तथा—

आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
सुजातपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ५३७ ॥

[कुमार० ३.५४]

तथा—

अचिराभामिव विघनां ज्योत्स्नामिव कुमुदबन्धुना विकलाम् ।
रतिमिव मन्मथरहितां श्रियमिव हरिवक्षसः पतिताम् ॥ ५३८ ॥

[कुट्टनीमत २५८]

तथा—

'स्थितः पृथिव्या इव मानदण्डः' ॥ ५३९ ॥ [कुमार० १.१]

इत्यादावुत्प्रेक्षाबुद्धिर्न विधेया । यद्यप्येषु स्वरूपतो विशेषणतश्चोपमानं कल्पितं तथाप्युपमैव । उपमानोपमेययोः साधर्म्यस्य तद्वाचकानां च प्रतीयमानत्वात् ।

**११७) सादृश्ये भेदेनारोपो रूपकमेकानेकविषयम् ॥ ५ ॥**

सादृश्ये निमित्ते सति भेदेन विषयविषयिणोर्निर्देशेन आरोपो-

**विषयविषयिणोरिति ।** अर्थादुपमानोपमेययोः ।

1. I सा कन्येव.

ऽतथाभूतेऽपि तथात्वेनाध्यवसायो रूपयत्येकतां नयतीति रूपकम्, आरोप्यमाणरूपेणारोपविषयस्य रूपवतः क्रियमाणत्वात् । सादृश्यग्रहणं कार्यकारणभावादिनिमित्तान्तरव्युदासार्थम् । तेनायुर्घृतमित्यादौ न रूपकम् । भेदग्रहणमभेदारोपनिरासार्थम् । तत्र ह्यतिशयोक्तिर्वक्ष्यते । तच्च एकमनेकं चारोपस्य विषयो यत्र तत्तथा ।

तत्रैकविषयं यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीः कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।

**तथात्वेनाध्यवसाय इति** । 'मुखं चन्द्रः' इत्यादौ गौणीवृत्तिविषयतयेत्यर्थः । तथा हि— उपमेयशब्दो धर्मिवाची, द्वितीयेनोपमानशब्देन तथाभूतेनानुपपद्यमानसामानाधिकरण्यस्तस्यैवोपमानपदस्य स्वाभिधेयाविनाभूतगुणवृत्तितां नियमयति । ततश्च सामानाधिकरण्यमप्युपपद्यते । अत एव च भेदेऽप्यभेदप्रतीतिरियं नापन्यायः । तथा ह्यज्ञाने भेदे किलाभेदप्रतीतिरेव यत्र, तन्मिथ्याज्ञानम् । यथा शुक्तिकायां रजतप्रतीतिः । तथा भेदे ज्ञातेऽपि यत्राभेदप्रतीतिरिव सोपमा । भेदे ज्ञातेऽप्यामुखे किलाभेदप्रतीतौ सञ्जातायामपि पश्चाद् यत्रैवंविधे विशिष्टे सादृश्ये विश्रान्तिस्तद् रूपकम् । अन्यथा भेदेऽप्यभेदप्रतीतावन्याय एव स्यात् । ततश्च मिथ्याज्ञानस्यालङ्काररूपत्वं कथमुच्येत । अत्र च केचिच्छब्दारोपपूर्वकमर्थारोपं ब्रुवते । अपरे विपर्ययम् । अन्ये यौगपद्येनोभयम् । एष एव च युक्तः पक्ष इत्याहुः । तथा हि—

(149) शब्दोपचारात्ताद्रूप्यं रूपके कैश्चिदुच्यते ।
ताद्रूप्यारोपतस्त्वन्यैः शब्दारोपोऽत्र कथ्यते ॥ [ ]

(150) उपमानगुणैस्तुल्यानुपमेयगतान् गुणान् ।
पश्यतां युगपद्भाति तत्र तच्छब्दरूपता ॥ [ ]

**त[1]त्रेत्युपमेये । तच्छब्देति** । उप[2]मानशब्दारोप उपमानरूपारोपश्च ।

1. E तत्र. 2. A drops मानशब्दारोप.

विनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
　　प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ५४० ॥

यत्र चैकस्मिन् विषयेऽनेकान्यारोप्याणि, तदप्येकविषयम् । यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
　　कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।

**प्रेमलतिकेति** । प्रेमैव लतिकेति । मयूरव्यंसकादित्वाद् एवशब्दलोपी समासः । ननु व्याघ्रादिद्वारेण इवशब्दलोपी समासो लुप्तोपमायां दृश्यते । ततश्चोभयप्राप्तेरवश्यंभावित्वाद् वक्ष्यमाणसन्देहसङ्करः प्राप्नोति । उच्यते—यत्रान्यतरपरिग्रहे साधकप्रमाणाभावस्तदितरस्य वा परिहारे न स्याद् बाधकं प्रमाणं तत्रैवोभयप्रसक्तिरनिवार्येति स एव सन्देहसंकरालङ्कारस्य विषयो वक्ष्यते । इह तु लतायाः सेचनमानुकूल्यादारोपित धर्म एवेति रूपकपरिग्रहे साधकमस्ति तत्संकराशङ्का न कार्या । एवं बाधकेनापि प्रमाणेन सन्देहांशापवर्तनादपरांशप्रतिष्ठायां निरवकाशतैव सन्देहस्य । यथा—

मधुसुरभिणि षट्पदेन पुष्पे मुख इव साललतावधूश्चुचुम्बे । ५४० ।

[ किरात० १०·३४ ]

अत्र साललता वधूरिव, मुख इव पुष्पे मधुकरेण चुम्ब्यते स्म, इति विवक्षायामिवशब्दद्वयेन वाक्यार्थासंगतिर्बाधकं प्रमाणं समासे लुप्तोपमायाः, न तु साललता वधूगुणयोगिनी मुख इव षट्पदेन चुचुम्बे इति रूपकस्य । तथा हि मुख इव पुष्प इत्यत्र सदृशस्य पुष्पस्य प्रतिपत्तौ मुखाधीयमानविशेषता पुष्पाश्रिता पूर्वमेव प्रतीतौ रस्यनयोपारोहति । तेन मुखसामर्थ्याक्षिप्तया वध्वा स्यापि भवितव्यमिति । सात्र लताभिधीयते । तस्माल्लतैव वधूरित्याञ्जसी रूपके प्रतिपत्ति । उपमाप्रतिपत्तेस्त्वनाञ्जसत्वं मुखोपमितिसामर्थ्याक्षिप्तपुष्पगतरूपविशेषानुपयोगित्वात् । तथा चात्रोपमेये पुष्पविशेषे मुखोपमितिसामर्थ्याक्षिप्ते चुम्बनाधारत्वादौ न साललताया उपयोगोऽस्ति, वध्वा एव तत्रोपयोगित्वात् । तेन वधूरत्र प्रधानं, तदुपयोगिनी तु साललतैव वधूरित्यनया रूपकच्छायया संगतिः प्रतिपद्यत इति । तस्माद् यत्र विशेषावसाये निमित्तमस्ति, तत्र रूपकं समासाभिहितोपमा वान्यत्र संकर इति ।

**सौन्दर्यस्येति** । अत्र तरङ्गिण्यादेरारोप्यस्य प्रियालक्षण एक एव विषय । रहसामिति हास्यानाम् ।

---

1. A drops भस्ति तत्. 2. A drops न तु सा. 3. E drops पि.
4. A, B, C, D प्रियल°.

विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
प्राणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ५४१ ॥
[ ]

यत्र चैकत्रविषये आरोप्यं श्रौतं विषयान्तरे तु गम्यं तदप्येकविषयम् । यथा—

जस्स रणंतेउरए करे कुणंतस्स मंडलग्गलयं ।
रससम्मुही वि सहसा परम्मुही होइ रिउसेणा ॥ ५४२ ॥

अत्र रणस्यान्तःपुरत्वारोपः श्रौतः, मण्डलाग्रलताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसामर्थ्यादवसीयते ।

अनेकविषयं यथा—

यस्या बीजमहंकृतिर्गुरुतरो मूलं ममेति ग्रहो
नित्यत्वस्मृतिरङ्कुरः सुतसुहृज्जात्यादयः पल्लवाः ।
स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः
सा मे त्वच्चरणार्हणापरशुना तृष्णालता लूयताम् ॥ ५४३ ॥
[ ]

यथा वा—

इन्द्रस्त्वं तव बाहू जयलक्ष्मीद्वारतोरणस्तम्भौ ।
खड्गः कृतान्तरसना रसना च सरस्वती राजन् ॥ ५४४ ॥
[रुद्रट ८.५५]

एवं च येऽन्ये रूपकप्रभेदा वर्ण्यन्ते । यथा—

ललना सरोरुहिण्यः कमलानि मुखानि केसरैर्दशनैः ।
अधरैर्दलैश्च तासां नवबिसनालानि बाहुलताः ॥ ५४५ ॥
[रुद्रट. ८.४३]

इदं सहजावयवं रूपकम् ।

गजो नगः कुथा मेघाः शृङ्खलाः पन्नगा अपि ।
यन्ता सिंहो[1]ऽभिशोभन्ते भ्रमरा हरिणास्तथा ॥ ५४६ ॥ [ ]

इदमाहार्यावयवम् ।

1. I पि. 2. I adds च.

अलिकुलकुन्तलभाराः सरसिजवदनाश्च चक्रवाककुचाः ।
राजन्ति हंसवसनाः सम्प्रति वापीविलासिन्यः ॥ ५४७ ॥

[ रुद्रट ८.४५ ]

इदमुभयावयवामित्यादि—ते न लक्षिताः । उक्तलक्षणेनैव संगृहीतत्वाद् । एवंविधवैचित्र्यसहस्रसंभवाच्चातिप्रसङ्गः स्यात् । यदाह—

(36) न पर्यन्तो विकल्पानां रूपकोपमयोरतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयतामिति ॥

[ काव्यादर्श २.९६ ]

## ११८) इष्टार्थसिद्धयै दृष्टान्तो निदर्शनम् ॥ ६ ॥

इष्टस्य सामान्यरूपस्य विशेषरूपस्य वा प्राकरणिकस्यार्थस्य सिद्धयै यो दृष्टान्तः स निदर्श्यते । प्राकरणिकोऽर्थोऽत्रेति निदर्शनम् ।

यथा—

होइ नं गुणाणुराओ जडाण णवरं पसिद्धिसरणाण ।
किर पण्हुवंइ ससिमणी चंदे ण पियामुहे दिट्ठे ॥ ५४८ ॥

[ ]

**इष्टस्येति ।** उत्तरत्र विशेषस्य सामान्येन समर्थनेऽर्थान्तरन्यासत्वं वक्ष्यत इत्यत्रार्थादर्थस्य सामान्यरूपस्य विशेषरूपस्य चेति लभ्यते ।

ननु चार्थान्तरन्यासोऽपि निदर्शनलक्षणेन संग्रहीष्यते । किं तस्य पृथग्लक्षणकरणेनेत्याशङ्क्याह—**यो दृष्टान्त इति** । दृष्टोऽन्तो निश्चयो यत्र स दृष्टान्तः । निश्चयश्च विशेषादेव संभवतीति विशेषरूप एवासौ । तेन (151) 'यत्र सामान्यस्य विशेषस्य वा विशेषेण समर्थनं तन्निदर्शनम् । यत्र तु विशेषस्य सामान्येन समर्थनं सोऽर्थान्तरन्यासः' इति विवेक उपपद्यते ।

**होइ न गुणाणुराओ इति ।** अत्र सामान्यं विशेषेण साध्यते ।

---

1. I °ग्रहणेनैव. 2. L ण. 3. L °वई.

यथा वा—

उपरि घनं घनपटलं दूरे दयिता तदेतदापतितम् ।
हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि+ ॥ ५४९ ॥

[ ]

यथा वा—

देवीभावं[1] गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥ ५५० ॥

[ ]

यथा वा—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ५५१ ॥

[ रघुवंश १.२ ]

यथा वा[2]

अत्युच्चपदाध्यासः पतनायेत्यर्थशालिना शंसत् ।
आपाण्डु पतति पत्रं तरोरिदं बन्धनग्रन्थेः ॥ ५५२ ॥ [ ]

**उपरीति** । अत्र विशेषो विशेषेण साध्यते ।

**देवीभावमिति, क्व सूर्येति, अत्युच्चपदाध्यास इति** उदाहरणत्रयस्यायमभिप्रायः । यथा कैश्चित् प्रतिवस्तूपमा, प्रकारद्वयेन निदर्शना च पृथग् लक्षिता तथा न लक्ष्यत इत्यर्थः । निदर्शनलक्षणेनैव व्याप्तत्वात् । तथा हि 'देवीभाव'-इति 'क्व सूर्य'-इत्युदाहरणद्वये विशेष एव दृष्टान्तेन साध्यमान उपलभ्यते ।

ननु प्रतिवस्तूपमान्तर्भवतु निदर्शने । निदर्शनाविशेषस्तु[3] कथमन्तर्भविष्यति । तस्य 'अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ।' ( काव्यप्रकाश १०.९७ ) इत्येवं

+ Compare—उवरि घण घणरडिअं, दूरे दइदा किमेदमावडिअं ।
हिमवदि दिव्वोसहिओ सीसे सप्पो समाविट्ठो ॥

[ मुद्राराक्षस १.२२ ]

1 S देवी भावं 2. S च. 3. A drops °नाविशे°.

एते साधर्म्येण निदर्शनप्रकाराः ।

वैधर्म्येण यथा—

गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं जीवति गौर्गलिः ॥ ५५३ ॥ [ ]

तत्राहवे साहसकर्मनर्मणः पाणिं कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥ ५५४ ॥

इति ।

११९) प्रकृताप्रकृतानां धर्मैक्यं दीपकम् ॥ ७ ॥

बहुवचनं समस्तव्यस्तपरिग्रहार्थम् । तेन प्रकृताप्रकृतानां प्राकरणिकाप्राकरणिकानामर्थादुपमानोपमेयत्वेन प्रकृतानामप्रकृतानां च केवलानां धर्मः क्रियादिर्यदैक एव प्रयुज्यते तदा दीपवदेकस्थानस्थमनेकदीपनाद् दीपकम् । यथा—

चंदमऊहेहिं निसा णलिणी कमलेहिं कुसुमगुच्छेहिं लया ।
हंसेहिं सरयसोहा कव्वकहा सज्जणेहिं कीरई गरुई ॥ ५५५ ॥
[ ]

लक्षणत्वात् । अत्रोच्यते—क्व सूर्येत्यादौ दार्ष्टान्तिके वस्तुसंबन्धस्य असंभवः दृष्टान्ते वा, अल्पविषयमत्या सूर्यवंशस्य वर्णनमसंभवदिति दार्ष्टान्तिके वस्तुसंबन्धस्यासंभव इति चेत्, न । यत्र वाक्येऽसंभवन्नेवार्थः प्रतिपाद्यते, तत्र कथमभवद्वस्तुसंबन्धता । स्यादेवं यदि प्रतिपाद्यमानस्यार्थस्य वाक्ये कश्चिदसंबन्धः स्यात् । तस्माच्च दार्ष्टान्तिके वस्तुसंबन्धस्यासंभवः दार्ष्टान्तिकप्रतिबिम्बरूपत्वाच्च दृष्टान्तस्य दृष्टान्तेऽप्ययमेव न्यायः । 'उदयति विततोर्ध्वरश्मिरज्जौ' (पृ. ३७०)-इत्यादौ तु अतिशयोक्तिभेदत्वं वक्ष्यते । 'अत्युच्चपदाध्यासः' (पृ. ३५४) इत्यत्र तु सामान्यं दृष्टान्तेन समर्थ्यते । साक्षात्क्रियापि तदर्थान्वयख्यापनं कुर्वतीति न दृष्टान्तात् प्रच्यवत इति ।

**चन्दमऊहेहिं इति ।** चन्द्रमयूखादीनामपि न निशादिना विना कोऽपि परभागलाभः । ततः सज्जनानामपि काव्यकथां विना कीदृशी साधुजनता । चन्द्र-

1. I यदेक. 2. I, L °मऊएहिं. 3. L नल्लिणीकम°. 4. A drops दार्ष्टान्तिके वस्तुसंबन्धस्याभावः. 5. A, B, C, E drop °ति.

अत्र काव्यकथा प्रकृता शेषाण्यप्रकृतानि । गुरुकीकरणमेका क्रिया । यथा वा—

मयूखैश्च निशाया गुरुकीकरणं भास्वरत्वसेव्यतादि यत् क्रियते, कमलैर्नलिन्याः शोभा परिमललक्ष्म्यादि, कुसुमगुच्छैर्लताया अभिगम्यत्वमनोहरत्वादि, हंसैः शारदशोभायाः श्रुतिसुखकरत्वमनोहरत्वादि, तत् सर्वं काव्यकथायाः सज्जनैरित्येतावानयमर्थो गुरुकीक्रियते इत्येतद् दीपकबलाच्चकास्ति । कथाशब्द इदमाह— आसतां तावत् काव्यस्य केचन सूक्ष्मा विशेषाः, सज्जनैर्विना काव्यकथा काव्यमित्येष शब्दोऽपि विध्वंसते । तेषु तु सत्सु आस्तां सुभगं काव्यं काव्यशब्दस्य व्यपदेशभागपि शब्दसन्दर्भमात्रं तथा तथा तैः क्रियते यथादरणीयतां प्रतिपद्यते ।

ननु यदि क्रियापदोपनिबन्धो दीपकं, तर्हि न तदलङ्कारः । क्रियापदे हि सति वाक्यपरिसमाप्तिः प्रतीयते, न पुनरर्थातिशयः, विना क्रियापदं वाक्यमेव किञ्चिन्नास्ति यदवोचाम 'सविशेषणमाख्यातं वाक्यम्' (सिद्धहेम° १·१·२६) इति । आख्यातशब्देन चात्राख्यातान्तं पदमुच्यते, तस्यैव क्रियावाचकत्वात् । तेनात्र कुतः कस्यातिशयः शास्त्रारम्भवैयर्थ्याच्च । तथा हि—अलङ्कारशून्यं काव्यं मा भूदिति कवीनामलङ्कारव्युत्पत्तिः क्रियते । क्रियापदस्य च दीपकत्वे सर्वं काव्यं सालङ्कारमिति नार्थोऽनेन ग्रन्थेन । अलङ्कारभेदप्रज्ञापनार्थोऽयं ग्रन्थ इति चेत्, तेनैव तावज्ज्ञापितेन कोऽर्थः सर्वथा सालङ्कारं काव्यं विधेयम् । तत्र यदलङ्कारान्तरं काकतालीयन्यायेन भवति तदा शोभनमेव, नो चेद् दीपकमवस्थितमेव । किं च सकरस्योच्छेदप्रसङ्गाच्च क्रियापदं दीपकालङ्कारः । पृथक् पृथग् लब्धात्मनामलङ्काराणामेकवाक्यसंसर्गे संकरः । न च क्रियापदस्य दीपकत्वे रूपकादयोऽलङ्कारा दीपकात् पृथगात्मानं लब्धुमुत्सहन्ते । तस्मान्न क्रियापदं दीपकम् । सत्यम् । न क्रियापदमात्रमस्माकं दीपकम् । किं तु बहुभिः समानजातीयैः कारकविशेषैरभिसबध्यमानम् । तस्य चानेकेष्वर्थेष्वभिसंबध्यमानस्यार्थादन्वयिरूपं यत् तत् साम्यमुच्यते । प्राकरणिकाप्राकरणिकत्वाभ्यां च तेषामर्थानामुपमानोपमेयभावो गम्यमानो न श्रौतः । अत एव च दीपकमुपमातो भिद्यते । यत्रापि प्राकरणिका एव अप्राकरणिका एव वा पदार्था एकधर्मानुगता वर्ण्यन्ते, तत्रापि तेषां परस्परं किञ्चित् साम्यं विज्ञेयमेव ।

1. E °शब्दे. 2. E drops मा भूत्. 3. A, B, C, D °तालीयेन. 4. A, B संकोरोछेद. 5. A, B drop from दीपकालङ्कार to क्रियापदं.

मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम् ।
स प्रियासङ्गमोत्कण्ठां सासह्यां मनसः शुचम् ॥ ५५६ ॥

[भामह २.२७]

अत्र मदादौ यत् प्राकरणिकत्वया विवक्ष्यते तदुपमेयं शेषाण्युपमानानि । न च क्रमिकत्वमुपमां रुणद्धीति वाच्यम्—

राम इव दशरथोऽभूद्दशरथ इव रघुरजोऽपि रघुसदृशः ।
अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥ ५५७ ॥

[ ]

इत्यादौ क्रमिकत्वेऽप्युपमादर्शनात् । प्रकृतानां धर्मैक्यं यथा—'पाण्डु क्षामं वदनम्' इति । यथा वा—

हंसाण सरेहिं सिरी सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं चिअ एए अप्पाणं नवर गैरुअंति ॥ ५५८ ॥

[सप्तशतकम् ९५३]

ननु रुद्रटप्रभृतिभिर्वास्तवभेदतयापि दीपकं प्रतिपादितं, तत्र च कथमौपम्यं स्यादित्याशङ्क्य निदर्शयति—**मद इति** । मदः सुरादिपानविकारविशेषः । मानभङ्गुरं मानभञ्जनशीलम् । यद् वा मानो भङ्गुरो यत्रेति समासः । क्रियादेर्धर्मस्यैकरूपस्य वाक्यार्थेष्वनेकेष्वपि साधारणतयोपादीयमानत्वादर्थौपम्यं बलादापतति । तत्रापि यद् विवक्षितं तदुपमेयमितरत्तूपमानमिति । अत एव रुद्रटोक्त औपम्यसमुच्चयोऽपि दीपकमेव तुल्यस्वभावत्वादिति ।

**हंसाणेति** । अत्र हंसानां श्रीः सरोभिः सरसां च हंसैः सार्यत इति सारणक्रियया एकयैव हंससरसोः प्राकरणिकयोः संबन्ध इति अन्योन्यनामालङ्कारो न दीपकतामतिक्रामति । यथा वा—

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः ॥ ५४१ ॥ इति ।

[कुमार० १·४२]

अत्र कण्ठमुक्ताकलापयोः प्राकरणिकयोरन्योन्यं भूष्यभूषणभाव इति ।

1. I क्रमैकत्वं°. 2. S गरुवत्ति. P, L गरुपत्ति. 3. E adds च.

अप्रकृतानां यथा—

कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे त्वदाननस्य ॥ ५५९ ॥
[ ]

स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ ५६० ॥

इत्यादौ तु जातेरेव चमत्कारो न दीपकस्येति कारकदीपकं न लक्ष्यते ।

**१२०) सामान्ये विशेषे कार्ये कारणे प्रस्तुते तदन्यस्य तुल्ये तुल्यस्य चोक्तिरन्योक्तिः ॥ ८ ॥**

सामान्ये प्रस्तुते तदन्यस्य विशेषस्य, विशेषे सामान्यस्य, कार्ये कारणस्य, कारणे कार्यस्य, सदृशे सदृशस्य चान्यस्याप्रस्तुतस्योक्तिरभिधानमन्योक्तिः । अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेप इत्यर्थः । यथा—

---

**कुमुदेति** । अत्र कुमुदादीनि अमृतादीनि चाप्राकरणिकानि दृशोराननस्य च प्रकृतस्य वर्ण्यमानत्वात् । यथा[1] वा—

यैर्दृष्टा सा न वा दृष्टा मुषिताः सममेव ते ।
हंत[2] हृदयमेकेषामन्येषां जन्मन. फलम् ॥ ५४२ ॥ [ ]

अत्र प्रियतमा प्राकरणिकीं प्रति अवलोकयितृणामनवलोकयितृणा चाप्राकरणिकानां मुषितत्वमेको धर्म इति । एवं च तुल्ययोगिता पृथक् न वाच्या इति ।

ननु च कारकदीपकमन्यैरुक्तं तत् किं नोच्यते-इत्याशङ्कयाह—**स्विद्यतीत्यादि** ।

**अप्रस्तुतस्येति** । उपमानस्य वर्णनावसरादपेतत्वादप्राकरणिकस्येत्यर्थः ।

**अभिधानमिति** । स्तुतिनिन्दोभयानुभयरूपम् ।

ननु चाप्रस्तुतपदार्थस्वरूपोक्तावसंबद्धभाषिता नालङ्कारगन्धोऽपि । तथा[3] हि—पर्वतोपवर्णनायां कः समुद्रस्वरूपमुपवर्णयेत् । उपवर्णने वा शिष्टविगर्हणमवश्यंभावीत्याशङ्क्य, अन्योक्तिशब्दार्थं प्रकटीचिकीर्षुराह—**अप्राकरणिकस्याभि-**

---

1. S drops यथा. 2. A drops हंत. 3. E तथाह.

ध्वानेनेत्यादि। सान्तरेण शब्दव्यापारेण गोचरीक्रियमाणः प्राकरणिको योऽर्थस्तेन सहाप्रस्तुतस्य कार्यकारणभावादौ संबन्धे सति सहृदयहृदयावर्जकमलङ्काररूपत्वमेतस्या इत्यर्थः। तुल्ये प्रस्तुते यत्र तुल्यस्याप्रस्तुतस्याभिधानं तत्र विशेषो विशेषेण प्रतीयत इति पूर्वाभ्यो भेदः। अन्योक्तौ च यद् वाच्यं तस्य कदाचिद् विवक्षितत्वं कदाचिदविवक्षितत्वं कदाचिद् विवक्षिताविवक्षितत्वमिति त्रयी बन्धच्छाया। तत्र विवक्षितत्वं यथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः॥ ५४३॥

[भल्लट ५६]

इक्षौ पीडनं पीडा, सत्पुरुषे तु परार्थोद्यतो तदर्थं क्लेशः। भङ्गोऽपीक्षौ ग्रन्थित्रोटनम्, सत्पुरुषे तु धनाभावनिमित्तो विप्लवः। इक्षोर्माधुर्यमास्वाद्यलक्षणो गुणः, सत्पुरुषे त्वनुल्बणत्वम्। इक्षोर्विकारः शर्करागुडखण्डादि, सत्पुरुषे तु चित्तविक्रिया। न हि सत्पुरुषा विकृत्यवस्थायामप्यसेव्याः। उल्बणत्वाभावात्। इक्षोरक्षेत्रमूषर, सत्पुरुषे निर्विवेकस्वाम्यादिस्थानम्। यथा वा—

अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता
भवत्येषां यस्य क्षणमुपगतानां विषयताम्।
निरालोके देशे कथमिदमहो चक्षुरधुना
समं जातं सर्वैर्न सममथवान्यैरवयवैः॥ ५४४॥

[ध्वन्यालोकवृत्तौ (आनन्दवर्धनस्य²)]

नन्विति। यैर्जगदिदं भूषितमित्यर्थः। यस्य चक्षुषो विषयतां क्षणं गतानामेषां सफलता भवति तदिदं चक्षुरिति सम्बन्धः। आलोको विवेकोऽपि। न सममिति। हस्तौ हि वैरं स्पर्शादानादावप्युपयोगी। अवयवैरिति। अतितुच्छप्रायैरित्यर्थः। अत्र अविचारकजनाकुले काले कश्चिन्महापुरुषः कुस्वामिभिरितरजनसमसत्कारतया ततोऽपि चाप्रयोजनतया न्यूनसत्कारतया खलीक्रियमाणः प्रस्तुतः। यथा च—

प्राणा येन समर्पितास्तव बलाद् येन त्वमुत्थापितः
स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यां पुरः।

1. A, B drop शब्दव्यापारेण. 2 A drops one हृदय. 3. E drops यत्र. 4. A अन्योभेदः after भेदः. 5. The Locana reads परस्पर्शो°.

तस्यास्य स्मितमात्रकेण जनयन् जीवापहारक्रियां
भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥ ५४५ ॥

[मल्लट १०२]

अत्र यद्यपि सारूप्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते, तथाप्यप्रस्तुतस्य वेतालवृत्तान्तस्यापि चमत्कारकारित्वं न ह्यचेतनोपालम्भवदसंभाव्यमानोऽयमर्थ इति । एषु वाच्यं विवक्षितस्वरूपमेव, न चं प्रस्तुतम् । यंत आद्ययोर्द्वयोर्महागुणस्या विषयपतितत्वादप्राप्तपरभागस्य, तृतीये च कृतघ्नस्य कस्यचित् स्वरूपं वर्णयितुं तात्पर्येण प्रस्तुतमिति । अविवक्षितत्वं यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे ॥ ५४६ ॥ [ ]

कथयामीत्यादि प्रत्युक्तिः । अनेन पदेनेदमाह—'अकथनीयमेतत्, श्रूयमाणं हि निर्वेदाय भवति, तथापि तु यंद्यनुबन्धस्तत् कथयामि' । वैराग्यादिति । काक्वा दैवहतकमित्यादिना च सूचितं न वैराग्यमिति यावत् । साधु विदितमित्युत्तरम् । कस्मादिति वैराग्ये हेतुप्रश्नः । इद कथ्यत इत्यादि सनिर्वेदस्मरणोपक्रमं कथं कथमपि निरूपणीयतयोत्तरम् । वामेनेति । अनुचितेन कुलादिनोपलक्षित इत्यर्थः । वट इति । छायामात्रकरणादेव फलदानशून्यादुत्कुरकन्धर इत्यर्थः । छायापीति । शाखोटको हि श्मशानाग्निज्वालालीढलतापल्लवादितरुविशेषः । न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती संभवत इति अविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवासिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयते । विवक्षिताविवक्षितत्वं यथा—

उप्पहजायाएँ असोहिरीएँ फलकुसुमपत्तरहिआए ।
बोरिए वइं देन्तो पामर हो हो हसिज्जिहसि ॥ ५४७ ॥ [ ]

अत्र वाच्योऽर्थो नात्यन्तं संभवी न चासंभवीति वा वक्तुं शक्य, व्यङ्ग्यस्यापि भावात् । तथा हि–उत्पथजाताया इति न तथा कुलोद्गतायाः । अशोभनाया इति लावण्यरहितायाः । फलकुसुमपत्ररहिताया इति । एवंभूतापि काचित् पुत्रिणी वा भ्रात्रादिपक्षपरिपूर्णतया संबन्धिवर्गपोषिका वा परिरक्ष्यते । बदर्या वृत्तिं ददत् पामर भो भो हसिष्यसे । सकललोकैरिति भावः । यथा वा—

1. C, E drop च. 2. D drops यत. 3. D मार्गे स्थि°. 4. The reading of the Locana (p. 492) यदि निर्बन्ध° yields good sense 5. E °ग्यहे°. 6. The Locana (p. 493) reads पल्लवादिस्तरु°. 7. E °सोहरीएँ.

सोऽपूर्वो रसनाविपर्ययविधिस्तत् कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद् वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥ ५४८ ॥
[भल्लट १८]

रसनाविपर्ययोऽसत्यभाषित्वमपि । चापलमश्रोतव्यश्रवणमपि । मदो गर्वोऽपि । शून्यकरत्वमदातृत्वमपि । अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः कर्णचापलं तु हेतुः, मदः प्रत्युत सेवने निमित्तमिति ।

ननु यत्राप्रस्तुतं वस्तु प्रस्तुतार्थानुबन्धि कथ्यते, तत्र यद्यन्योक्तित्वमभिधीयते, तदा सहस्रमायप्रयाणे भटीनां प्रियविरहोत्कण्ठितानामनेकविधव्यापारोपवर्णने भूतकालसंबन्धिनि प्रस्तुते—

औत्सुक्यगर्भा भ्रमतीव दृष्टिः पर्याकुला क्वापि मतिः प्रयाति ।
निरत्ययप्रेमनिबन्धनं च वियोगकाले द्रवतीव चेतः ॥ ५४९ ॥ [ ]

इत्यप्रस्तुतार्थाभिधायिनि श्लोकान्तरे । तथा समुद्रेण रामं प्रति—

त्वयैव मह्यमिय स्थितिर्दत्ता । यामनुपालयता मया भवान् विष्णुरारोपितः ।
[ ]

इति प्रस्तुत्योपन्यस्ते—

विअसंतरअक्खउर मैअरंदरसुद्धमायमुहलमहुअरं ।
उउणा दुमाण दिज्जइ हीरइ न उणाइ (? उणो) अप्पण च्चिअ कुसुम ॥ ५५० ॥
[सेतुबन्ध ६·११]

इत्यप्रस्तुतार्थप्रतिपादके छन्दोन्तरे च अन्योक्तित्वप्रसङ्गः । अत्र हि वृत्तद्वये उपवर्ण्यमानेनाप्रस्तुतेनार्थेन वृत्तान्तरोपनिबद्धः प्रस्तुतोऽर्थोऽनुसंबध्यते । नैवम् । यत्र हि तस्मिन्नेव वाक्येऽभिधीयमानेनाप्रस्तुतेनार्थेन शब्दानुरूपारूढस्यापि प्रस्तुतस्यार्थस्य सारूप्यादिभिराक्षेपः सोऽन्योक्तेर्विषयः, यत्र त्वेकस्मिन्नेव वाक्ये वाक्यद्वये वा समर्थ्यसमर्थकतया बिम्बप्रतिबिम्बभावेन वा प्रस्तुताप्रस्तुतयोरर्थयोरभिधयैव संस्पर्शो वाक्यैकवाक्यता च सोऽर्थान्तरन्यासस्य निदर्शनस्य वा विषयः । एवं च 'औत्सुक्यगर्भा' (पृ. ३६१)–इत्यादौ, यद्यपि श्लोकान्तरे समर्थ्यस्य वस्तुन उपक्रान्तत्वाच्छ्लोकान्तरेण तथाभूतमप्रस्तुतमेव प्रस्तुतार्थाभिसंधानेन वस्तूपनिबध्यते, तथापि नान्योक्तिरिति वक्तव्यम् । अपि त्वर्थान्तरन्यास एवासौ । अत्र हि वृत्तान्तरेणोपक्षिप्तो योऽसौ भटीनां वियोगजनितो व्यापारो भूतकालसंबन्धी

1. A, B, C drop दातृत्वम. 2. E °मपि. 3. A, B drop प्रिय. 4. E मयरंद°. 5. E महुयरं. 6. A, B, C, D drop र्थयोर. 7. E समर्थस्य.

विशेषभूतः स कालमात्रसंबन्धिना सकलवियोगिनीव्यापारेण सामान्यरूपेण समर्थितः । यद्यप्युत्प्रेक्षाप्यत्रास्ते, तथापि 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायोऽत्रानुसर्तव्यः । यद् वा संकर एवास्तु, न तावदन्योक्तिरियम् । तथा 'विअसंतरअक्खउरं' (पृ. ३६१) इत्यत्रापि वृत्तान्तरोपनिबन्धनोपस्थितेऽर्थे रामसमुद्रव्यापाररूपे वृत्तान्तरेण ऋतुद्रुमव्यापारात्मनस्तत्प्रतिबिम्बस्य निदर्शितत्वान्निदर्शनालङ्कारतैव ।

विकसद्रजःकर्बुरं मकरन्दरसाध्मातमुखरमधुकरम् ।
ऋतुना द्रुमाणा धीयते ह्रियते न पुनरात्मनैव कुसुमम् ॥ ५५१ ॥ [ ]

इत्यर्थः । ऋतुरत्र वसन्तः । कुसुममिति जातावेकवचनम् ।

—अथात्र कोऽलङ्कारः ।

लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्तानलो दीपितः ।
एषापि स्वयमेव तुल्यरमणाभावाद् वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥ ५५२ ॥
[सुभाषितावली (१४७२) धर्मकीर्तेः]

द्रविणशब्देन सर्वस्वप्रायत्वमनेकस्वकृत्योपयोगित्वमुक्तम् । गणित इति । चिरेण हि यो व्ययः संपद्यते न तु विद्युदिव झटिति, तत्रावश्यं गणनया भवितव्यम् । अनन्तकालनिर्माणकारिणोऽपि तु विधेर्न विवेकलेशोऽप्युदभूदिति परमस्याप्रेक्षावत्त्वम् । अत एवाह—क्लेशो महानिति । अनेन प्रत्युतानर्थप्राप्तिरुक्ता । एवमपि यदि परस्योपकारः स्यात्तदा को दोष इत्याशङ्कयाह—स्वच्छन्दस्येति । परार्थेऽपि न कश्चित्, यतो विशृङ्खलस्य जनस्यैतदभिलाषजननेन 'प्रथमेऽभिलाषो द्वितीये चिन्तनम्' (नाट्यशास्त्र २२·१७०) इति चिन्तानलो दीपितः । येन सर्वमन्यत् परित्यज्यैतत्प्राप्त्युपायान्वेषणपरः संजातः । न चाप्यस्याः कश्चित् स्वार्थोऽनर्थलावण्यसुन्दरतरतनुलतानिर्माणे प्रत्युत समुचितवल्लभलाभाभावादसंप्राप्तसंभोगविफलमनोरथा वर्धितैवेयं वराकीत्याह—एषापीति । यत् स्वयं निर्मीयते तदेतदेव च निहन्यत इति महद्वैशसमपिशब्देनैवकारेण चोक्तम् । कोऽर्थ इति । न स्वात्मनो न

1 B drops from न पुनरात्मा to महद्वैशसमपिशब्दे. 2. E °स्तस्या°. 3. E °प्युभूदिति. 4. A drops प्रत्युतानर्थ. 5. E °पर° 6. A drops तर. 7. A, B, C drop द + B resumes from नैवकारेण चोक्तं. 8. A, B स्वात्मनो.

लोकस्य न निर्मितस्येत्यर्थः । निन्दाद्वारिका स्तुतिरत्र प्रतीयत इति व्याजस्तुतिरिति केचित् । तच्च न चतुरस्रम् । यतोऽस्याभिधेयस्यैतदलंकारस्वरूपमात्रपर्यवसायित्वे न सुश्लिष्टता । तथा हि—न तावदयं रागिणः कस्यचिद् विकल्पस्तस्य एषापि [ स्वयमेव तुल्यरमणाभावाद्वराकी हता ] इत्येवंविधोक्त्यनुपपत्तेः । रागिणो हि वराकी हता इति कृपालिङ्कितममङ्गलोपहतं चानुचितं वचनम् । तुल्यरमणाभावादिति स्वात्मन्यत्यन्तमनुचितम् । आत्मन्यपि हि तद्रूपा[2]संभावनायां रागितायां च पशुप्रायत्वं स्यात् । नापि नीरागस्य, तस्यैवंविधविकल्पपरिहारैकव्यापारत्वात् । ननु च रागिणोऽपि कुतश्चित् कारणात् परिगृहीतकतिपयकालव्रतस्य वा, रावणप्रायस्य वा सीतादिविषये, दुष्यन्तप्रायस्य वाऽनिर्ज्ञातजातिविशेषे शकुन्तलादौ किमियं स्वसौभाग्याभिमानगर्भा तत्स्तुतिगर्भा चोक्तिर्न भवति । वीतरागस्यापि वाऽनादिकालाभ्यस्तरागवासनावासिततया मध्यस्थत्वेनापि तां वस्तुतस्तथा पश्यतो नेयमुक्तिर्न संभाव्या । न हि वीतरागो विपर्यस्तान् भावान् पश्यति । न ह्यस्य वीणाक्वणित काकरटितकल्पं प्र[3]तिभाति । तस्मात् प्रस्तुतानुसारेण उभयस्यापीयमुक्तिरुपपद्यते । अन्योक्तादपि ह्यप्रस्तुतः संभवन्नेवार्थो वक्तव्यः । न हि तेजसीत्थमन्योक्तिर्भवति—'अहो धिक् ते कार्ष्ण्यम्' इति । स(?सा) पर प्रस्तुतपरतयेति नात्रासंभवः, किं तर्हि सुश्लिष्टतैवेति । सत्यमेतत् । किं तु न ह्ययं श्लोकः क्वचित् प्रबन्ध इति श्रूयते, येन तत् प्रकरणानुगुणार्थतास्य प[4]रिकल्प्यते तस्मादन्योक्तिरेवेयम् । अस्मादनेन वान्येन गुणीकृतात्मना निःसामान्यगुणावलेपाध्मातस्य निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य विशेषज्ञमात्मनो न किंचिदेवापरं पश्यतः परिदेवितमेतदिति प्रकाश्यते । निःसामान्येति निजमहिमेति विशेषज्ञमिति प[5]रिदेवितमिति—अमीषां चतुर्णां वाक्यखण्डानामर्थस्य क्रमेण पादचतुष्टयतात्पर्यतया प्रतीयमानत्वात् । तथा चायं वि[6]निश्चयवृत्त्यन्ते **धर्मकीर्त्याचार्यस्य** श्लोक इति प्रसिद्धिः । एतदर्थसंसूचकश्चापरोऽपि हि स्फुट एव तस्य श्लोको विद्वद्भिः परिपठ्यते । य[7]था—

अनध्यवसितावगाहनमनल्पधीशक्तिनाप्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि ।
मतं मम जगत्यलब्धसदृशप्रतिग्राहकं प्रयास्यति प[8]योनिधेः पय इव स्वदेहे जराम् ॥५५३॥
[ विनिश्चयवृत्तौ धर्मकीर्तेः ]

अवगाहनमध्यवसितमपि न यत्र, आस्तां तस्य संपादनम् । परमं यदर्थतत्त्वं

1. The Locana (p. 487) reads कृपणता°. 2. E ताद्रूप्य°. 3. E drops प्रति. 4. A, B परिकल्पते. 5. A, B, C, D drop परिदेवितमिति. 6 A, B विनिश्चितवृत्त्य°. C विनिश्चेयवृत्त्य°. 7. C drops यथा. 8. A drops पयोनि. C. पयोनिधिः.

ऐरावणं स्पृशति मन्त्रयते मरुद्भि-
र्वज्रं परामृशति पश्यति योधसार्थान् ।
मेरोस्तटानि विषमीकुरुते महेन्द्र-
स्त्वच्छङ्कया निशि न याति नरेन्द्र निद्राम् ॥ ५६१ ॥

अत्र त्वय्युद्युक्ते न कश्चित् सुखं शेत इति सामान्ये प्रस्तुते विशेष उक्तः ।

अहो संसारनैर्घृण्यमहो दौरात्म्यमापदाम् ।
अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः ॥ ५६२ ॥ [ ]

अत्र क्वापि वस्तुनि विनष्टे विशेषात्मनि प्रस्तुते दैवस्वातन्त्र्यं सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितम् ।

---

कौस्तुभादिभ्योऽप्युत्तमम् । अलब्ध प्रयत्नपरीक्षितमपि न प्राप्त सदृशं यस्य तथाभूतं प्रतिग्राहकं, एकैको ग्राहो जलचर. प्राणी, ऐरावणोच्चैःश्रवोधन्वन्तरिप्रायो यत्र तदलब्धसदृशप्रतिग्राहकम् । इयति चार्थे साम्यादुपमालङ्कारोऽनन्तरं तु स्वात्मनि विस्मयधामतयाद्भुते विश्रान्तिः, परस्य च श्रोतृजनस्यात्यादरास्पदतया प्रयत्नग्राह्यतया चोत्साहजननेनैवभूतमत्यन्तोपादेयं सन् कतिपयसमुचितजनानुग्राहकं कृतमिति स्वात्मनि कुशलकारितान्प्रदर्शनया धर्मवीरस्पर्शनेन वीररसे विश्रान्तिरिति मन्तव्यम् । अन्यथा परिदेवितमात्रेण किं कृतं स्यात् । अप्रेक्षापूर्वकारित्वमात्मन्यावेदितं चेत् किं ततः, स्वार्थपरार्थासम्भवादिति । तदनेन निर्विवादतदीयश्लोकेनैव तदभिप्रायस्य परिदेवित-विषयस्य सबाध्यमानत्वात् पूर्वत्राप्यन्योक्तिरेव संभाव्यते । तत्रापि चाद्भुतास्वादपुरःसरा वीररसविश्रान्तिपरतानुगन्धेयेति । तर्हि यत्र प्रकरणमेव किंचिन्नास्ति तत्र कोऽलङ्कारः । यथा—'निम्नगण्डदुरारोहं (पृ० ४००)—' इति । उच्यते । यत्रोभयोरलङ्कारयोर-न्यतरपरिग्रहे न दोषः, नापि साधकं प्रमाणं, तत्र संकरालङ्कारो वक्ष्यते । अत्र च शठनरपोटापाटलयोरन्यतरस्याः प्राकरणिकत्वाभावान्न ज्ञायते किमियं समासोक्ति-रुतान्योक्तिरिति संकरालङ्कार एव । अन्ये त्वाहुः—यत एव प्रकरणापरिज्ञानमत एवात्र प्राधान्येन पाटलोपवर्णने क इव वस्तुपरिपोष इत्यन्यपरत्वे प्रवृत्तिनिवृत्ती प्रत्युपदेशाय शास्त्रमिव श्लोकाः कल्पन्त इति समासोक्तिपरिग्रहे कुतो दोषाभावः । तस्मादन्योक्तिरेवेयमिति ।

---

1. E °ग्राहकं 2 A, B, C drop प्र. 3. E °त्मन्यन्या°. 4. A, B एवं.
5. A, B पाटलोपवर्णने. 6. E °प्रवृत्यप्रवृत्ती.

ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च ।
ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः ॥ ५६३ ॥

[ ]

अत्र जरासंधः कार्यरूपां श्रद्धेयवचनतां प्रस्तुतामात्मनोऽभिव्यङ्क्तुं सुहृद्बान्धवरूपत्वकारणमप्रस्तुतं[1] वर्णयति ।

सग्गं अपारिआयं[2] कुत्थुहलच्छिविरहिअं[3] महुमहस्स उरं ।
सुमरामि महणपुरओ[4] अमुद्धयंदं च हरजडापब्भारं[5] ॥ ५६४ ॥

[सेतुबन्ध ४.२०]

अत्र जाम्बवान् वृद्धसेवाचिरजीवित्वव्यवहारकौशलादौ मन्त्रिताकारणे प्रस्तुते कौस्तुभलक्ष्मीविरहितहरिवक्षःस्मरणादिकमप्रस्तुतं कार्यं वर्णयति ।

तुल्ये प्रस्तुते तुल्यस्याभिधाने द्वौ प्रकारौ श्लिष्टविशेषणता सादृश्यमात्रं वा तुल्यान्तरस्याक्षेपहेतुः । यथा—

नालस्य प्रसरो जडेष्वपि कृतावासस्य कोशे रुचि-
र्दण्डे कर्कशता मुखे च मृदुता मित्रे महान् प्रश्रयः ।
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ ५६५ ॥

[शार्ङ्गधरपद्धतौ]

अत्राप्रस्तुतेनाम्बुजेन तुल्यविशेषणबलात्तुल्यः सत्पुरुष आक्षिप्यते ।

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवावदने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥ ५६६ ॥

[औचित्यविचारचर्चायां (पृ. १३९) भट्टेन्दुराजस्य]

1. I सुहृद्बान्धवरूपत्वमप्रस्तुतं कारणं. 2. I अप्पारिआयं. 3. S, I °रहियं.
4. S °पुरउ. 5. I हरजडा°.

अत्रार्णवस्य गर्हणयाऽन्यायोपार्जितधनत्वादिप्रतीयमानसादृश्यः कश्चित् पुरुषविशेष आक्षिप्यते ।

विशेष्यश्लिष्टता तु अन्योक्तिप्रयोजकतया न वाच्या । यथा—

पुंस्त्वादपि प्रविचलेद् यदि यद्यधोऽपि
यायाद् यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥ ५६७ ॥

[ भल्लट ७९. ]

अत्र पुरुषोत्तमशब्दस्यार्थद्वयवाचकत्वेऽपि सत्पुरुषचरितस्य प्रस्तुतत्वादभिधा एकत्र नियन्त्रितेति सत्पुरुष एव वाच्यो न विष्णुस्तच्चरितस्याप्रकृतत्वात् । तत्प्रतिपत्तिस्तु शब्दशक्तिमूलाद् ध्वनेरेव । यद्यपि च सत्पुरुषस्य विष्णोरिव विश्वोद्धरणे शक्तिर्नास्ति तथापि गुणवृत्त्या संभवतीति न दोषः ।

अन्योक्तिश्च क्वचित् स्तुतिरूपा । यथा— 'नालस्य प्रसरः' (पृ. ३६५) इति । क्वचिद् निन्दारूपा । यथा— 'आदाय वारि' (पृ. ३६५) इति । क्वचिदुभयरूपा । यथा—

निष्कन्दामरविन्दिनी स्थपुटितोद्देशा स्थलीं[1] पल्वले
जम्बालाविलमम्बु कर्तुमितरा सूते वराकी[2] सुतान् ।
दंष्ट्राया चतुरर्णवोर्मिपटलैराप्लाविताया मियं
यस्या एव शिशोः स्थिता विपदि भूः[3] सा पुत्रिणी पोत्रिणी ॥ ५६८ ॥

[ ]

अत्र पूर्वार्धे निन्दा, उत्तरार्धे तु स्तुति ।

क्वचिदनुभयरूपा यथा —

1. S, I केशरुस्थली. L drops पल्वले. 2. I वराही. 3. I वसुमती.

इतो वसति केशवः पुरमितस्तदीयद्विषा-
मितोऽपि शरणागताः शिखरिपक्षिणः शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ५६९ ॥

[नीतिशतक ६७]

अत्र निन्दा स्तुतिर्वा विस्मयोक्तावेवास्तमयत इत्यनुभयरूपा ।

१२१) व्यङ्ग्यस्योक्तिः पर्यायोक्तम् ॥ ९ ॥

व्यङ्ग्यस्य प्रतीयमानस्यार्थस्याभिधानं यत् तत् पर्यायेण भङ्ग्यन्तरेण कथनं पर्यायोक्तम् । अत एव चान्योक्तेरस्य भेदः । न हि तत्र गम्यमानस्यार्थस्य भङ्ग्यन्तरेणाभिधानम्, अपि त्वप्रस्तुतद्वारेण तस्याक्षेप इति । यथा --

शत्रुच्छेददृढेच्छस्य मुनेरुत्पथगामिनः ।
रामस्यानेन धनुषा देशिता धर्मदेशना ॥ ५७० ॥ [ ]

अत्र 'भीष्मेण भार्गवो जित' इति व्यङ्ग्यस्य 'देशिता धर्मदेशना' इत्यनया भङ्ग्या भणनम् ।

**व्यङ्ग्यस्येति** । योग्यनया निर्देशः ।

**अनया भङ्ग्या भणनमिति** । देशिता धर्मदेशनेति भङ्ग्यन्तररचितशब्दैरित्यर्थः । तेन यद् भङ्ग्यन्तरेणोच्यते तद् व्यङ्ग्यम् । यथा त्वेकघनरूपतात्मकप्रकारेण व्यङ्ग्यं प्रतीयते, न तथा वक्तुं शक्यते । क्रमभाविविकल्पप्रभवानां शब्दानां तथाभिधानशक्तेरभावात् । यथा गवि शुक्ले चलति दृष्टे गौः शुक्लश्चल इति विकल्पो यदेव दृष्टमभ्यासपाटवापेक्षी तदेव विकल्पयति न तु यथादृष्टम् । अशेषविशेषावच्छिन्नस्वलक्षणाकारतयानुभवस्योत्पत्तेः । तथा--अभिन्नासंसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति । निरंशस्य वस्तुनो भेदसंसर्गयोरभावात् । तौ हि विकल्पस्यैव व्यापारः । स ह्यभिन्नमपि वस्तु गौः शुक्लश्चल इत्येवं भिनत्ति । भिन्नमपि पदार्थजातमयं गौरयमपि गौरित्येवं संसृजति ।

1. L °णामि(? मि)नः 2. L °पत्रिणः. 3. L °दे कस्य. 4. A drops शब्दानां.

**१२२) विशेषविवक्षया भेदाभेदयोगायोगव्यत्ययोऽतिशयोक्तिः ॥ १० ॥**

प्रकृतस्यार्थस्य विशेषवर्णनेच्छया भेदस्य व्यत्ययोऽभेदाभिधानं यत्तदतिशयाभिधानादेकातिशयोक्तिः । यथा—

सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरञ् ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।
उपप्राकाराग्रं प्रहिणु नयने तर्कय मनाग्
अनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥ ५७१ ॥

[ विद्धशालभञ्जिका १.३१ ]

अत्र मुखचन्द्रयोर्भेदेऽप्यभेदः । यथा वा—

अंइ[1] दिअर किन्न पेच्छसि[2] आयासं किं मुहा पुंलोएसि[3] ।
जायाए बाहुमूलम्मि अद्धयंदाण परिवाडिं ॥ ५७२ ॥

[ सप्तशतकम् ५७१; गाथासप्तशती ६.७० ]

अत्र नखार्धचन्द्राणाम् ।

अभेदस्य व्यत्ययो भेदो द्वितीया । यथा—

अंन्नं[4] लडहत्तणयं अण्ण च्चिय कावि वत्तणच्छाया ।
सामा सामण्णपयावइस्स रेह च्चिय न होइ ॥ ५७३ ॥

[ ]

अत्र लटभत्वादेरभिन्नस्यैव[5] भेदेनाभिधानम् ।

योगस्य संबन्धस्य व्यत्ययोऽसम्बन्धस्तृतीया, यथा—

**अभेदाभिधानमिति ।** गौण्या वृत्त्येत्यर्थः ।

---

+ In the edition of Jivananda Vidyasagara the last two lines occur first.

1. S, I अयि दियर. L अइ दियर. 2. P, L पिच्छसिं; S. पिछसि. 3 I, L पलोएसि. 4 S, I अण्णं. 5. S °रभेदवर्णस्यैव.

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ ५७४ ॥

[ काव्यादर्श २.२१५ ]

अत्राभिसारिकाणां लक्षणक्रियायोगेऽपि ज्योत्स्नाबाहुल्योत्कर्षविवक्षयाऽयोग उक्तः । यथा वा—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ५७५ ॥

अत्र मदोदयस्य लक्षणेऽपि स्वाभाविकविभ्रमाणामुत्कर्षविवक्षया लक्षणस्यायोग उक्तः । एवम्—

[1]एंतो वि ण सच्च[2]विओ जीसे पसरंतपल्लवारुण[3]राओ ।
मज्जणतंबेसु [4]मंओ तह [5]मंयतंबेसु [6]लोअणेसु [7]अंमरिसो ॥५७६॥ इति

[8]अयोगस्य व्यत्ययो [9]योगश्चतुर्थी । यथा—

पश्चात् पर्यस्य किरणा[10]नुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥ ५७७ ॥

[ काव्यादर्श २.२५७ ]

अत्रानुद्गते चन्द्रे रागसागरवृद्धेरयोगेऽपि चन्द्रस्योद्दीपनविभावतातिशयप्रतिपादनार्थं योग उक्तः । यथा वा—

---

**एवमिति ।** मज्जनाताम्रयोर्लोचनयोर्मदरागे मदाताम्रयोः कोपोपरागे च वक्ष्यमाणेऽपि लक्षणायोगो दर्शनीयः ।

---

1. I पसे. 2. S °विउ. 3. S °राउ. 4. S मउ. 5. I मुरातंबेसु. 6. I लोयणेसु. 7. I शमरिसो. 8. L अयोग्यस्य. 9. L योग्य. 10 I °मुदीर्णे. 11. I °विभावना.

पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गयः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥ ५७८ ॥

[ नवसाहसाङ्कचरित १.२२ ]

तथा--

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो
न गुञ्जितं तन्न जहार यन्मनः ॥ ५७९ ॥

[ भट्टि० २.१९ ]

अत्र वराङ्गनादीनां पङ्कजादीनां च निःशेषतया पुरजलादिव्याप्तेरयोगेऽपि योग उक्तः । यथा वा--

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥ ५८० ॥

[ शिशुपालवध ४.२० ]

अत्र वारणेन्द्रलीलां गिरिर्वहतीत्यसंबन्धेऽपि संबन्धः । यद् वा गिरिवारणेन्द्रगतयोर्लीलयोर्भेदेऽप्यैक्यमध्यवसितमिति[1] । यथा वा--

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति चिरं[2] कथमिव कवयो न ते वन्द्याः ॥ ५८१ ॥

[ रुद्रट ९.६ ]

अत्र दिवङ्गतकविगुणानां रमणायोगेऽपि योग उक्तः । तथा--

हृदये चक्षुषि वाचि च तव सैवाभिनवयौवना वसति ।
वयमत्र निरवकाशा विरम कृतं पादपतनेन ॥ ५८२ ॥

[ रुद्रट ९.८ ]

1. I drops इति 2. गिरः is the reading found in Rudraṭa

अत्रैकस्य युगपदनेकवृत्तित्वायोगेऽपि योग उक्तः। एवंविधे च सर्वत्र विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते। तां विना प्रायेणालङ्करणत्वायोगादिति न सामान्यमीलितैकावलीनिदर्शनाविशेषाद्यलङ्कारोपन्यासः श्रेयान्।

**१२३) विवक्षितस्य निषेध इवोपमानस्याक्षेपश्चाक्षेपः ॥११॥**

विशेषविवक्षयेत्यनुवर्तते। वक्तुमिष्टस्य प्राकरणिकत्वात् प्रधानस्याशक्यवक्तव्यत्वमतिसिद्धत्वं वा विशेषं वक्तुं निषेध इव न तु निषेध एव निषेधमुखेन विशेष एव तात्पर्यादित्येक आक्षेपः। उपमानस्य च यै आक्षेपस्तिरस्कारः सोऽन्यः।

निषेधो यथा—

अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः।
इयदेवास्त्वतोऽन्यन किमुक्तेनाप्रियेण ते॥ ५८३॥

अयं वैक्ष्यमाणमरणविषयो निषेधात्माक्षेपः। [भामह २.६९]

**अलङ्करणत्वायोगादिति**। तथा चाह—

(152) सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।

[भामह २.८५]

**सामान्येति**। 'मल्लिका—' (पृ. ३६९) इत्यादौ सामान्यम्, 'अपाङ्गतरले' (पृ. ३६९) इति 'एंतोवि' (पृ. ३६९) इत्यनयोर्मीलितम्, 'पुराणि' (पृ. ३७०) इति 'न तज्जलम्' (पृ. ३७०) इत्यनयोरेकावली, 'उदयति' (पृ. ३७०) इत्यादौ निदर्शना, 'दिवमप्युपयातानाम्' (पृ. ३७०) इति 'हृदये चक्षुषि' (पृ ३७०) इत्यनयोर्विशेषश्चालङ्कारो यथान्यैः प्रदर्शितस्तथा न दर्शनीय इति।

**अशक्यवक्तव्यत्वमिति**। वक्ष्यमाणविषयतामाह।

**अतिसिद्धत्वमिति**। अतिप्रसिद्धत्वम्। अनेनोक्तविषयतामाह। 'किमुक्तेनाप्रियेण ते' (श्लो.५८३, चतुर्थः चरणः) इति त्वददर्शनात् तास्ता अवस्था या वक्तुमपि न शक्यन्त इत्यस्यार्थस्य प्रतिपत्तये।

1. S drops य. 2. I त्वा. 3. I वक्ष्यमाये मरणयो which is meaningless. It is a corruption of वक्ष्यमाणमरणविषयो. 4. E drops सामान्येति.

उक्तविषयोऽपि यथा—

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ५८४ ॥

उपमानाक्षेपो यथा—

तस्यास्तन्मुखमस्ति सौम्य[1] सुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ[2] यदि च ते किं नाम नीलोत्पलैः ।
किं वा कोमलकान्तिभिः किसलयैः[3] सत्येव तत्राधरे
हा[4] धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥ ५८५ ॥

यथा वा—

गर्वमसंवाह्यमिमं लोचनयुगलेन वहसि किं भद्रे[+] ।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥ ५८६ ॥
[रुद्रट ८.७८]

अत्र लोचनयुगलस्योपमानीकृतस्याक्षेपः । यथा वा—

अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥५८७॥
[ ]

अत्र हालाहलस्योपमानस्याक्षेप इति न प्रतीपमलङ्कारान्तरम् ।

**किमनेनेति** । त्वदप्राप्तौ ज्योत्स्नादयः स्फुलिङ्गव्यापारहेतवस्तस्या भवन्तीत्य (? भवन्तीत्यति) प्रसिद्धोऽयमर्थ इत्यस्य प्रतिपादनाय ।

1. Vāmana on IV.3.27 and Locana (p. 113) read सौम्यसुभगं. 2. I दृशौ च यदि ते. Vāmana · दृशौ च यदि चेत्. Locana : दृशौ यदि च तैः. 3. I, L किशलयैः. 4. P, I हौ. + भद्रे in Rudraṭa's Kāvyālaṁkāra, which seems to be the correct reading.

**१२४) अर्थानां विरोधाभासो विरोधः ॥ १२ ॥**

जातिगुणक्रियाद्रव्यरूपाणां पदार्थानां सजातीयेन विजातीयेन वा वस्तुवृत्त्याऽविरोधेऽपि परस्परप्रतिबन्धलक्षणो व्याघातलक्षणो वा यो विरोधस्तद्वदाभासमानो विरोधः ।

तत्र जातेर्जात्या यथा—

एकस्यामेव तनौ बिभर्ति युगपन्नरत्वसिंहत्वे ।
मनुजत्ववराहत्वे तथैव यो विभुरसौ जयति ॥ ५८८ ॥
[रुद्रट ९.३७]

गुणेन यथा—

द्रोणाश्वत्थामरामेषु श्रुत्वा श्रुत्वा द्वयं स्थितम् ।
ब्राह्मण्यमथ शौर्यं च को न चित्रीयते पुमान् ॥ ५८९ ॥
[　　]

क्रियया यथा—'सिंहोऽपि परिभूयते'।

द्रव्येण यथा—

सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥ ५९० ॥
[　　]

गुणस्य गुणेन यथा—

सत्यं त्वमेव सरलो जगति जराजनितकुब्जभावोऽपि ।
ब्रह्मन् परमसि विमलो विततावरधूममलिनोऽपि ॥ ५९१ ॥
[रुद्रट ९.३५]

---

**व्याघात इति** । एकतरप्रतिबन्धरूपः ।

**तद्वदाभासमान** इति । अयं भावः--विशेषविवक्षयेत्यत्राप्यनुवर्तमानत्वात्, यत्र भावान्तरेभ्यो वैशिष्ट्यं ख्यापयितुमामुखे विरोधप्रतीतिकारि न तु विरोधपर्यवसायि वचस्तत्रायं विरोधालङ्कारः, यत्र पुनः परिहारासंभवस्तत्र व्याहतत्वदोष इति ।

**सत्यं त्वमेवेति** । अत्र सरलविमलशब्दयोरेकार्थत्वात्, श्लिष्टता न समस्तीति संकराशङ्का न कार्या । चेतसो हि सरलत्वाद् विमलत्वाच्च सोऽपि सरलविमलः ।

---

1. I याघो.　2. I °यमेषु.　3. I तु.　4. S गुणेन गुणस्य.　P, I, L °भासो.

क्रियया यथा—

पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम्।
परुषमपि सुजनवाक्यं मलयजरसवत् प्रमोदयति ॥ ५९२ ॥
[ ]

द्रव्येण यथा—

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥ ५९३ ॥

क्रियायाः क्रियया यथा—

बालमृगलोचनायाश्चरितमिदं चित्रमत्र यदसौ माम्।
जडयति सन्तापयति च दूरे हृदये च मे वसति ॥ ५९४ ॥
[रुद्रट ९.३६]

द्रव्येण यथा—

सीतां ददाह नैवाग्निर्हिमं दहति भूरुहः।
ताप्यन्ते शशिना चित्रं विरहे कामिनो भृशम् ॥ ५९५ ॥
[ ]

द्रव्यस्य द्रव्येण यथा—

समदमतङ्गजमदजलनिःस्यन्दतरङ्गिणीपरिष्वङ्गात्।
क्षितितिलक त्वयि तटजुषि शंकरजटापगापि कालिन्दी ॥ ५९६ ॥
[ ]

एवं दश भेदाः। एषु परस्परप्रतिबन्धो विरोधः।

व्याघातो यथा—

अप्यसज्जनसांगत्ये न वसत्येव वैकृतम्।
अक्षालितविशुद्धेषु हृदयेषु मनीषिणाम् ॥ ५९७ ॥ [ ]

अत्र क्षालनाभावे विशुद्धिर्व्याहन्यते। यथा वा—

1. S पेसल॰. 2. I निःसङ्ग. 3. S जट॰.

महर्षिनि कुले जन्म रूपं स्मरसुहृद्वयः ।
तथापि न सुखप्राप्तिः कस्य चित्रीयते न धीः ॥ ५९८ ॥
[उद्भट ५.५.२]

तथा—

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥ ५९९ ॥ [ ]

तथा—

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥ ६०० ॥
[बालरामायण ३.११]

एषु कारणासामग्र्ये फलाभावो व्याहन्यते । यथा वा—

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनं परिणाहिनं स्तनभरं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ ६०१ ॥
[अमरु० ३४]

अत्रान्यदेशस्थेन[1] कारणेनान्यदेशस्थकार्योत्पादो व्याहन्यते । यथा वा[2]—

दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसंचयो मलीमसः शुक्लतरं निजं यशः ॥ ६०२ ॥
[कादम्बरी श्लो. १८]

अत्र मलीमसेन शुक्लतरीकरणं व्याहन्यते । तथा—

आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ ६०३ ॥
[रुद्रट ९.४७]

अत्रानन्ददानं शरीरतापेन व्याहन्यते ।

1. I. °स्थितेन. 2. S यथा वा.

शिरीषादपि मृद्वङ्गी [1]क्वेयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥ ६०४ ॥

[नवसाहसाङ्कचरित १६.१८]

अत्र मार्दवं कार्कश्येन व्याहन्यते । तथा—

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥ ६०५ ॥

[शिशुपालवध १३.४०]

अत्र हीनेन गुरुकार्यकरणं व्याहन्यते । तथा—

किं ददातु किमश्नातु भर्तव्यभरणाकुलः ।
उदारमतिरात्तेऽपि जगत्त्रितयमात्रके ॥ ६०६ ॥ [ ]

अत्राधिकेन स्वल्पकार्याकरणं व्याहन्यते । यथा वा—

अहो विशालं भूपाल भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ६०७ ॥

[काव्यादर्श २.२१९]

अत्र मानाशक्यत्वेन मानं व्याहन्यते । तथा—

भवत्संभावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥ ६०८ ॥

[कुमार० ६.५९]

अत्राङ्गानामतिविपुलतया परितोषामानं व्याहन्यते । यथा वा—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ ६०९ ॥

[विद्धशालभञ्जिका १.२]

अत्र दृशैव दाहो जीवनं च व्याहन्यते । यथा वा—

1. I कथमा°.

धवलो सि जइ वि सुंदर तह वि तए मज्झ रंजिअं हिअयं ।
रायभरिए वि हिअए सुहय निहित्तो न रत्तो सि ॥ ६१० ॥
[सप्तशतकम् ६६७; गाथा° ७.६५]

अत्र धवलेन रञ्जनं रागभृतहृदयेनारञ्जनं च व्याहन्यते । एवं च विभावनाविशेषोक्त्यसंगतिविषमाधिकव्याघाततद्गुणाः पृथगलङ्कारत्वेन न वाच्याः । विरोध एवान्तर्भावात् । उक्तिवैचित्र्यमात्राद् भेदे च लक्षणकरणेऽलङ्कारानन्त्यप्रसङ्गः ।

१२५) सहार्थबलाद्धर्मस्यान्वयः सहोक्तिः ॥ १३ ॥

धर्मस्य क्रियागुणलक्षणस्य सहार्थसामर्थ्याद् योऽन्वयः प्रतिपाद्यतेऽर्थादनेकेषु वस्तुषु सा सहभावस्योक्तिः सहोक्तिः । यथा—

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय च व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥ ६११ ॥
[रघु० ३.६१]

**विभावनेऽति** । 'अप्यसञ्जनसांगत्ये' (पृ. ३७४) इत्यादौ विभावना, 'महर्धिनि' (पृ. ३७५) इति 'स एकः' (पृ. ३७५) 'कर्पूर इव' (पृ. ३७५) इति च त्रिषु विशेषोक्तिः, 'सा बाला' (पृ. ३७५) इत्यादावसङ्गतिः, 'दिशामलीकालक' (पृ. ३७५) इति 'आनन्दममन्दमिमम्' (पृ. ३७५) इति 'शिरीषादपि' (पृ. ३७६) इति 'विपुलेन' (पृ. ३७६) इति 'किं ददातु' (पृ. ३७६) इति च पञ्चसु विषमम्, 'अहो विशालम्' (पृ. ३७६) इति 'भवत्संभावनोत्थाय' (पृ. ३७६) इति च द्वयोरधिकम्, 'दृशा दग्धम्' (३७६) इति व्याघातः, 'धवलोऽसि' (पृ. ३७७) इत्यत्रातद्गुणश्चेति पृथगलङ्कारा न वाच्या इति ।

**रघुर्भृशमिति** । अत्र रघुगता पतनक्रिया शाब्दी । अश्रुगता तु सहार्थसामर्थ्यादवसीयते । एवं गुणोदाहरणेऽप्यभ्यूह्यम् । अत्र चाभिधाव्यापाराद् धर्मा नोभयान्वयिनः प्रतीयन्ते, प्राकरणिकत्वाप्राकरणिकत्वाभ्यां चोपमानोपमेयभावः, तेनास्याः सहोक्तेर्नोपमादावन्तर्भावः । तथा ह्युपमायामुभयोरुपमानोपमेय-

1. I drops सहोक्तिः. 2. In A, B, C 'शिरीषादपि' precedes 'आनन्दममन्दमिमम'. We have changed the order to suit the order of verses in the original.

सह दीर्घा मम श्वासैरिमाः संप्रति रात्रयः ।
पाण्डुराश्च ममैवाङ्गैः सार्धं ताश्चन्द्रभूषणाः ॥ ६१२ ॥

[ काव्यादर्श २.३५२ ]

**१२६) श्लिष्टविशेषणैरुपमानधीः समासोक्तिः ॥ १४ ॥**

श्लेषवद्भिरुपमेयविशेषणैर्योपमानस्य प्रतीतिः सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः । यथा—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥६१३॥

[ ध्वन्यालोके (पृ. १०९) पाणिनेः ]

योरनुयायित्वं धर्माणामिववत्याद्यभिधाव्यापारात् प्रतीयते, इह तु तादृशोऽभिधाव्यापारो नोपलभ्यते तेनात्रोपमात्वाभावः । कश्चित्तु—

(153) समासोक्तिः सहोक्तिश्च नालङ्कारतया मता ।
अलङ्कारान्तरत्वेन शोभाशून्यतया तथा ॥ [कुन्तकस्य ?]

इति सहोक्तिरलङ्कारो न भवतीति प्रतिपादयति । तत्र शोभाशून्यत्वम् अहृद्यत्वं, तत्र चोपमादयोऽप्यलङ्कारा न भवन्तीति सर्वसम्मतमेव । अहृद्यत्वे च 'शिष्येण सहोपाध्यायः पठति', 'पुत्रेण सह पिता तिष्ठति' इत्यादौ सहोक्तिर्मा भवतु ।

सह दिअहसनिसाहिँ दीहरा सासदंडा सह मणिवलएहिँ बाहधारा गलंति ।
तुह सुहअ विओए तीए उव्वेविरीए, सह य तणुलदाए दुब्बला जीविदासा ॥५४८॥

[ कर्पूरमञ्जरी २.९. ]

इत्यादौ तु हृद्यत्वे किमिति नेष्यते । अथ तत्र परस्परसाम्यसमन्वयो मनोहारितानिबन्धनमिति प्रतीयमानोपमास्वरूपं नातिवर्तेत इत्युपमैवेष्यते । हन्त तर्हि रूपकापह्नुत्यप्रस्तुतप्रशंसादयोऽपि पृथग् न वक्तव्याः । तत्राप्युपमानोपमेयभावप्रतीतेरुपमैवैकालङ्कारो वाच्यो नालङ्कारान्तरम् । यदाह वामनः—

(154) 'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' इति । [ वामन ४.३.१ ]

अथ रूपकादिषु तत्त्वारोपादिलक्षणं विशेषमङ्गीकृत्य रूपकादिव्यवहारः प्रवर्त्यते, तर्हि सहोक्त्यादावपि सहार्थसामर्थ्यावसितसाम्यसमन्वयलक्षणो विशेषः समस्तीति सहोक्त्यादिभिः किमपराद्धमित्यलं बहुना ।

**उपोढरागेणेति** । उपोढो धृतो रागः सान्ध्योऽरुणिमा, प्रेम च येन ।

---

1. S drops सा. 2. I drops यथा. 3. C drops अहृद्यत्वं. 4. E भान्तीति
5. E drops च. 6. A, B, C, D दिअस°. 7. D, E सुहय. 8. D °योविशेष.

अत्र निशाशशिनोरुपमेययोस्पोढरागादिश्लिष्टविशेषणबलान्नायकयोरुपमानयोः प्रतीतिः ।

१२७) स्वभावाख्यानं जातिः ॥ १५ ॥

अर्थस्य तादवस्थ्यं स्वभावः । स च संस्थानस्थानकव्यापारादिस्तस्य वर्णनं जातिः ।

विलोलास्तारका ज्योतींषि, नेत्रविभागाश्च यत्र । तथेति झटित्येव, प्रेमरभसेन च गृहीतमाभासितं, परिचुम्बितुमाक्रान्तं च । निशाया मुखं प्रारम्भः, वदनकोकनदं च । यथेति । झटितिग्रहणेन, प्रेमरभसेन च । तिमिरं च अंशुकाश्च सूक्ष्मा अंशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलं, तिमिरं वांशुकं नीलजालिका नवोढाप्रौढवधूचिता । न तु तिमिरमेवांशुकमिति व्याख्येयम् । एकविषयरूपकत्वापत्तेः । रागाद् रक्तत्वात् सन्ध्याकृतात्, तदनन्तरं प्रेमरूपाच्च हेतोः । पुरोऽपि पूर्वस्यां दिशि, अग्रे च । गलितं प्रशान्तं, पतितं च । तया रात्र्या करणभूतया समस्तं मिश्रितमुपलक्षणत्वेन वा । न लक्षितं रात्रिप्रारम्भोऽसौ इति न ज्ञातम् । तिमिरशबलितांशुदर्शने हि रात्रिमुखमिति लोकेन लक्ष्यते, न तु स्फुट आलोके । नायिकापक्षे तु तयेति कर्तृपदं रात्रिपक्षेऽपिशब्दो लक्षितमित्यास्यानन्तरम् । अत्र च नायकेन पश्चाद्गतेन चुम्बनोपक्रमे पुरो नीलांशुकस्य गलनं पतनम् । यदि वा पुरोऽग्रे तथागृहीतं नायकेन मुखमिति संबन्धः । एतस्याश्च समासोक्तेर्न श्लेषमन्तरेण विविक्तविषयतोपलभ्यत इति श्लेषेण सह संकराशङ्का न कार्या । येषां ह्यलङ्काराणां विविक्तविषयतयाप्यात्मलाभः संभवति तेषामेव परस्परसंकीर्यमाणतायां संकरता युक्ता । यथा विरोधव्यतिरेकयोः श्लेषस्य च । श्लेषाभावेऽपि हि 'एकस्यामेव तनौ' (पृ. ३७३) इत्यादौ विरोधो, 'यस्यावर्जयतो नित्यम्' (पृ. ३८३) इत्यादौ व्यतिरेकश्च दृश्यते । विरोधव्यतिरेकाभावे च 'असावुदयमारूढः' (पृ. ३२८) इत्यादौ श्लेषश्चेति । भवतु विरोधश्लेषयोः श्लेषव्यतिरेकयोश्च संकरत्वम् । समासोक्तिस्तु समानविशेषणाभिधायिभिः श्लेषपदैरेवात्मानं प्रतिलभत इति नास्या विविक्तो विषय उपलभ्यते । श्लेषापवादेनैवास्याः प्रवृत्तेरिति ।

**नायकयोरिति** । नायकश्च नायिका चेत्येकशेषः ।

**तादवस्थ्यमिति** । सानुभवैकगोचरा अवस्था यस्य स तदवस्थः तस्य भावस्तादवस्थ्यमिति ।

1. S संस्थानं स्थानकं व्या°. 2. A, B, C, D व्यापृ°. 3. C परिचुम्बित°. 4. A, B drop °कृतादनन्तरं. C. कृतंतरं. 5. E drops from पश्चा° to नायकेन (l. 17). 6. A drops न.

तत्र संस्थानं यथा—

पर्याणस्खलितस्फिजः करतलोत्क्षिप्तोत्तरीयाञ्चला
वल्गद्भिस्तुरगैर्गता विधुरतामज्ञातवल्गाग्रहाः ।
नेपथ्यैः कथयन्ति भूपतनया दुःश्लिष्टसंपादितै-
र्निर्लक्ष्यार्पितचक्षुषः परिचयोपात्तां श्रियं श्रोत्रियाः ॥ ६१४ ॥

[ ]

स्थानकं यथा—

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥६१५॥

[कुमार० ३.७०]

---

अयमर्थः—कविप्रतिभया निर्विकल्पकप्रत्यक्षकल्पया विषयीकृता वस्तुस्वभाव यत्रोपवर्ण्यन्ते स जातेर्विषयः । एवं च—

(155) अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः ।
अलङ्कार्यतया तेषां किमन्यदवशिष्यते ॥ [वक्रोक्तिजीवित १·११]

इति यत् कैश्चित् प्रत्यपादि तन्निरस्तमेव । वस्तुनो हि सामान्यस्वभावो लौकिकोऽर्थोऽलङ्कार्यः । कविप्रतिभासंरम्भविशेषविषयस्तु लोकोत्तरोऽर्थोलङ्करणमिति । तथा चाह—

(156) उच्यते वस्तुनस्तावद् द्वैरूप्यमिह विद्यते ।
तत्रैकमन्यसामान्य यद् विकल्पैकगोचरः ॥ [व्यक्तिविवेक २·११४]

(157) स एव सर्वशब्दाना विषयः परिकीर्तितः ।
अत एवाभिधीयन्ते ध्यामलं बोधयन्त्यलम् ॥[व्यक्तिविवेक २·११५]

(158) विशिष्टमस्य यद् रूपं तत् प्रत्यक्षस्य गोचरः ।
स एव सत्कविगिरा गोचरः प्रतिभाभुवाम् ॥ [व्यक्तिविवेक २·११६]

यतः—

(159) रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः ।
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥ [व्यक्तिविवेक २·११७]

(160) सा हि चक्षुर्भगवतस्तृतीयमिति गीयते ।
येन साक्षात्करोत्येष भावाँस्त्रैकाल्यवर्तिनः ॥ [व्यक्तिविवेक २·११८]

(161) अस्य स्वभावस्योक्तिर्या सालंकारतया मता ।
यतः साक्षादिवाभान्ति तत्त्वार्थाः प्रतिभार्पिताः ॥ [व्यक्तिविवेक २·१२०]

व्यापारो यथा—

ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मिताः कथा नयनोपान्तविलोकितं च तत् ॥६१६॥
[कुमार० ४.२३]

**१२८) स्तुतिनिन्दयोरन्यपरता व्याजस्तुतिः ॥ १६ ॥**

स्तुतेर्निन्दापरता । निन्दायाश्च स्तुतिपरता यत्रोच्यते सा व्याजरूपा व्याजेन वा स्तुतिर्व्याजस्तुतिः । यथा—

दिनमवसितं विश्रान्ताः स्मस्त्वया मरुकूप हे
परमुपकृतं शेषं वक्तुं ह्रिया वयमक्षमाः ।
भवतु सुकृतैरध्वन्यानामशोषजलो भवान् ।
इयमपि घनच्छाया भूयात्तवोपतटं शमी ॥६१७॥ [        ]

---

यथा । ऋजुतामित्यादि ।

(162) सामान्यस्तु स्वभावो यः सोऽन्यालङ्कारगोचरः ।
श्लिष्टमर्थमलङ्कर्तुमन्यथा को हि शक्नुयात् ॥
[व्यक्तिविवेक २·१२१]

(163) वस्तुमात्रानुवादस्तु पूरणैकफलो हि यः ।
अर्थदोषः स स दोषज्ञैरपुष्ट इति गीयते ॥ [व्यक्तिविवेक २·१२२]

**व्याजरूपेति** । छद्मरूपा निन्दाद्वारिकेत्यर्थः ।

**व्याजेनेति** । परमार्थेन तु निन्दैवेत्यर्थः । यत्तु निन्दापूर्विकायां स्तुतौ केनचिदुदाहृतम्—

आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं
जाता संप्रति साम्बुराशिरशना जाया कुलोद्भूतये ।
पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा
युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥ ५५४ ॥ इति ।

तदस्माकं ग्राम्यं प्रतिभाति । अत्यन्तासभ्यस्मृतिहेतुत्वात् । क्व चानेन स्तुतिः, प्रकृतत्वे वंशक्रमेण राजेति हि किमिदमित्येवंप्राया व्याजस्तुतिः । सहृदयगोष्ठीषु निन्दितेत्युपेक्ष्यैव ।

---

1. I सम्मिता. 2. S °लोकन. 3. I °मशेष°. 4. E drops from व्याजे° to °त्यर्थः 5. A drops तव मही. 6. A, B, C, E drop from प्रकृत° to °स्तुतिः.

किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥ ६१८ ॥
[ सुभाषितावलौ (२५४४) मातङ्गदिवाकरस्य ]

**१२९) वाक्यस्यानेकार्थता श्लेषः ॥ १७ ॥**

पदानामेकार्थत्वेऽपि यत्र वाक्यस्यानेकार्थता स श्लेषः । यथा—

दिशः प्रसादयन्नेष तेजोभिः प्रसृतैः सदा ।
न कस्यानन्दमसमं विदधाति विभाकरः ॥ ६१९ ॥ [ ]

अत्राभिधाया अनियन्त्रणाद् द्वावप्यर्कभूपौ वाच्यौ ।

**१३०) उत्कर्षापकर्षहेत्वोः साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्यं व्यतिरेकः ॥ १८ ॥**

उपमेयस्य प्राकरणिकस्य यदाधिक्यमर्थादुपमानात् स व्यतिरेकः । स चोत्कर्षापकर्षहेत्वोः क्रमेण युगपद् वोपादाने त्रिविधायामुक्तौ

**अनेकार्थतेति** । विभा करोतीत्येकमेव हि[1] यौगिकमर्थं प्रतिपादयन् विभाकरशब्दः साधारणार्कभूपलक्षणार्थद्वयप्रतिपादको भवतीति दिगादिशब्दा अप्येकार्थप्रतिपादका एव सन्तोऽनेकार्थाः । तथा हि—दिग्लक्षण एक एवार्थ एकत्र ककुभोऽन्यत्र तत्स्थाः प्रजाः । प्रसादनं प्रकाशनं, हर्षाधानं च । तेजो ज्योतिः प्रतापश्च[2] ।

**अभिधाया अनियन्त्रणादिति** । द्वयोरप्यर्थयोः प्राकरणिकतया विवक्षितत्वादिति भावः ।

**उपमेयस्याधिक्यमिति** न तूपमानं । यत्तु—

क्षीणः क्षीणोऽपि शशी भूयो[3] भूयोऽभिवर्धते[4] सत्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥ ५५५ ॥
[ रुद्रट ७.९० ]

इत्यादावुपमानस्योपमेयादाधिक्यमिति केनचिदुक्तं, तदयुक्तम् । यौवनगतास्थैर्यस्य ह्यात्राधिक्यं विवक्षितमिति यथोक्तमेव श्रेयः ।

1. E drops हि. 2. E प्रधानश्च तापश्च. 3 A, C drop one भूयो.
4. Rudraṭa has विवर्धते. E °भूपि°.

युगपदनुपादानेऽनुक्तौ चैकविधायां चतुर्विधः । पुनश्च साम्यवाचकस्योक्तावनुक्तौ वाष्टभेदः । यथा—

यस्यावर्जयतो नित्यं रिपूनप्युज्ज्वलैर्गुणैः ।
लक्ष्यते नेतरस्येव गाम्भीर्यैकनिधेः स्मयः ॥ ६२० ॥ [ ]

अत्र गाम्भीर्यैकनिधित्वमुपमेयोत्कर्षहेतुरुक्तः ।

'तुच्छस्यान्यजनस्येव न स्मयो हन्त लक्ष्यते' ।

इत्यत्रैव एवं पाठे तुच्छत्वमुपमानापकर्षहेतुर्भवति ।

असिमात्रसहायोऽयं प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत् सगर्वोऽयं धृतेर्निधिः ॥ ६२१ ॥ [ ]

अत्रोपमानोपमेयगतौ युगपदुत्कर्षापकर्षहेतू उक्तौ ।

शीर्णपर्णाम्बुवाताशकष्टेऽपि तपसि स्थिताम् ।
समुद्वहन्तीं नापूर्वं गर्वमन्यतपस्विवत् ॥ ६२२ ॥

[उद्भट २.९]

अत्रोत्कर्षापकर्षहेत्वोर्द्वयोरप्यनुक्तिः । एवं साम्योक्तौ चत्वारो भेदाः ।

साम्यानुक्तौ यथा—

नवीनविभ्रमोद्भेदतरङ्गितगतिः सदा ।
मुखेन स्मितमुग्धेन जयत्येषा सरोरुहम् ॥ ६२३ ॥ [ ]

अत्रोपमेयोत्कर्षः । इवादिपदविरहात् तु साम्यस्यानुक्तिः । अत्रैव 'विडम्बयति वक्त्रेण निश्येव स्मितमम्बुजम्' इति पाठपरिणामे उपमानापकर्षः ।

'आननेनाकलङ्केन जयन्तीन्दुं कलङ्कितम्' । ६२४ ।

अत्र युगपदुत्कर्षापकर्षौ ।

1. I युगपदपादाने. There are marks of dropping like this .. over
2. S °वाचकोक्ता. 3. I drops एवं. 4. S मात्मनोना°. 5. S °न्युक°.

अहो विडम्बयत्येषा वदनेन सरोरुहम् । ६२५ ।

अत्रोत्कर्षापकर्षहेत्वोरनुक्तिः । साम्यं त्वाक्षेपात् सर्वत्र प्रतीयते। श्लेषव्यतिरेकस्तु सङ्करालङ्कारविषय इति तत्रैवोदाहरिष्यते।

**१३१) विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्यां समर्थनमर्थान्तरन्यासः ॥ १९ ॥**

साधर्म्येण वैधर्म्येण वा विशेषो यत्र सामान्येन समर्थ्यते सोऽर्थान्तरस्येव न्यसनमर्थान्तरन्यासः । तत्र साधर्म्येण यथा—

---

**संकरालङ्कारविषय इति** इति । श्लेषव्यतिरेकयोरन्यत्रापि लब्धसत्ताकत्वादिति भावः । ततश्च तद्भेदा अत्र न प्रदर्शयितुमुचिताः ।

यद्यप्यनुपमचरितस्तथापि तव नाच्युतस्तुलां लभते ।
स हरिर्नाम्ना देवः स हरिर्वरस्तुरगनिवहेन ॥५५६॥

इत्यादयस्तु श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादाने ये भेदाः संभवन्ति त उक्तलक्षणेनैव संगृहीताः, तत्र ह्येकस्य पदस्य द्विरुपादानाच्च श्लेषः। उपमानादुपमेयस्याधिक्यमस्तीति व्यतिरेको भवत्येव ।

**अर्थान्तरस्येवेति**। यत्र हेतोर्हेतुमता सह व्याप्तिर्गूढत्वात् कथञ्चित् प्रतीयते, न तु स्पष्टमवभासते, तत्रार्थान्तरस्येवासमानजातीयस्येव वस्तुनो यद् न्यसनमसावर्थान्तरन्यास. । तत्तु यद् यत् कृतकं तत्तदनित्यमित्येवंप्रायमित्यर्थः ।

नन्वन्योक्तिनिदर्शनाभ्या नाय भिद्यते। तथा हि–'ऐरावणं स्पृशति (पृ. ३६४)'–इत्यादावन्योक्तौ विशेषेण महेन्द्रवृत्तान्तेन वाच्येन त्वय्युद्युक्ते न कश्चित् सुखं शेते इति सामान्यं गम्यमानं समर्थ्यते। तथा 'होइ न गुणाणुराओ' (पृ. ३५३) इत्यादौ निदर्शने दृष्टान्तेन दार्ष्टान्तिकं समर्थ्यते, तेनास्य लक्षणस्यातिव्याप्तिः। सत्यम्। उभयत्रापि तत्र समर्थ्यसमर्थकभावोऽवगम्यते किं तु यथार्थान्तरन्यासे न तथा तयोः। अर्थान्तरन्यासे हि समर्थ्यस्य स्वकण्ठेनोपात्तस्य समर्थनम्। अन्योक्तौ तु न तत्तथा। निदर्शने च यद्यपि स्वकण्ठेनोपादानं समर्थ्यस्य तथापि न तत्र विशेषं प्रति सामान्यस्य समर्थकभावः । अपि तु सामान्यविशेषौ प्रति विशेषस्य । यतो दृष्टान्तस्य विशेषरूपतयैव प्रतिबिम्बभावः संगच्छत इति पृथगवस्थित एवायम्।

---

1. A, B युक्तेन. 2. E drops from दा° to र्थ्यते. 3. A, B सामर्थ्य समर्थक°.

रथस्थमालोक्य रथाङ्गपाणिं स्थाने स्थिता श्रीरिति सोऽभिदध्यौ।
वैराणि कार्योपनिबन्धनानि निर्मत्सरा एव गुणेषु सन्तः ॥ ६२६ ॥
[ ]

वैधर्म्येण यथा—

अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या।
पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥ ६२७ ॥
[ शिशुपालवध १९.२८ ]

## १३२) स्तुत्यै संशयोक्तिः ससन्देहः ॥ २० ॥

स्तुत्यै अलङ्कारान्तरगर्भीकारेण प्रस्तुतवस्तुवर्णनार्थं संशयस्योक्ति-निर्णयान्ताऽनिर्णयान्ता वा भेदकस्यानुक्तानुक्तौ वा ससन्देहः। यथा—

---

**स्तुत्यै इति।** स्तुतये यत् संशयवद् वचः प्रयुज्यते तत्र ससन्देहालङ्कार-संज्ञा। सह सन्देहेन अनिश्चयेन वर्तत इति कृत्वा। त्रिधा खलु सन्देहवद् वचो भवति। सन्देहस्य प्रतिपादकत्वेन उत्पादकत्वेन अलङ्कारान्तरच्छायां गर्भीकृत्यासन्देहेऽपि सन्देहस्येव जननेन चेति। संशयश्च शुद्धसंकीर्णमूढभेदात् त्रेधा। तत्र शुद्धः प्रतिपाद्यो यथा—

वामेक्षणे स्फुरति धीः पुरुषस्य कष्टं
स्याद् वा न वेति विदधाति गतागतानि।
नार्याः पुनः प्रमदनिर्भररूपमास्ते
तन्नास्ति यद् विनिमयादशुभं शुभं वा ॥ ५५७ ॥ [ ]

अत्र सन्देहनिष्ठत्वमेवेति शुद्धः सन्देहः।

संकीर्णो यथा—

गिरिरयममरेन्द्रेणाद्य निर्लूनपक्षः क्षतगरुदसुरेशैः किं कृतो वैनतेयः।
अपरमिह मनो मे यः पितुः प्राणभूतः किमुत बत स एष व्याततायुर्जटायुः ॥ ५५८ ॥
[ कृत्यारावणे ]

अत्र स्थाणुर्वा पुरुषो वेतिवत् पश्चात् पारमार्थिकेऽपि वस्तुनि परामर्श उदेतीति संकीर्णः सन्देहः। यथा किमेष जटायुरिति। पूर्वत्र तु कष्टस्य भाविष्यत्त्वेन भावाभावावुभावपि सन्दिग्धौ। कदाचन तृतीयस्याप्युपक्षेपणीयन्यायेन मध्यरूपस्य प्रादुर्भावसंभावनमित्यनयोर्विवेकः।

---

1. I E स्तुतिरिति. 2. E drops स. 3. A drops संदेहवद्वचो भवति.
4. E drops भावा.

सरोजपत्रे परिलीनषट्पदे विशालदृष्टेः स्विदमू विलोचने।
शिरोरुहाः स्युर्नतपक्ष्मसंततेर्द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥६२८॥
अगूढहासस्फुटदन्तकेसरं मुखं स्विदेतद् विकचं नु पङ्कजम्।
इति प्रलीनां नलिनीवने सखीं विदांबभूवुः सुचिरेण योषितः ॥६२९॥
[किरात० ८.३५–३६]

---

मूढो यथा—

स्पन्दते दक्षिणं चक्षु. फलाकाङ्क्षा न मे क्वचित्।
न च मिथ्या मुनिवचः कथयिष्यति किं त्विदम् ॥ ५५९ ॥

अत्र न सन्देहनिष्ठना नापि विद्यमानस्य वस्तुनोऽशेन परामर्श इति मूढः सन्देहः। यथा ह्यगृहीतसंकेतस्यापूर्वपदार्थदर्शने सति किमिदं स्यादिति पदार्थानध्यवसानमित्येवंरूप इत्यर्थः। तदेव प्रतिपाद्यः सन्देहो निदर्शितः।

उत्पाद्यो यथा—

व्यालवन्तो दुरारोहा रत्नवन्तः फलान्विताः।
विषमा भूभृतस्तेभ्यो भयमाशु प्रमादिनाम् ॥ ५६० ॥ [भामह ४·१९]

व्यालाः सर्पाः दुर्जनाश्च। दुरारोहा दुःखोत्कलनीयाः चिरकालप्रत्यासत्तिलाभाश्च। रत्नान्युपलविशेषाः, गुणवन्तश्च। भूभृतः पर्वताः, राजानश्च। इत्येतस्माद् वचसः प्रतिपत्तुः पर्वतराजविषयः सन्देह उपजायते। अलङ्कारान्तरच्छायागर्भीकारेण जन्यस्तु 'सरोजपत्रे' (अस्मिन्नेव पृष्ठे) इत्यादिनोदाहृतः। एतेषु सन्देहवत्सु वचनेषु बहुधा प्रवृत्तेषु प्रथमस्य प्रतिपाद्यसंन्देहपक्षस्य रसभावतदाभासालङ्कारेष्वन्तर्भावः। वितर्कस्य हि व्यभिचारिणः सद्भावादवश्यं क्वचिद् रसेऽङ्गता भवत्यत एव रसादिसद्भावे नान्तरीयकत्वेन तदाभासतापि भवतीति। द्वितीयस्य तु जन्यसन्देहपक्षस्य प्रतिनियतप्रकरणाभावात्प्रकृतस्य कस्यचिदभावात् कस्य स्तुतिरुत्कर्षाभिधायिकेति सन्देहो दोष एवेति दोषरूपतेति। तृतीयस्तु जन्यसन्देहाभासलक्षणः पक्षोऽस्य संसन्देहालङ्कारस्य विषयोऽवगन्तव्यः।

**सरोजपत्रे** इत्यादि। अत्र प्रकृतं विलोचनादि वक्त्रा निश्चितमेव, यदि परं रूपकालङ्कारापादनमाहात्म्यात् सन्देहस्येव शाब्देन रूपेणावगतिः। तात्पर्यपर्यालोचनावशेन तूपमादावेव विश्रान्तिः। सन्देहवर्णनभङ्ग्या तु तस्यैवालङ्कारता।

---

1. E drops पा. 2 E drops सन्देह. 3. D drops from दवश्यं to भाता (l 22) and puts this passage after लक्षण: (l 23) 4. E. drops पि. 5. E drops कस्यचिदभावात्. 6. A, B संदेहालङ्कार.

अत्र रूपकगर्भीकारेण[1] निर्णयान्तः संशयः। यथा वा—

अथ जयाय नु मेरुमहीभृतो रभसया नु दिगन्तदिदृक्षया।
अभिययौ स हिमाचलमुच्छ्रितं समुदितं नु विलङ्घयितुं नभः॥ ६३०॥
[किरात० ५.१]

अत्रातिशयोक्तिगर्भीकारेणानिर्णयान्तः। यथा वा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष[2] नियतम्।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रति भटाः॥ ६३१॥
[ ]

अत्र रूपगर्भीकारेण भेदकस्योक्तौ[3] संशयः।

## १३३) प्रकृताप्रकृताभ्यां प्रकृतापलापोऽपह्नुतिः॥ २१॥

---

**अथ जयायेति**। प्रतिक्षेपन्यायेन मेरुजयसंभावना।

**रभसयेति**। त्वरितया। अन्यथा दिग्विजयेनोत्तरकालं सर्वदिगवलोकनमर्जुनस्य भविष्यत्येव। हिमाचलमिति। हिमाचलैकदेशमिन्द्रप्रस्थाख्यं[4] तपोऽर्थमिति तात्पर्यम्। समुदितमिति। पिण्डीभूतम्। अथवा जयादिव्यापारकर्तृत्वं हिमाचलस्य व्याख्येयम्।

**अतिशयोक्तिगर्भीकारेणेति**। यथा हि योऽसौ पौरुषेयव्यापारतिरस्कारेण नुशब्दत्रितयाद्द्योत्यमानतया कोटित्रयोल्लेखेनावास्तवः संशयः प्रतिपादितः स स्वाभिप्रायनिर्वाहाय तथाविधोत्कटोच्छ्रायशून्येऽपि पर्वते मेरुजयादिव्यापारद्वयसंपादनक्षमतयोच्छ्रायातिशयमाक्षिपन्नसंबन्धेऽपि संबन्धात्मिकामतिशयोक्तिमवगमयति।

**अयं मार्तण्डः किमिति**। अत्रोपमेयस्य तद्भावमुपमानेनोक्त्वा पश्चाद् भेदे उच्यमाने यद्यप्यामुखे रूपकावभासः पश्चाद्व्यतिरेकाकारता, तथापि नास्मिन्नलङ्कारद्वये विश्रान्तिः। अपि तु किमित्यादिशब्दोपादानात्सन्देह एव वाक्यार्थतया पर्यवस्यति। तस्य परिकरबन्धार्थं रूपकव्यतिरेकावामुखे[5] प्रतिभासेते इति तत्संकराशङ्का न कार्या।

**भेदकस्योक्ताविति**। पूर्वोदाहरणद्वये तु भेदकस्यानुक्तिरित्यर्थः।

---

1 S °कारे नि°. 2. I वैष. 3. I भेदस्यो°. 4. E °काकाख्यं. 5. E °मुख्ये.

प्रकृतेन प्रकृतस्यापलाप एका अपह्नुतिः। अप्रकृतेन प्रकृतस्यापलापोऽन्या। तत्राद्या यथा—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्-
रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः॥ ६३२॥

[ ]

अत्र गिरिजाकरस्पर्शकारणौ पुलकवेपथू सात्त्विकरूपौ प्रकृतौ प्रकृतेनैव तुहिनाचलशैत्येनापह्नुतौ।

द्वितीया यथा—

नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः॥ ६३३॥

[भामह ३·२२]

**अप्रकृतेन प्रकृतस्यापलापोऽन्येति।** अत्र पारमार्थिकस्यासत्यकरणमपारमार्थिकस्य सत्यतया स्थापनं स्थूलदृष्ट्या बोद्धव्यम्। तात्पर्यं तु वाक्यस्य सादृश्ये एव। तथा ह्यत्र पदार्थस्वरूपविपर्यासोऽभिधीयते। न च तत्र स्वेच्छया पुरुषाणां सामर्थ्यमस्ति तेनोन्मत्तवाक्यता, दशदाडिमादिश्लोकवदेव प्राप्नोति। यदा त्वनेन वाक्येनाभिधेययोरर्थयोरसत्यसत्यत्वयोरविवक्षया सादृश्यं लक्षणात्मना व्यापारेण प्रतिपाद्यते तदास्य नोन्मत्तवाक्यता, प्रत्युत सौन्दर्यशालितया सहृदयहृदयचमत्कारिता भवति। सोऽयं वाच्यार्थापेक्षयापह्नुत्यलङ्कारो लाक्षणिकार्थपरिग्रहः। उपमेयस्यापह्नुतत्वात् न स्फुटेन रूपेणोपमानोपमेयभावश्चकास्तीति रूपकाशङ्का न कार्या।

व्यासङ्गो निरोधस्तस्माद् भङ्गो भयम्।

**नेयं विरौतीति।** अत्र मदमुखरमधुकरावलीविरुतं विरहिणां हृदयभेदित्वाविशेषेण कामकार्मुककूजितेन समानमध्यवसाय तदैक्याध्यारोपेण तेनैवापह्नूयत इति।

1. E drops असत्यकरणमपारमार्थिकस्य. 2. D drops from दश° to वाक्यता (l. 18). 3. A, B सादृश्या. 4. B drops from यस्त to तीति (l. 24). 5. A drops नेयं. 6. E °रोपणेन.

यथा वा—

विलसदमरनारीनेत्रलीलाब्जषण्डा-
　　न्यधिवसति सदा यः संयमाधःकृतानि ।
न तु ललितकलापे वर्तते यो मयूरे
　　वितरतु स कुमारो ब्रह्मचर्याश्रियं वः ॥६३४॥ [　　　]

यथा वा—'इदं ते[1] केन' (पृ. २६७) इति। एवमियं भङ्ग्यन्तरैरप्यूह्या।

१३४) पर्यायविनिमयौ परिवृत्तिः ॥ २२ ॥

एकस्यानेकत्रानेकस्य वैकत्र क्रमेण वृत्तिः पर्यायः । समेन समस्योत्कृष्टेन निकृष्टस्य निकृष्टेनोत्कृष्टस्य वा व्यतिहारो विनिमयः । तावेतौ परिवृत्तिः । यथा—

जो तीएँ अहरराओ रत्तिं उव्वासिओ पिअयमेण ।
सो चिअ[2] दीसइ गोसे सवत्तिनयणेसु संकंतो ॥६३५॥
[सप्तशती १०६, गाथासप्तशती २.६]

अत्रैकस्यानेकत्र वृत्तिः । रागस्य च वस्तुतो भेदेऽपि एकतयाध्यवसितत्वादेकत्वमविरुद्धम् ।

'तद् गेहं नतभित्ति' (पृ. ८६) इति। अत्रानेकं गृहाद्येकत्र[3] द्विजे वर्तते।

विनिमयः समेन समस्य । यथा—

आदाय कर्णकिसलयमियमस्मादत्र चरणमर्पयति ।
उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये ॥ ६३६ ॥
[　　　]

---

**जो तीए इति।** अत्र स एवेति ताम्बूलादिजनितरागकोपनिर्वृत्त[4]रागयोरभेदोपचारः ।

यथा वा—

नन्वाश्रयस्थितिरियं तव कालकूट केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ ५६१ ॥
[भल्लट ४]

---

1. S drops ते. 2. S चिय. 3. P, I, L °धगृह°. 4. A, B, C, D निवृत्त.

यो बली व्याप्तभूसीम्नि मखेन द्यां जिगीषति ।
अभयं स्वर्गसद्मभ्यो दत्त्वा जग्राह खर्वताम् ॥ ६३७ ॥[ ]

अत्रोत्कृष्टेनाभयेन निकृष्टस्य खर्वत्वस्य ।

तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥ ६३८ ॥
[ ]

अत्र निकृष्टेनोत्कृष्टस्य ।

१३५) हेतोः साध्यावगमोऽनुमानम् ॥ २३ ॥

अन्यथानुपपत्त्येकलक्षणाद्धेतोः साध्यस्य जिज्ञासितस्यार्थस्य प्रतीतिर्यत्र वर्ण्यते तदनुमानम् । यथा—

सानुरागमिष्यन्नं पतितोऽसि पादयोस्तस्याः ।
कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम् ॥ ६३९ ॥
[रुद्रट ७.५७]

यथा वा—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।
अन्यथानुपपत्त्यैव पयोधरभरस्थितेः ॥ ६४० ॥
[काव्यादर्श २.२१८]

खर्वतामिति । वामनताम् ।

स्वर्गिण इति । यशःशेषतां गतस्येत्यर्थः ।

अर्थस्येति । भावरूपस्याभावरूपस्य वा । तत्र भावरूपसाध्यार्थप्रतीतिः 'सानुरागम्'–इत्यत्र निदर्शिता । अभावरूपसाध्यार्थप्रतीतिस्तु यथा—

वण्णवसिअ व्व अच्छसि सच्चं विअ सो तए ण सच्चविओ ।
ण हु होन्ति तम्मि दिट्ठे सत्थावत्थाइं अंगाइं ॥ ५६२ ॥
[सप्तशती ४७८; गाथासप्तशती ५.७८]

अत्रादर्शनं साध्यते ।

1. अत्र भाव°. 2. C drops सानुर to °तीतिस्तु, and E to तीति. 3. The Gāthāsaptaśatī (p. 246) reads वण्णवसिए विअत्थसि. 4. C drops अच्छ. 5. C, E drop त. 6. E °विओ. 7. D drops अंगाइं.

यथा वा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ ६४१ ॥ [ ]

अत्र कमलनिमीलनेन निशासमयः प्रतिपाद्यत इत्यनुमानमेवेदम् ।

१३६) सदृशदर्शनात् स्मरणं स्मृतिः ॥ २४ ॥

पूर्वोपलब्धस्यार्थस्य तादृशदर्शनात् संस्कारोद्बोधे सति यत् स्मरणं सा स्मृतिः । यथा—

अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तयः ।
अस्मर्यन्त च निःश्वस्य प्रियानयनविभ्रमाः ॥ ६४२ ॥ [ ]

१३७) विपर्ययो भ्रान्तिः ॥ २५ ॥

सदृशदर्शनाद् विपर्ययज्ञानं भ्रान्तिः । यथा—

नीलन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।
लीयन्ते कबरीषु बान्धवकुलव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति ॥ ६४३ ॥
[ ]

न चैतद् रूपकं प्रथमा वातिशयोक्तिः । तत्र वस्तुतो भ्रमस्याभावात् ।

१३७) क्रियाफलाभावोऽनर्थश्च विषमम् ॥ २६ ॥

**निर्णेतुं शक्यमस्तीति** । अत्र स्तनभरनितम्बयोर्मध्ये मध्यं नोपलभ्यते, स्तनभरावस्थानं च दृश्यते, तत्र येयं पयोधरभरस्थितिः सान्यथानुपपद्यमानाधारकं मध्यमनुपलभ्यमानं बोधयति । उदाहरणान्तरस्य चास्यायमभिप्रायः । यथा केनचिदर्थापत्तिलक्षणोऽलङ्कारः पृथग्लक्षितस्तथा न लक्षणीयोऽर्थापत्तिलक्षणत्वादनुमानस्येति ।

**अनुमानमेवेदमिति** । न तु सूक्ष्मम्, अनुमानान्तर्भूतत्वात् सूक्ष्मस्येति भावः ।

1. I कूतं. 2. S खला:. C, SK खेलख°. 3. D drops भर.

न केवलं क्रियाफलाभावोऽर्थात् कर्तुर्यावदनर्थश्च भवति यत्र तद् विषमम्। यथा—

उत्कण्ठा परितापो रणरणको जागरस्तनोस्तनुता।
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा ॥ ६४४ ॥
[रुद्रट ७.५५]

अत्र मृगलोचनादर्शने न केवलं सुखं न प्राप्तं, यावत्तद्विच्छेदे उत्कण्ठादिरनर्थः प्राप्तः।

१३९) योग्यतया योगः समम् ॥ २७ ॥

उत्कृष्टम् उत्कृष्टस्य निकृष्टं निकृष्टस्य योग्यमिति योग्यतया योगः समम्। यथा—

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
देवो रूपेऽप्ययमनुपमे दत्तपत्रः स्मरस्य।
जातं दैवादुचितमनयोः संगतं यत्तदस्मिन्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ ६४५ ॥ [ ]

यथा वा—

चित्रं चित्रं बत बत महच्चित्रमेतद् विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता।
यन्निम्बानां परिणतफलस्फातिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ६४६ ॥

१४०) हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः ॥ २८ ॥

कस्यचित् कार्यस्य एकस्मिन् हेतौ साधके सति हेत्वन्तराभिधानं कार्ये चैकस्मिन् प्रस्तुते कुतश्चिन्निमित्तात् कार्यान्तराभिधानं च समुच्चयः। युगपद्गुणौ च क्रिये[1] च गुणक्रियाश्च समुच्चयः। बहुवचनं व्याप्त्यर्थम्। हेतौ हेत्वन्तरं यथा—

---

**समुच्चय इति।** अत्र तुल्यकक्षतामनपेक्ष्यैव समुच्चयनं समुच्चय इति सामान्येन व्युत्पत्तिः करणीया। एव हि 'समाधिः सुकरं कार्यं कारणान्तर-

1 I गुणक्रिये. 2. E तुल्यलक्षणाक.

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
　गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमी
　नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया ॥ ६४७॥
[सुभाषितावली (११५६) भट्टशङ्कुकस्य]

---

योगतः' (काव्यप्रकाश १०.१२५) इत्येवं लक्षणलक्षितः समाधिरपि समुच्चय एवान्तर्भवति । अन्यथा 'मानमस्या निराकर्तुम्' (पृ. ३९४) इत्युदाहरिष्यमाणे तुल्यकक्षत्वाभावाच्च समुच्चयः स्यादिति । एष एव च समुच्चयः सद्योगे असद्योगे सदसद्योगे च पर्यवस्यतीति न पृथग् लक्ष्यते । तथा हि—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी
　भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
　व्रजति सुतरां दर्पं राजस्त एव तवाङ्कुशाः ॥५६३॥ [　　　]

अत्र सता योगः । 'दुर्वाराः' (अस्मिन्नेव पृष्ठे) इत्यादौ तु असता योगः । नववयप्रभृतेर्हि सत्यपि शोभनत्वे सर्वेषामप्यशोभनत्वकथनम्, अशोभनत्वेनैव विरहिण्या भावितत्वात् ।

शशी दिवसधूसरो गलितयौवना कामिनी
　सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
　नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥५६४॥ [नीतिशतक ५४]

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः । तथा हि—शशिनः शोभनत्वं प्रकृतिसौन्दर्याद्, अशोभनत्वं च धूसरत्वोत्पादात् । एवं चास्य सदसद्रूपस्य तादृशेनैवापरेण योगादिह सदसद्योगः ।

**गुणक्रियाश्च** (पृ. ३९२, सूत्र २८) **इति**-अत्र च यथा **रुद्रटेन** (164) 'व्यधिकरणे वा यस्मिन्' [रुद्रट ७.२७] इत्यादिना व्यधिकरणे इत्येकस्मिन् देश इति च प्रतिपादितं, न तथा प्रतिपादनीयम् ।

'धुनोति चासिं तनुते च कीर्तिम्' ॥५६५॥

इत्यादेः

कृपाणपाणिश्च भवान् रणक्षितौ
ससाधुवादाश्च सुराः सुरालये ॥५६६॥

इत्यादेश्चान्यथापि दर्शनादिति ।

---

1 The KP (p. 686) reads °यो. 2. The KP (p. 686) reads शठः. 3. A, B, C, D drop सदसद्योगे. 4. A has च between त्वे and नैव. 5. E drops पि.

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति । तेषु सत्सु प्रियतमदूरस्थित्याद्युपात्तम् । यथा वा—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ ६४८ ॥
[काव्यादर्श २.२९९]

कार्ये कार्यान्तरं यथा—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ ६४९ ॥
[ ]

अत्र त्वा सृजतेत्येकस्मिन् कार्ये प्रस्तुते मनोभवादीनां कार्यान्तराणां[1]उपनिबन्धः ।

युगपद्गुणौ[2] यथा—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ६५० ॥
[रुद्रट ७.२८]

क्रिये यथा—

प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥ ६५१ ॥
[कुमार० ३.६६]

गुणक्रिये यथा—

कलुषं च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ६५२ ॥
[ ]

1. L °णामनुबन्धः. 2. L °द्गुणैर्यथा.

**१४१) पृष्टेऽपृष्टे वा अन्यापोहपरोक्तिः परिसंख्या ॥ २९ ॥**

पृष्टेऽपृष्टे वा सत्यन्यव्यवच्छेदपरा योक्तिः सा परिसंख्यानात् परिसंख्या। उभयत्रोपमानस्य वाच्यत्वं प्रतीयमानता चेति चत्वारोऽस्या भेदाः ।

पृष्टे यथा—

कोऽलङ्कारः सतां शीलं न तु काञ्चननिर्मितम् ।
किमादेयं प्रयत्नेन धर्मो न तु धनादिकम् ॥ ६५३ ॥ [ ]

का विसमा दिव्वगई किं लद्धं जं जणो गुणग्गाही ।
किं सुक्खं सुकलत्तं किं दुग्गेज्झं खलो लोओ ॥ ६५४ ॥ [ ]

अत्र 'दैवगतिरेव विषमा' इत्यादिरन्यापोहः प्रतीयते ।

अपृष्टे यथा—

धेहि धर्मे धनधियं मा धनेषु कदाचन ।
सेवस्व सद्गुरूपज्ञां शिक्षां मा तु नितम्बिनीम् ॥ ६५५ ॥
[ ]

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ ६५६ ॥
[रुद्रट ७.८१]

यथा वा—

राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥ ६५७ ॥
[रुद्रट ७.९७]

दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात् सारमुद्धरेत् ॥ ६५८ ॥ [ ]

पोढमहिलाण जं सुट्ठु सिक्खिअं[1] तं रए सुहावेइ ।

---

**राज्ये सारमिति ।** अत्र सारालङ्कारः कैश्चिदुक्तः, स चान्यापोहमन्तरेण न चमत्कारकारीति परिसंख्यैव युक्तोऽलङ्कारः ।

**दानं वित्तादिति, पोढमहिलाणेत्यत्रापि** केनचित् सारालङ्कार उक्तस्तत्रापि अन्यापोहकृतं चारुत्वमितीयमपि परिसंख्यैव युक्तेति ।

---

1. S सिक्खियं. 2. E adds इति.

जं जं असिक्खिअं[1] नवबहूण तं तं दिहिं देइ ॥ ६५९ ॥

[ ]

एषु कौटिल्यं कचनिचय एव इत्यादि, राज्ये सारं वसुधा एव इत्यादि, वित्तात् सारं दानमेवेत्यादि, प्रौढमहिलानां सुशिक्षितमेवेत्याद्यपोह्यमानस्य प्रतीयमानत्वम् । अन्यापोहाभावे प्रश्नोत्तरोक्तौ न वैचित्र्यं किञ्चिदिति नोत्तरं पृथग् लक्षितम् । उत्तरात् प्रश्नादिप्रतिपत्तिस्त्वनुमानमेव । यथा—

'वाणिअय[2] हत्थिदंता' (पृ. ६३) ॥ ६६० ॥ इति ।

अत्र विशिष्टोत्तरान्यथानुपपत्त्या प्रश्नानुमानम् ।

तथा—

जं भणह तं सहीओ आम करेहामि तं तहा सव्वं ।
जइ तरह[3] रुंभिउं मे धीरं समुहागए तम्मि ॥ ६६१ ॥

[ सप्तशती ८९७ ]

अत्र[4] 'भ्रुकुट्यादिभिर्मानं कुरु' इति सख्याः पूर्ववाक्यमनुमीयते ।

## १४२) यथोत्तरं पूर्वस्य हेतुत्वे कारणमाला ॥ ३० ॥

उत्तरमुत्तरं प्रति पूर्वस्य पूर्वस्य कारणत्वे कारणमाला । यथा—

---

**अनुमानमेवेति** । न तु रुद्रटोक्तः—(165) 'प्रश्नादप्युत्तरं यत्र' [ रुद्रट ७.९३ ] इत्युत्तरालङ्कारः । एवं **जं भणहे**त्यत्रापि वाच्यम् ।

---

1. I °क्खियं. 2. I वाणियय°. I gives the whole line वाणियय हत्थिदंते कत्तो अम्हाण वग्घकत्तीओ त्ति । 3. I सरह. 4. I तत्र. 5. E repeats from °दानं वित्तादि (p. 395 l. 25) to उत्तरालङ्कारः.

निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमागच्छति ।
निर्विण्णः शुचमेति शोकविवशो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ६६२ ॥
[मृच्छकटिक १.१४]

कारणमात्रं तु न वैचित्र्यपात्रमिति न हेतुरलङ्कारान्तरम् ।

---

**कारणमात्रं त्विति ।** अग्नेर्धूम इत्येवंरूपमित्यर्थः ।

नन्वीदृशस्य हेतोर्हृद्यत्वाभावादलंकारत्वं मा भवतु । यत्र तु—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे नैवारिम क्षणमपि भवन्तं प्रणतवान् ।
नमन्मुक्तः संप्रत्यतनुरयमग्रेऽप्यनतिभाग्
महेश क्षन्तव्य तदिदमपराद्धद्वयमपि ॥ ५६७ ॥  [ ]

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरम्परा गिरिसुताकान्तालयालंकृतिम् ।
अद्याराधनरो(? तो)षितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ ५६८ ॥
[ ]

इत्यादौ चापराधद्वये पूर्वापरजन्मनोरनुमान(? रनमन)लक्षणो हेतुर्वाक्यार्थीभूतो महामोहे सुखालोकोच्छेदित्वलक्षणश्च पदार्थीभूतो हृद्यतयावसीयते तत्र कथ नालङ्कारत्वमिति । सत्यम्, अस्ति हृद्यता, परं न हेतोः, किं तर्हि, अलङ्कारान्तरस्य । तथा हि प्रथम उदाहरणेऽनुमानस्य रामणीयक, द्वितीये तु मोक्षस्य महामोहतया रूपणमिति रूपकस्येति हेतुर्नालङ्कारः । तन्निराकरणेन तद्रूपं काव्यलिङ्गमपि निराकृतमेवेति । एवं च (166) 'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' । [रुद्रट ७.८२] इत्येवंरूपोऽपि हेतुर्न वाच्यः ।

आयुर्घृतं नदी पुण्यं भयं चौरः सुखं प्रिया ।
वैरं द्यूतं गुरुर्ज्ञानं श्रेयो ब्राह्मणभोजनम् ॥ ५६९ ॥  [ ]

इत्येवंरूपो ह्ययं न भूषणतां कदाचिदर्हति वैचित्र्याभावात् । गौणे ह्युपचारे सादृश्यसंप्रत्ययाद् वैचित्र्यम् । यत्र तु न सादृश्यसंप्रत्ययस्तत्र नेति ।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः ॥ ५७० ॥ [रुद्रट ७.८३]

---

1. A, B, C, D °मपि भक्ता.  2. E °सादृश्यासं.

१४३) स्वातन्त्र्याङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः संकरः ॥ ३१ ॥

परस्परं निरपेक्षत्वं स्वातन्त्र्यम्। उपकारकत्वमङ्गत्वम्। एकस्य ग्रहेऽन्यस्य त्यागे साधकबाधकप्रमाणाभावादनिर्णयः संशयः। एकस्मिन् पदेऽर्थाच्छब्दार्थालङ्कारयोः समावेश ऐकपद्यम्। एभिरेषां पूर्वोक्तानामलङ्काराणामेकत्र वाक्ये वाक्यार्थे वाऽवस्थानं संकीर्यमाणस्वरूपत्वात् संकरः। स्वातन्त्र्येण शब्दालङ्कारयोः संकरो यथा—

कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥ ६६३ ॥
[शिशुपालवध ६.१४]

अत्र यमकानुप्रासयोः। अर्थालङ्कारयोर्यथा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ ६६४ ॥
[बालचरित १.१५; मृच्छकटिक १.३४]

अत्रोत्प्रेक्षोपमयोः।

शब्दार्थालङ्कारयोर्यथा—

सो नत्थि एत्थ गामे जो एअं महमहंतलायण्णं।
तरुणाण हिअयलुडिं परिसक्कंतिं निवारेइ ॥ ६६५ ॥

अत्रानुप्रासरूपकयोः।

अङ्गत्वेन संकरो यथा—

इत्यत्र तु काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुः, न तु हेत्वलङ्कारकल्पनयेति। यद्यप्यव्यभिचारितयैव विकासादीनां नैरन्तर्येण जननमिह्रोपचारप्रयोजनं व्यङ्ग्यं, तदसुन्दरमपि काव्यस्य मध्यमत्वनिबन्धनं भवति। तथाप्यलङ्कारचिन्तायाः प्रक्रान्तत्वात्तदपह्नुत्यैव हेतोरलङ्कारत्वं निराक्रियत इति।

1. S °च्छब्दाल°. 2 The Śiśupālavadha reads बदनसौरभ°; the reading in the next, however, agrees with that in the KP (p. 752), I drops लोभ. 3 S पगगा°. 4. P, I 4 एथ. 5. S °लावन्नं. 6. S हियय. 7. A, B, C, D कालकू°. 8. E हेतुत्वा°. 9. E drops प्रयोजनं.

कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
कुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते।
कीर्त्या ते धवलीकृते त्रिभुवने क्ष्मापाल लक्ष्मीः पुनः
कृष्णं वीक्ष्य बलोऽयमित्युपहितव्रीडं शनैर्जल्पति ॥ ६६६ ॥

[

अत्रातिशयोक्तिमपेक्ष्य भ्रान्तिरुद्भूता। तदाश्रयेण चातिशयोक्तिश्चमत्कारहेतुरित्येतयोरङ्गाङ्गिभावः।

त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ।
इयता युवयोर्भेदः स जडात्मा पटुर्भवान् ॥ ६६७ ॥
[काव्यादर्श २.१८५]

अत्र श्लेषो व्यतिरेकस्याङ्गम्।

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥ ६६८ ॥
[काव्यादर्श २.३३९]

अत्र श्लेषो विरोधस्याङ्गम्।

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्।
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ ६६९ ॥
[काव्यादर्श २.३६१]

अत्र श्लेषोऽर्थान्तरन्यासस्याङ्गम्।

**दुर्वाराविति**। दुर्वारोऽव्याहतप्रसरः; दुष्टं क्षारं वार्जलं च यस्य स दुर्वाः। सत्त्वं धैर्यं, सत्त्वाश्च प्राणिनः। तेजः प्रभावः, दवानलश्च। जडात्मेति, उदकस्वभावोऽपि।

**कृष्णार्जुनेति**। कृष्णा असिताः। अर्जुनाः शुभ्राः। अनुरक्ता लोहिताः। कर्णावलम्बिनी विपुलतया श्रोत्रसमीपसंश्रिता। विरोधे तु कृष्णो हरिः, अर्जुनः पार्थः, तत्र सानुरागा सा कर्णं राधेयं कथमालम्बत इति। अनयैव च विरोधभङ्ग्याऽविश्वास्यत्वं निबद्धम्।

**कोशदण्डसमग्राणामिति**। कोशो भाण्डागारोऽपि। दण्डश्चतुर्थोपायोऽपि।

---

1. E °ङ्क्याम् अवि°.

संशयेन संकरो यथा—

निग्गंडदुरारोहं[1] मा पुत्तय पाडलं समारुहसु ।
आरूढनिवडिया के इमीए न कया इह ग्गामे ॥ ६७० ॥

[ गाथासप्तशती ५.६८ ]

अत्र शठतरपोटापाटलयोरन्यतरस्याः प्राकरणिकत्वाभावान्न ज्ञायते किमियं समासोक्तिरुतान्योक्तिरिति[2] संशयः । तथा—

नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदति ।
अधुना विनिरुद्धाशमपि शीर्णमिदं तमः[3] ॥ ६७१ ॥ [ ]

अत्र मुखेन सहाभेदारोपात् किमतिशयोक्तिः, किमेतदिति मुखं निर्दिश्येन्दुसमारोपणाद्[4] रूपकं, किं मुखनैर्मल्यप्रस्तावेऽन्योक्तिः, अथैतयोः समुच्चयविवक्षया दीपकं, किं प्रदोषवर्णने विशेषणसाम्यात् समासोक्तिः, किं मदनोद्दीपकः कालो वर्तत इति तात्पर्यात् पर्यायोक्तमित्यनेकालङ्कारसंशयः । तथा—

शशिवदना सितसरसिजनयना सितकुन्ददशनपङ्क्तिरियम् ।
गगनजलस्थलसंभवहृद्याकारा कृता विधिना ॥ ६७२ ॥

[ लोचने अभिनवगुप्तस्य ]

अत्र रूपकमुपमा वेति संशयः । यत्र तु—

मोहमहाचलदलने साशनिशितकोटिरेकापि[5] । ६७३ ।

इत्यादावारोपितकुलिशकोटिरूपाया भक्तेर्मोहस्य महाचलेनोपमितमात्रस्य[6] दलने कर्तृत्वं न हृदयावर्जकं स्यादिति रूपकस्य ।

'ज्योत्स्नेव हास्यद्युतिराननेन्दोः' । ६७४ ।

इत्यादौ मुखस्यानयावगम्यमाना हसितद्युतिर्वक्त्र एवानुकूल्यं भजत इत्युपमायाः साधकं प्रमाणमस्ति ।

निर्गण्डेति [ निग्गंडेति ] । कठिनदुरारोहाम् ।

1. S निग्गधद्ु°. 2 S drops रुतान्योक्ति. 3. The KP (p. 760) reads this hemistich as follows·

अधुनापि निरुद्धाशमविशीर्णमिदं तम· ॥

4. P °समारोपणारूपकं. 5. S, I सा सुनिशितवज्र°. 6. S मिति°.

स्मरन्ति ज्योत्स्नायाः शशिमुखि चकोरास्तव दृशि ॥ ६७५ ॥

इत्यादौ तत्त्वारोपे स्मरणानुपपत्ते रूपकस्य ।

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ॥ ६७६ ॥

इत्यादौ सदृशं प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्यासंभवादुपमायाश्च बाधकं प्रमाणमस्ति, न तत्र संशयः ।

ऐकपद्येन सङ्करो यथा—

मेरूरुकेसरमुदारदिगन्तपत्र-
मामूललम्बिचलशेषशरीरनालम्[1] ।
येनोद्धृतं कुवलयं लसता[2] सलील-
मुत्तंसकार्थमिव पातु स वो वराहः ॥ ६७७ ॥

[ जीवकस्य, सुभाषितावल्यौ (श्लोक ५४)]

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ । यद्यप्यनेकविषयमिदं रूपकमखिलवाक्यव्यापि तथापि प्रतिपदं रूपकसद्भावादेकपदानुप्रवेशो न विरुध्यते ।

इत्युक्ताः शब्दार्थालङ्काराः ॥

कः पुनरङ्गाश्रितत्वाविशेषेऽप्ययं शब्दस्यालङ्कारोऽयमर्थस्येति विशेषः । उच्यते—दोषगुणालङ्काराणां शब्दार्थोभयगतत्वव्यवस्थायामन्वयव्यतिरेकावेव निमित्तम् । निमित्तान्तरस्याभावात् । ततश्च योऽलङ्कारो यदीयौ भावाभावावनुविधत्ते स तदलङ्कारो व्यवस्थाप्यत इति । यद्यपि पुनरुक्तवदाभासार्थान्तरन्यासादयः केचिदुभयान्वयव्यतिरेकानुविधायिनोऽपि दृश्यन्ते तथापि तत्र[3] शब्दस्यार्थस्य वा वैचित्र्यमुत्कटमित्युभयालङ्कारत्वमनपेक्ष्यैव शब्दालङ्कारत्वेनार्थालङ्कारत्वेन चोक्ताः । इह चापुष्टार्थत्वलक्षणदोषाभावमात्रं साभिप्रायविशेषणोक्तिरूपः परिकरो

**साभिप्रायविशेषणोक्तिरूप** इति । तथा च (167) विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ( काव्यप्रकाश १०-११८ ) इति । यथा—

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः ।

1. S नात्र. 2. S, I ललता; the Subhāṣitāvali (p. 9) reads सलिलात्.
3. P, I, L drop तत्र.

भग्नप्रक्रमतादोषाभावमात्रं यथासंख्यं दोषाभिधानेनैव गतार्थम् । विनोक्तिस्तु तथाविधहृद्यत्वविरहात् । भाविकं तु भूतभाविपदार्थप्रत्यक्षी-

---

राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत पुरुषा द्रष्टुमभ्यागतौ स्वः ॥ ५७१ ॥
[ वेणी० ५.२६ ]

इति[1]। अत्र हि द्यूतच्छलकर्तृत्वादीनां विशेषणानां क्रोधोद्दीपनविभावतया साभिप्रायत्वमित्यपुष्टार्थत्वदोषाभाव एवायम् ।

**यथासंख्यमिति** । तथा चाह—(168) यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ( काव्यप्रकाश १०.१०८ ) इति । यथा—

एकस्त्रिधा वससि चेतसि चित्रमेतद्-
देव द्विषां च विदुषां च मृगीदृशां च ।
तापं च संमदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥ ५.७२ ॥ इति । [ ]

अत्र न यथासंख्यकृतं किमपि वैचित्र्यं किन्तु एकस्त्रिधा वससीति-आमुखे विरोधप्रतीतिकृतमेवेति ।

**विनोक्तिस्त्विति** । तथा चाह—(169) विनोक्तिः सा विनान्येन यत्रान्यः सन् तथेतरः ( काव्यप्रकाश १०.११२ ) इति । सन् शोभनः, इतरोऽशोभनः । यथा—

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥ ५.७३ ॥ [ ]
अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तमः ।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ ५७४ ॥
[ ]

इति-उदाहरणद्वयेऽपि वदन्तु सहृदयाः—यदि किमपि[2] विनोक्तिकृतं वैचित्र्यमत्रभासते, सहोक्तौ तु सहार्थबलात् साम्यसमन्वयप्रतीतेर्युक्तमेव वैचित्र्यमिति । किं च—शब्दमात्रयोगेनालङ्कारत्वकल्पने हा धिगाद्युक्तावप्यलङ्कारत्वप्रसङ्गः प्राप्नोतीति[3] ।

**भाविकमिति** । (170) 'भावः कवेरभिप्रायः' ( काव्यादर्श २.३६४ ) स यत्रास्ति तद्भाविकम् ।

**भूतभाविपदार्थप्रत्यक्षीकारात्मकमिति** । प्रध्वंसाभावप्रागभावाक्रान्ता अपि भावाः स्वमहिम्ना वचःप्रसादवशाच्च यत् पुरः स्फुरन्त इव दृश्य-

---

1. E drops इति. 2. A, B किञ्चित्. 3. E drops इति.

**कारात्मकमभिनेयप्रबन्ध एव भवति। यद्यपि मुक्तकादावपि दृश्यते तथापि न तत् स्वदते। उदात्तं तु ऋद्धिमद्वस्तुलक्षणं अतिशयोक्तेर्जाते-र्वा न भिद्यते। महापुरुषवर्णनारूपं च यदि रसपरं सदा ध्वनेर्विषयः।**

माना बध्यन्त इत्यर्थः। भूतभाविशब्दस्य परोक्षोपलक्षणपरत्वे परोक्षाणां पुरःस्फुरद्रूपत्वहेतुवर्णनमिति तु व्याख्याने स्वभावोक्तेर्न भिद्यते।

**अभिनेयप्रबन्ध एवेति।** प्रवेशकविष्कम्भकादिभिस्तथैव तत्र वर्ण्यमानत्वादिति भावः।

ननु—

आसीदञ्जनमत्रेति पश्यामि तव लोचने।

भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥ ५७५ ॥ [ ]

अत्राद्येऽर्थे भूतस्य, द्वितीये भाविनो दर्शनमिति मुक्तकविषयमपि भाविकं दृश्यते, ततः कुतो न लक्ष्यत इत्याशङ्क्याह—**यद्यपीति।**

**ऋद्धिमद्वस्तुलक्षणमिति।** यदाह (171) उदात्तं वस्तुनः सम्पत् (काव्यप्रकाश १०.११५) इति।

यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः

प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।

दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका

यद् विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ५७६ ॥

न ह्यतिशयैश्वर्येऽपि मुक्तारत्नानामवकरप्रायत्वेन पुञ्जीकरणं संभवति। उक्तं च—(172) असम्बन्धे सम्बन्धात्मिकामतिशयोक्तिमवगमयति। तदाह—**अतिशयोक्तेरिति।** अतिशयोक्तेरलङ्काराच्च भिद्यत इत्यर्थः।

अथ यत्र ऋद्धिमद्वस्तु सभवदेव वर्णयिष्यते तत्रोदात्त भविष्यतीत्याशङ्क्याह स्वभावोक्ते[र्जाते]र्वेति। किं च। यदि ऋद्धिमद्वस्तुवर्णनमलङ्कारस्तदा ऋद्धिरहितवस्तुवर्णनमप्यलङ्कारः कश्चित् प्रसजतीति।

**महापुरुषवर्णनारूपमिति।** यदाह—(173) महतां चोपलक्षणम् (काव्यप्रकाश १०.११५) इति।

यथा—

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी।

निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ५७७ ॥ [रुद्रट ७.१०४]

1. E °त्तुर्वे°. 2. A, B नाभिधेत. 3. E °भिर्हृता. 4. A drops मह.

अथ तथाविधवर्णनीयवस्तुपरं तदा गुणीभूतव्यङ्ग्यस्येति नालङ्कारः। रसवत्प्रेयऊर्जस्विभावसमाहितानि गुणीभूतव्यङ्ग्यप्रकारा एव। आशीस्तु प्रियोक्तिमात्रं, भावज्ञापने गुणीभूतव्यङ्ग्यस्य वा विषयः।

रामो हि पितृवचनमनुतिष्ठन्नयपराक्रमादिधर्मयोगादुत्साहयोगाच्च वीररसवानेवेति रसध्वनिरेवायम्। ननु–उपलक्षणमङ्गभावोऽर्थादुपलक्षणीयेऽर्थे, ततश्चोपलक्षणीभूतस्य रामचरितस्य वाक्यार्थीभावाभावादङ्गत्वमेव। दण्डकारण्योत्कर्षप्रतिपत्तिर्हि वाक्यार्थः सैव प्रधानं ततः कथं ध्वनिविषयतेत्याशङ्कयाह—**अथेति**।

**गुणीभूतव्यङ्ग्यप्रकारा एवेति**। मध्यमकाव्यप्रभेदविषयत्वेन ये प्रतिपादिताः।

**आशीस्त्विति**। आशासनमप्राप्तप्राप्तीच्छारूपमाशीः प्रयोक्तृधर्मः। अथवा आशास्यमानो योऽसावर्थोऽर्थप्राप्त्यनर्थपरमात्मकः स एव प्राप्तकालतयाभ्यनुज्ञात आशीर्विषयत्वादाशीरिति। तत्र पक्षद्वयेऽपि स्नेहाभावे लोकव्यवहारमात्रानुसरणार्थं येनाशीर्यदि प्रयुज्यते तदा 'गतोऽस्तमर्कः' इत्यादिवद् वार्तावर्णनमात्रत्वादुरूपेणैवालङ्कारतेत्याह—

**प्रियोक्तिमात्रमिति**। सहृदयानां किमप्येतावति चमत्काराभावादित्यर्थः। अथ स्नेहातिशयेनोच्यते, तदा ध्वनेर्विषयः। तथा हि—यदि कश्चित् कस्मैचित् स्नेहनिर्भरहृदयतया आशिषं प्रयुङ्क्ते तत्र च तस्य चेतोवृत्तिविशेषः स्नेहात्मा रतिभावविशेषरूप आशीर्द्वारेण प्रतीयत इति भावध्वनिरेवायम्। यथा—

अस्मिन्नहीहि सुहृदि प्रणयाभ्यसूयामाश्लिष्य गाढमसुमानतमादरेण।
विन्ध्यं महानिव घनः समयेऽभिवर्षन्नानन्दजैर्नयनवारिभिरुक्षतु त्वाम्॥५७८॥
[भामह ३.५६]

क्रयोश्चिन्मैत्रीसंबन्धे पिशुनजनानुप्रवेशेन विच्छायीकृते सति कस्यचिदायकस्य तत्स्नेहदार्ढ्यसंपादनायेयमुक्तिः। अथ च सौहृदमप्यर्थप्राप्तिरूपं मैत्रीसंबन्धस्य प्रवर्धमानतयोपनिबद्धम्। जहीहीति आश्लिष्येति च प्रार्थनापक्षमयन्तौ। उक्षत्विति प्राप्तकालतायां पञ्चमी। तेनात्राशास्यमानस्य मैत्रीसम्बन्धस्योपनिबन्धो न त्वप्राप्तप्राप्तीच्छात्मिकाया आशिषः। तथा—

मदान्धमातङ्गविभिन्नशाला हतप्रवीराद्भुतभीतपौरा।
त्वत्तेजसा दग्धसमस्तलीला द्विषां पुरीः पश्यतु राजलोकः॥५७९॥
[भामह ३.५७]

1. I gives वा but has marked it with the sign of dropping
2. E अत्र. 3. E drops स्य. 4 Bhāmaha reads °प्रणीत हृत°. 5. E पश्यत.

प्रत्यनीकं च प्रतीयमानोत्प्रेक्षाप्रकार एवेति नालङ्कारान्तरतया वाच्यम् ।

इति। **आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणि**संज्ञस्वोपज्ञ-**काव्यानुशासनवृत्तौ** अर्थालङ्कारवर्णनः षष्ठोऽध्यायः समाप्तः ॥

---

अत्र शत्रुनगरीविनाशोपनिबद्धद्वारेणानर्थोपरमस्य दर्शितत्वादाशास्यमानार्थोपनिबन्ध एव। न त्विदं भूयादित्येवमात्मिकायाः प्रयोक्तृधर्मत्वेनावस्थिताया आशिषोऽत्रोपदर्शनम्। तथा ह्येवंविधाः शत्रुनगरी राजलोके दृश्यादिति नायमत्रार्थ. संपन्नत्वादेतस्यार्थस्य, किन्तु तथाविधाना शत्रुनगरीणां दर्शनमत्र प्राप्तकालतयाभ्यनुज्ञायते। अत्रापि शत्रुविनाशलक्षणविभावद्वारेण हर्षात्मनो भावस्योपनिबन्धात् पूर्ववद् भावध्वनिरेवेति। तदाह—**भावज्ञापनेनेति**।

**प्रत्यनीकमिति**। अनीकप्रतिनिधितुल्यत्वात् प्रत्यनीकम्। यथानीकेऽभियोज्ये तत्प्रतिनिधीभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः। तथा चाह—

(174) प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥
[काव्यप्रकाश १०.१२९]

यथा—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादय कामः ॥ ५८० ॥ [ ]

ना त्वय्यनुरक्ता मनोभवः शरैस्ताडयतीति वास्तवोऽर्थः। तत्र च मनोभवस्य त्वद्रूपेण विनिर्जितत्वाद् योऽसावनुशयः स कारणत्वेनोत्प्रेक्षित इत्युत्प्रेक्षा। सा च प्रतीयमाना इवादिशब्दाप्रयोगात्। जातिगतिरीतिवृत्तिच्छायामुद्रोक्तियुक्तिभणितिगुम्फनाशय्यापठितिवाक्य(? वाको)वाक्याध्येयप्रेक्ष्यगेयाभिनेयानि शब्दालङ्काराः (सरस्वतीकण्ठाभरण २.३-४) संभवप्रत्यक्षागमोपमानार्थापत्त्यभावलक्षणाश्चार्थालङ्कारा (सरस्वतीकण्ठाभरण ३.२५, ४६, ४९, ५०, ५२, ५४) ये **भोजराजेन** प्रतिपादिताः ते केचिदुक्तेष्वेवान्तर्भवन्ति, केचिच्च कंचनापि चमत्कारं नावहन्ति, केचिच्च काव्यशरीरस्वभावा एवेति न सूत्रिताः ॥

॥ इति **आचार्यश्रीहेमचन्द्रविरचिते विवेके** षष्ठोऽध्यायः ॥

---

1 A, B शत्रुनारी. 2. A, B, C, D °निधि°. + The SK (p. 141) reads वाकोवाक्यं.

इह च काव्यं नायकादिप्रतिबद्धं भवतीति नायकादिलक्षणमुच्यते। तत्र तावदुत्तममध्यमाधमभेदेन पुंसां स्त्रीणां च तिस्रः प्रकृतयो भवन्ति। तत्र केवलगुणमय्युत्तमा। स्वल्पदोषा बहुगुणा मध्यमा। दोषवत्यधमा। तत्राधमप्रकृतयो नायकयोरनुचरा विटचेटीविदूषकादयो भवन्ति। उत्तममध्यमप्रकृतियुक्तस्तु—

**१४४) समग्रगुणः कथाव्यापी नायकः ॥ १ ॥**

समग्रगुणो नेतृत्वादिगुणयोगी वक्ष्यमाणशोभादिगुणान्वितश्च। तत्र नेतृत्वादिगुणबाहुल्याद् मध्यमप्रकृतावपि समग्रगुणता। नेतृगुणाश्चेमे—

(37) नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।
रक्तलोकः शुचिर्वाग्मी व्यूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥
[दशरूपक २·१–२]

कथा प्रबन्धस्तद्व्यापी। नयति व्याप्नोति–इतिवृत्तं फलं चेति नायकः।

तस्य सात्त्विकान् गुणानाह—

**१४५) शोभाविलासललितमाधुर्यस्थैर्यगाम्भीर्यौदार्यतेजांस्यष्टौ सत्त्वजास्तद्गुणाः ॥ २ ॥**

इह सत्त्वं देहविकारस्तस्माज्जाताः।

क्रमेण लक्षयति—

**१४६) दाक्ष्यशौर्योत्साहनीचजुगुप्सोत्तमस्पर्धागामिका शोभा ॥ ३ ॥**

---

1 P प्राप्नोति. 2. I adds मधुर. 3. I drops इह.

यतः शरीरविकाराद्दाक्ष्यादि गम्यते सा शोभेत्यर्थः । दाक्ष्यं यथा—

स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥ ६७८
[ महावीर० १.५३ ]

शौर्यं यथा—

खरेण खण्डिताशेषगात्रेण रणमूर्धनि ।
रामव्याजेन लोकेषु शौर्यमुत्सारितं नृणाम् ॥ ६७९ ॥ [

उत्साहो यथा—

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणानापृच्छ्य सेनापती-
नाश्वास्याश्रुमुखान्मुहुः प्रियसखान् प्रेष्यान् समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥ ६८० ॥
[ ]

नीचजुगुप्सा यथा—

उत्तालताडकोत्पातदर्शनेऽप्यप्रकम्पितः ।
प्रयुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सति ॥ ६८१ ॥
[ महावीर० १.३७ ]

उत्तमस्पर्धा यथा—

एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते-
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम् ॥ ६८२ ॥
[ ]

1. S दण्डित०.

१४७) धीरे गतिदृष्टी सस्मितं वचो विलासः ॥ ४ ॥

यथा—

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ ६८३ ॥

[उत्तरराम० ६.१९]

१४८) मृदुशृङ्गारचेष्टा ललितम् ॥ ५ ॥

यथा—

कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयांचकार ॥ ६८४ ॥

[रघु० ६.१३]

१४९) क्षोभेऽप्यनुल्बणत्वं माधुर्यम् ॥ ६ ॥

महत्यपि युद्धनियुद्धव्यायामादौ क्षोभहेतौ अनुल्बणत्वं मधुरा चेष्टा माधुर्यम् । यथा —

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥ ६८५ ॥

[हनुमन्नाटक ३.५०]

१५०) विघ्नेऽप्यचलनं स्थैर्यम् ॥ ७ ॥

सत्यपि विघ्ने उद्यमादपरिभ्रंशः स्थैर्यम् ।

यथा—

यथा यथा समारम्भो दैवात् सिद्धिं न गच्छति ।
तथा तथाधिकोत्साहो धीराणां हृदि वर्धते ॥ ६८६ ॥ [ ]

1. P, S मृदुः शृ°. 2. I °आभिहितद्विरेफम्. 3. I °अनुल्बणं.

१५१) हर्षादिविकारानुपलम्भकृद्गाम्भीर्यम् ॥ ८ ॥

यस्य प्रभावाद् बहिर्हर्षक्रोधादीनां विकारा दृष्टिविकासमुखरागादयो नोपलभ्यन्ते तन्निस्तिमितदेहस्वभावं गाम्भीर्यम् । यथा—

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥ ६८७ ॥

[ ]

१५२) स्वपरेषु दानाभ्युपपत्तिसंभाषणान्यौदार्यम् ॥ ९ ॥

अभ्युपपत्तिः परित्राणार्थिनोऽङ्गीकरणम् । परजनविषयं दानादिचेष्टात्मकमेवौदार्यम् । स्वग्रहणं तु दृष्टान्तार्थम् । स्वेष्विव परेष्वपीत्यर्थः ।

दानं यथा—

शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवैव तावत् किं भक्षणात्त्वं विरतो गरुत्मन् ॥ ६८८ ॥
[ नागानन्द ५.१५ ]

अभ्युपपत्तिर्यथा—

एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥ ६८९ ॥
[ कुमार० ६.६३ ]

संभाषणं यथा—

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुः
शौर्यं यत्तु न तद्गिरां पथि न तु(? ननु) व्यक्तं यतः कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥ ६९० ॥
[ महावीर० २.३६ ]

1 S drops यथा 2. I °त्मान्. 3. S I येनात्र.

**१५३) पराधिक्षेपाद्यसहनं तेजः ॥ १० ॥**

पराच्छत्रोर्न तु गुरोर्मित्रादेर्वाधिक्षेपापमानादेरसहनं तेजः । यथा—

ब्रूत नूतनकुष्माण्डफलानां के भवन्त्यमी ।
अङ्गुलीदर्शनाद्येन न जीवन्ति मनस्विनः ॥ ६९१ ॥ [ ]

नायकभेदानाह—

**१५४) धीरोदात्तललितशान्तोद्धतभेदात् स चतुर्धा ॥ ११ ॥**

स इति नायकः । धीरशब्दः प्रत्येकमभिसंबध्यते । तेन धीरोदात्तो धीरललितो धीरशान्तो धीरोद्धत इति । दक्षिणधृष्टानुकूलशठभेदादेकैकश्चतुर्धा । एते शृङ्गाररसाश्रयिणो भेदाः । इति षोडशभेदा नायकस्य ।

धीरोदात्तादीँल्लक्षयति—

**१५५) गूढगर्वः स्थिरो धीरः क्षमावानविकत्थनो महासत्त्वो दृढव्रतो धीरोदात्तः ॥ १२ ॥**

गूढगर्वो विनयच्छन्नावलेपोऽविकत्थनोऽनात्मश्लाघापरः । महासत्त्वः क्रोधाद्यनभिभूतान्तस्सत्त्वः[1] दृढव्रतोऽङ्गीकृतनिर्वाहकः । यथा रामादिः ।

**१५६) कलासक्तः सुखी शृङ्गारी मृदुर्निश्चिन्तो धीरललितः ॥ १३ ॥**

कलासु गीताद्यास्वासक्तः । सुखी भोगप्रवणः शृङ्गारप्रधानः सुकुमाराकारः । सचिवादिसंविहितयोगक्षेमत्वाच्चिन्तारहितः, यथा वत्सराजः ।

**१५७) विनयोपशमवान् धीरशान्तः ॥ १४ ॥**

यथा मालतीमाधवमृच्छकटिकादौ माधवचारुदत्तादिः ।

**१५८) शूरो मत्सरी मायी विकत्थनश्छद्मवान् रौद्रोऽवलिप्तो धीरोद्धतः ॥ १५ ॥**

1 P, S 4 न्तस्तत्वः.

मत्सरी असहनः। मन्त्रादिबलेनाविद्यमानवस्तुप्रकाशको मायी। छद्म वञ्चनमात्रम्। रौद्रश्चण्डः। अवलिप्तः शौर्यादिमदवान्। यथा जामदग्न्यरावणादिः।

(18) देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥
धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा।
इति चत्वार एवेह नायकाः समुदाहृताः ॥

[नाट्यशास्त्र २४·१८-१९ (C. S. S.); नाट्यशास्त्र २४·१८-१९ (G. O. S.)]

---

**देवा धीरोद्धता** इति। अत्र हि।

धीरोदात्तं जयति चरितं रामनाम्नश्च विष्णोः। ५८१।

इत्यादेर्दर्शनाज्जनकप्रभृतीना रामादीनां च न धीरललितत्वमुचितमिति धीरललितत्वं राज्ञ एव वर्णनीयं नान्यस्य। सेनापत्यमात्ययोर्धीरोदात्तत्वमेव। देवानां धीरोद्धतत्वमेव। द्विजादीनां[1] धीरप्रशान्तत्वमेवेत्येवं[2] परं व्याख्येयम्।

+धीरोद्धतादिशब्दाश्च यथोक्तगुणसमारोपितावस्थाभिधायिनो वत्सवृषमहोक्षादिवन्न जात्या कश्चिदवस्थितरूपो धीरोद्धतादिरस्ति। तत्त्वे हि महाकविप्रबन्धेषु विरुद्धानेकरूपाभिधानमसङ्गतमेव स्यात्। जातेरनपायित्वात्। तथा च **भवभूतिना** एक एव जामदग्न्यः 'कैलासोद्धारसार' (महावीरचरित २·१६) इत्यादिभी रामादीन् प्रति प्रथमं धीरोद्धतत्वेन, पुनः 'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये' (महावीरचरित २·१०) इत्यादिना रावणं प्रति धीरोदात्तत्वेन, 'पुण्या ब्राह्मणजातिः' (महावीरचरित ४·२२) इत्यादिभिश्च धीरशान्तत्वेनोपवर्णितः। न चावस्थान्तराभिधानमनुचितम्[3]। अङ्गभूतनायकानां नायकान्तरापेक्षया महासत्त्वादेरव्यवस्थितत्वात्। अङ्गिनस्तु रामादेरेकप्रबन्धोपात्तान् प्रत्येकरूपत्वादारम्भोपात्तावस्थातोऽवस्थान्तरोपादानमन्याय्यम्। यथोदात्ताभिमतस्य रामस्य छद्मना वालिवधादमहासत्त्वतया स्वावस्थापरित्याग इति। वक्ष्यमाणानां च दक्षिणाद्यवस्थानां 'पूर्वां प्रत्यन्यया हृतः इति नित्यसापेक्षत्वेनाविर्भावादुपात्तावस्थातोऽवस्थान्तराभिधानमङ्गाङ्गिनोरप्यविरुद्धमिति[5]।

---

+ This whole passage is taken with a few variations from the Avaloka of Dhanika on the Daśarūpaka of Dhanañjaya. Vide: D R p. 38 (NS ed.) 1. E द्विजातीनां. 2. E °व परं. 3 E °तभूतनायकानां. 4. A, B, C, D °त्तावस्थातो°. 5. E इत्य.

इत्यन्तरश्लोकौ ।

अथ नायकस्य शृङ्गारित्वेऽवस्थाभेदानाह —

**१५९) ज्येष्ठायामपि सहृदयो दक्षिणः ॥ १६ ॥**

कनिष्ठायां रक्तो ज्येष्ठायामपि समानहृदयो दाक्षिण्यशीलत्वाद् दक्षिणः । यथा —

प्रसीदत्यालोके किमपि किमपि प्रेमगुरवो
रतक्रीडाः कोऽपि प्रतिदिनमपूर्वोऽस्य विनयः ।
सविश्रम्भः कश्चित् कथयति च किञ्चित् परिजनो
न चाहं प्रत्येमि प्रियसखि किमप्यस्य विकृतम् ॥ ६९२ ॥
[धनिकस्य, दशरूपकावलोके (प्र. २. सू. ७)]

**१६०) व्यक्तापराधो धृष्टः ॥ १७ ॥**

यथा —

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा[1] नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा[2] कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ ६९३ ॥
[अमरु० ६०]

**१६१) एकभार्योऽनुकूलः ॥ १८ ॥**

यथा —

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।

---

**अन्तरश्लोकाविति ।** अन्तरे मध्ये वक्तव्यशेषाभिधायकौ श्लोकान्तरश्लोकौ ।

---

1. P °कालिका. 2 I °वृष्टि.

अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ६९४ ॥
[ उत्तरराम० १·३८ ]

**१६२) गूढापराधः शठः ॥ १९ ॥**

यथा—

'एकत्रासनसंगते प्रियतमे' । इति । ६९५ । [ +अमरु० १९(?) ]

नायकविजेयं प्रतिनायकमाह—

**१६३) व्यसनी पापकृल्लुब्धः स्तब्धो धीरोद्धतः प्रतिनायकः ॥ २० ॥**

यथा—रामयुधिष्ठिरयो रावणदुर्योधनौ ।

नायिकालक्षणमाह—

**१६४) तद्गुणा स्वपरसामान्या नायिकाऽपि त्रेधा ॥ २१ ॥**

तद्गुणा यथोक्तसंभवनायकगुणयोगिनी नायिका । सा च स्वकीया, परकीया, सामान्या चेति त्रेधा ।

स्वस्त्रीलक्षणमाह --

**१६५) स्वयमूढा शीलादिमती स्वा ॥ २२ ॥**

आदिग्रहणादार्जवलज्जागृहाचारनैपुणादिपरिग्रहः । शीलं यथा—

कुलबालिआए[1] पेच्छह जोव्वणलायण्णविब्भमविलासा[2]।
पवसंति व्व पवसिए एंति व्व पिए घरमइंते (? घरं एंते) ॥ ६९६ ॥
[ ]

**१६६) वयःकौशलाभ्यां मुग्धा मध्या प्रौढेति सा त्रेधा ॥२३॥**

वयः शरीरावस्थाविशेषः, कौशलं कामोपचारनैपुणं, ताभ्यां मुग्धा । एवं मध्या प्रौढा चेति । तत्र वयसा मुग्धा यथा—

**वयसा मुग्धेति** । वयसाऽसम्पूर्णेत्यर्थः । एवं कौशलेनापि ।

+ The printed text reads दृष्ट्वैकासनसंस्थितं ( V 4 °संगते) प्रियतमे.

1 S, I, L °याए. 2. S जुव्वण°. 3. S, L लायण; P, I लायन्न.

दोर्मूलावधिसूत्रितस्तनमुरः स्निह्यत्कटाक्षे दृशौ
किञ्चित्ताण्डवपण्डिते स्मितसुधासिक्तोक्तिषु भ्रूलते ।
चेतः कन्दलितं स्मरव्यतिकरैर्लावण्यमङ्गैर्धृतं
तन्वङ्ग्यास्तरुणिम्नि सर्पति शनैरन्यैव काचिद् गतिः ॥ ६९७ ॥
[ ]

कौशलेन यथा—

उदितोरुसादमतिवेपथुमत् सुदृशोऽभिभर्तृ विधुरं त्रपया ।
वपुरादरातिशयशंसि पुरः[1] प्रतिपत्तिमूढमपि बाढमभूत् ॥ ६९८ ॥
[ शिशुपाल० ९.७७ ]

वयसा मध्या यथा—

तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च ।
दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलता-
महो सारङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः ॥ ६९९ ॥
[ ]

कौशलेन यथा—

स्वेदाम्भःकणिकाचितेऽपि वदने जातेऽपि रोमोद्गमे
विस्रम्भेऽपि गुरौ पयोधरभरोत्कम्पे च वृद्धिं गते ।
दुर्वारस्मरनिर्भरेऽपि हृदये नैवाभियुक्तः प्रिय-
स्तन्वङ्ग्या हठकेशकर्षणघनश्लेषामृते लुब्धया ॥ ७०० ॥
[ सुभाषितावलौ ( श्लो. २०७१ ) ]

वयसा प्रगल्भा[3] (?प्रौढा[2]) यथा—

---

**वयसा मध्येति** । किञ्चिदसम्पूर्णेत्यर्थः ।
**वयसा प्रगल्भेति (? प्रौढेति)** । सम्पूर्णेत्यर्थः ।

---

1 The Śiśupālavadha (N. S. ed ) reads · पुनः. 2. The text (p 413, Sūtra 23) leads one to expect the reading प्रौढा. 3. The reading प्रगल्भा in the text and the commentary is after the DR II 15, 18.

नितम्बो मन्दत्वं जनयति गुरुत्वाद् द्रुतगते-
र्महत्त्वादुद्वृत्तस्तनकलशभारः श्रमयति ।
विकासिन्या कान्त्या प्रकटयति रूपं मुखशशी
ममाङ्गानीमानि प्रसभमभिसारे हि रिपवः ॥ ७०१ ॥ [ ]

कौशलेन तथा—

उद्धृतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ।
श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥ ७०२ ॥
[ शिशुपाल० १०.७६ ]

**१६७) धीराधीराधीराऽधीराभेदादन्त्ये त्रेधा ॥ २४ ॥**

अन्त्ये मध्याप्रौढे । त्रेधा—धीरा मध्या, धीराधीरा मध्या, अधीरा मध्या । एवं प्रौढापि त्रेधा ।

**१६८) षोढापि ज्येष्ठाकनिष्ठाभेदाद् द्वादशधा ॥ २५ ॥**

मध्याप्रौढयोः प्रत्येकं त्रिभेदत्वात् षड्विधापि ज्येष्ठाकनिष्ठाभेदाद्-द्वादशधा स्वस्त्री भवति । तत्र प्रथममूढा ज्येष्ठा पश्चादूढा कनिष्ठा ।
अथासां क्रोधचेष्टामाह—

**१६९) सोत्प्रासवक्रोक्त्या सबाष्पया वाक्पारुष्येण क्रोधिन्यो मध्या धीराद्याः ॥ २६ ॥**

मध्या धीराद्यास्तिस्रोऽपि यथासंख्यं सोत्प्रासवक्रोक्त्यादिभिः क्रोधं कुर्वन्ति ।

तत्र सोत्प्रासवक्रोक्त्या मध्या धीरा यथा—

न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः ॥ ७०३ ॥
[ शिशुपाल० ७.५३ ]

1. P, L, I उद्घृते°. The reading adopted in the text is that of the Śiśupālavadha (NS ed.) 2. S त्रिधा. 3. S अन्ते.

सबाष्पया सोत्प्रासवक्रोक्त्या धीराधीरा यथा—

'बाले नाथ' (पृ. २१५) इति । ७०४ । [अमरु० ५७]

वाक्पारुष्येणाधीरा यथा—

धिङ् मां किं समुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा क्व ते
वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त निर्बाधसे ।
खिन्नाहं तव रात्रिजागरतया तामेव याहि प्रियां
निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥ ७०५ ॥

**१७०) उपचारावहित्थाभ्यामानुकूल्यौदासीन्याभ्यां संतर्जनाघाताभ्यां प्रौढा धीराद्याः ॥ २७ ॥**

प्रौढा धीराद्यास्तिस्रोऽपि यथासंख्यमुपचारावहित्थादिद्विकत्रयेण क्रोधिन्यो भवन्ति । तत्र धीरा प्रौढा सोपचारा यथा—

एकत्रासनसंगतिः परिहृता प्रत्युद्गमाद् दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ ७०६ ॥

[अमरु० १८]

सैव सावहित्था यथा—

वरं भ्रूभङ्गास्ते प्रकटितगुरुक्रोधविभवा
वरं सोपालम्भाः प्रणयमधुरा गद्गदगिरः ।
वरं मानाटोपप्रसभजनितोऽनादरविधि-
र्न गूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥ ७०७ ॥

[सुभाषितावली (श्लो. १६२३)]

प्रौढा धीराधीरानुकूला यथा—

यत्पाणिर्न निवारितो निवसनग्रन्थिं समुद्ग्रन्थयन्
भ्रूभेदो न कृतो मनागपि मुहुर्यन्खण्ड्यमानेऽधरे ।

1 P, I, L या न. 2. The Subhāṣitāvalī (p 275) reads °विमुखा.

यन्निःशङ्क[1]मिहार्पितं वपुरहो पत्युः समालिङ्गने
मानिन्या कथितोऽनुकूलविधिना तेनैव मन्युर्महान् ॥ ७०८ ॥
[शृङ्गारतिलकम् परि. १ का. ४४ अनन्तरम्]

सैवोदासीना यथा—

आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो
भग्नभ्रूरतिखण्ड्यमानमधरं धत्ते न केशग्रहे।
अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने
तन्व्या शिक्षित एष सम्प्रति कुतः कोपप्रकारोऽपरः ॥ ७०९ ॥
[अमरु० १०६]

प्रौढाऽधीरा संतर्जनेन यथा—

तथाभूदस्माकं प्रथममविभिन्ना तनुरियं
ततोऽनु त्वं प्रेयानहमपि हताशा प्रियतमा।
इदानीं त्वं नाथो वयमपि कलत्रं किमपरं
मयाप्तं प्राणाना कुलिशकठिनानां फलमिदम् ॥ ७१० ॥
[अमरु० ६९]

सैव साघाता यथा—

'कोपात् कोमललोलबाहुलतिका—' (पृ० ४०)। ७११। इति।

परस्त्रीलक्षणमाह—

**१७१) परोढा परस्त्री कन्या च ॥ २८ ॥**

परेणोढा परस्य[2] स्त्री परस्त्री। सा च नाङ्गिनि रसे उपकारिणीति नास्याः प्रपञ्चः कृतः। ऊढेत्युपलक्षणम्। अवरुद्धापि परस्त्रीत्युच्यते। परोढा यथा—

'दृष्टिं हे प्रतिवेशिनि' (पृ० ५८-५९)। ७१२। इति।

कन्या तु पित्राद्यायत्तत्वादनूढापि परस्त्री। यथा—

दृष्टिः शैशवमण्डना प्रतिकलं प्रागल्भ्यमभ्यस्यते
पूर्वाकारमुरस्तथापि कुचयोः शोभां नवामीहते।
नो धत्ते गुरुतां तथाप्युपचिताभोगा नितम्बस्थली
तन्व्याः स्वीकृतमन्मथं विजयते नेत्रैकपेयं वपुः ॥ ७१३ ॥
[

1. The Śṛṅgāratilaka (p. 121) reads °मिवा° 2. S drops परस्य स्त्री.

सामान्यां लक्षयति—

**१७२) गणिका सामान्या ॥ २९ ॥**

कलाप्रागल्भ्यधौर्त्याभ्यां गणयति कलयति गणिका। सामान्या निर्गुणस्य सगुणस्य च साधारणी। केवलधनलाभालम्बनेन कृत्रिमप्रेमत्वात्। यथा—

गाढालिङ्गन[1]पीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाधरमुक्तसीत्कृतलस[2]सङ्क्रान्तभ्रु नृत्यत्करम्।
चाटुप्रायवचो विचित्रमणितं घातै रुतैश्चाङ्कितं
वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् ॥ ७१४ ॥
[शृङ्गारतिलक परि. १ का. ६८ अनन्तरम्]

स्वपरस्त्रीणामवस्थां[3] आह—

**१७३) स्वाधीनपतिका प्रोषितभर्तृका खण्डिता कलहान्तरिता वासकसज्जा विरहोत्कण्ठिता विप्रलब्धाभिसारिका चेति स्वस्त्रीणामष्टाववस्थाः ॥ ३० ॥**

रतिगुणाकृष्टत्वेन पार्श्वस्थितत्वात् स्वाधीन आयत्तः पतिर्यस्याः सा तथा। यथा—

सालोए च्चिअ सूरे घरिणी[4] घरसामियस्स घेत्तूण।
[5]नेच्छंतस्स य चलणे धुयइ हसंती हसंतस्स ॥ ७१५ ॥
[सप्तशती १३०; गाथासप्तशती २.३०] इति।

कार्यतः प्रोषितो देशान्तरं गतो भर्ता यस्याः सा तथा। यथा—

श्वासा बाष्पजलं गिरः सकरुणा मार्गे च नेत्रार्पणं
केनेदं न कृतं प्रियस्य विरहे कस्यासवो निर्गताः।

1. P, 4 °लिङ्गित. 2. I °क्लसद्भ्रूभ्रान्तनृ°. 3. S, O स्वामाह. 4. S drops from घरिणी to the end. 5. I णेच्छंतस्स.

सख्येवं यदि तेन नास्मि कलिता पान्थः कथं प्रोषितः
प्राणाः संप्रति मे कलङ्कमलिनास्तिष्ठन्तु वा यान्तु वा ॥ ७१६ ॥
[ ]

वनितान्तरव्यासङ्गादनागते प्रिये दुःखसंतप्ता खण्डिता । यथा—

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि मुहुरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ ७१७ ॥
[ शिशुपाल० ११·३४ ]

ईर्ष्याकलहेन निष्क्रान्तभर्तृकत्वात्तत्संगमसुखेनान्तरिता कलहान्तरिता । यथा—

निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तं दिनं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥ ७१८ ॥
[ अमरु० ९२ ]

(39) परिपाट्यां फलार्थे वा नवे प्रसव एव वा ।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ॥

**परिपाट्यामिति** । परिपाटिर्यथाकल्पितानुपूर्वी । अस्या एकेन दिनेन वारः, अस्या द्वाभ्यामित्यादि । तदपवादमाह—**फलार्थे** इति । ऋताविति यावत् ।

**नव** इति । नवत्वे प्रसवे वृत्ते [5]चिरविरहखिन्नां सुखयितुम् । दुःखे तदीयबन्धुव्यापत्त्यादौ दुःखिता [6]आश्वासनीयेति ।

**प्रमोद** इति । तदीयपुत्रोत्सवादौ । 'उत्सवो हि माननीय' इत्युक्तम् ।

1. I यदि नास्मि तेन. 2. I °दमङ्क. 3. I °मुन्मूल्यते. + In P this verse is written on the margin which is broken in parts; so some letters cannot be made out. 4. A, B, C, D °स्यादि. 5. A, B drop चिर. 6. A, B, C, D आश्व°.

उचिते वासके स्त्रीणामृतुकालेऽपि वा बुधैः ।
द्वेष्याणामथवेष्टानां कर्तव्यमुपसर्पणम् ॥

[नाट्यशास्त्र २२.२०९–२१०]

इति नयेन वासके रतिसंभोगलालसतयाङ्गरागादिना सज्जा प्रगुणा वासकसज्जा ।

यथा—

तल्पकल्पनविधेरनन्तरं भर्तृमार्गमवलोकते मुहुः ।
दर्पणे क्षणमुदीक्षते वपुर्हर्यभूषणमनिन्द्यभूषणा ॥ ७१९ ॥

[ ]

प्रियंमन्या चिरयति भर्तरि विरहोत्कठिता । यथा—

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्
यो मां नेच्छति नागतश्च स हहा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ ७२० ॥

[ ]

दूतीमुखेन स्वयं वा संकेतं कृत्वा केनापि कारणेन वञ्चिता विप्रलब्धा । यथा—

---

वासयन्ति तत्र स्थाने रात्रिमिति वासका रात्र्युचिताः कामोपचाराः । फलार्थ इत्यस्य हेतोः सर्वापवादकत्वं दर्शयितुं धर्मवृत्तिना राज्ञा परिपाट्या [द्वेष्या] दुर्भगापि मेव्येति च निरूपयितुमाह—**उचिते वासके इति** । आर्तवः काले हि भूयानपि फलतः परमिति भवति (? परिमितीभवति)। यथोक्तम्—

(175) ऋतुः षोडश तत्राद्याश्चतस्रो दशमात् पराः ।
त्रयोदशी च निन्द्याः स्युरयुग्माः कन्यकोद्भवाः ॥
(176) षष्ठ्यष्टमी च दशमी द्वाभ्यां वर्णैश्च साधिका ।
युग्मा पुत्राय रात्रिः स्यात्... [ ] इति ।

तत्रापि नक्षत्रविशेषपरिवर्जनम् । पुत्रश्च राज्ञां मुख्यं फलम् । यथाह—

(177) 'प्रजायै गृहमेधिनाम्' इति ॥ [रघु० १.७]

---

1. E परतः.

यत् संकेतगृहं प्रियेण कथितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच भग्नाशया ।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभिः
भूमावक्षरमालिकेव लिखिता दीर्घं रुदत्या[1] शनैः ॥ ७२१ ॥

अभिसरत्यभिसारयति वा कामार्ता कान्तमित्यभिसारिका । यथा—

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि किमपरं त्रासोत्कम्पा दिशो मुहुरीक्षसे ॥ ७२२ ॥
[अमरु० ३१]

तथा—

न च मेऽवगच्छति यथा लघुतां करुणां यथा च[2] कुरुते स मयि ।
निपुणं तथैनमभिगम्य वदेरभिदूति काचिदिति संदिदिशे ॥ ७२३ ॥
[शिशुपाल० ९.५६]

अन्वर्थ एवासां लक्षणमित्याहत्य लक्षणं न कृतम् ।

१७४) अन्यत्रव्यवस्था परस्त्री ॥ ३१ ॥

परस्त्रियौ तु कन्योढे । संकेतात् पूर्वं विरहोत्कण्ठिते, पश्चाद् विदूषकादिना सहाभिसरन्त्यावभिसारिके । कुतोऽपि कारणात् सङ्केतस्थानमप्राप्ते नायके विप्रलब्धे इति व्यवस्थैवानयोरिति ।

नायिकानां प्रतिनायिकामाह—

१७५) ईर्ष्याहेतुः सपत्नी प्रतिनायिका ॥ ३२ ॥

यथा रुक्मिण्याः सत्यभामा ।

दूत्यश्च नायिकानां लोकसिद्धा एवेति नोक्ताः ।

अथ स्त्रीणामलङ्कारानाह—

1. L रुदंत्या. 2. P, I, L स कुरुते च मयि ।

**१७६) सत्त्वजा विंशतिः स्त्रीणामलङ्काराः ॥ ३३ ॥**

संवेदनरूपात् प्रसृतं यत्ततोऽन्यद्देहधर्मत्वेनैव स्थितं सत्त्वम् । यदाह—

(40) 'देहात्मकं भवेत् सत्त्वम्' [नाट्यशास्त्र २४. ७. (C. S. S), २२. ६ (GOS)] इति । ततो जाताः सत्त्वजाः । राजसतामसशरीरेष्वसंभवात् । चाण्डालीनामपि हि रूपलावण्यसम्पदो दृश्यन्ते न तु चेष्टालङ्काराः । तासामपि वा भवन्त उत्तमतामेव सूचयन्ति । अलङ्काराः देहमात्रनिष्ठा न तु चित्तवृत्तिरूपाः । ते यौवने उद्रिक्ता दृश्यन्ते बाल्येऽनुद्भिन्ना वार्द्धके तिरोभूताः । ते यद्यपि चैते पुरुषस्यापि सन्ति तथापि योषितां त एवालङ्कारा इति तद्गतत्वेनैव वर्णिताः । पुंसस्तूत्साहवृत्तान्त एव परोऽलङ्कारः । तथा च सर्वेष्वेव नायकभेदेषु धीरत्वमेव विशेषणतयोक्तम् । तदाच्छादितास्तु शृङ्गारादयो धीरललित इत्यादौ ।

अलङ्काराश्च केचन क्रियात्मकाः केचिद् गुणस्वभावाः । क्रियात्मका अपि केचन प्राग्जन्माभ्यस्तरतिभावमात्रेण सत्त्वोद्बुद्धेन देहमात्रे सति भवन्ति । तेऽङ्गजा इत्युच्यन्ते । अन्ये त्वद्यतनजन्मसमुचितविभाववशस्फुटीभवद्रतिभावानुविद्धे देहे परिस्फुरन्ति ते स्वाभाविकाः, स्वस्माद् रतिभावाद् हृदयगोचरीभूताद् भवन्ति—इति । तथा हि[1] कस्याश्चिन्नायिकायाः कश्चिदेव स्वभावबलाद् भवति, अन्यस्या अन्यः, कस्याश्चिद् द्वौ, त्रय इत्यादि, अतोऽपि स्वाभाविकाः । भावहावहेलास्तु सर्वा एव सर्वास्वेव सत्त्वाधिकारत्तू-[सू]त्तमाङ्गनासु[2] भवन्ति । तथा शोभादयः सप्त । एवमङ्गजाः स्वाभाविकाश्च क्रियात्मानः । शोभादयस्तु गुणात्मानस्ते चायत्नजाः । यत्नाज्जाताः क्रियात्मकाः । इच्छातो यत्नस्ततो देहे क्रियेति **पदार्थविदः** । ततोऽन्येऽयत्नजाः ।

तान् क्रमेण लक्षयति—

1. P, S drop हि. 2. °धिकारत्तू[सू]त्तमा°.

१७७) भावहावहेलास्त्रयोऽङ्गजा अल्पबहुभूयोविकारात्मकाः ॥ २४ ॥

यद्यपि—

(41) देहात्मकं भवेत् सत्त्वं सत्त्वाद् भावः समुत्थितः ।
भावात् समुत्थितो हावो हावाद्धेला समुत्थिता ॥

[नाट्यशास्त्र २४.७ (C. S. S.)
—२२.६ (GOS)]

इति भरतवचनात् क्रमेणैषां हेतुभावः, तथापि परम्परया तीव्रतमसत्त्वस्याङ्गस्यैव कारणत्वादङ्गजा इत्युक्ताः । एवं च परस्परसमुत्थितत्वेऽप्यमीषामङ्गजत्वमेव । तथा हि—कुमारीशरीरे प्रौढतमकुमार्यन्तरगतहेलावलोकने हावोद्भवो भावश्चेदुल्लसितपूर्वः, अन्यथा तु भावस्यैवोद्भवः । एवं भावेऽपि दृष्टे हावो हेला वा । यदा तु हावावस्थोद्भिन्नपूर्वा परत्र च हेला दृश्यते तदा हेलातोऽपि हेला । एवं हावाद् हावः भावाद् भाव इत्यपि वाच्यम् । एवं परकीयभावादिश्रवणात् सरसकाव्यादेरपि हेलादीनां प्रयोगो भवतीति मन्तव्यम् । एतदन्योन्यसमुत्थितत्वम् । तत्राङ्गस्याल्पो विकारोऽन्तर्गतवासनात्मतया वर्तमानं रत्याख्यं भावं भावयन् सूचयन् भावः । यथा—

दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रं प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग् यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥ ७२४ ॥

[　　　　]

बहुविकारात्मा भ्रूतारकचिबुकग्रीवादेर्धर्मैः स्वचित्तवृत्तिं परत्र जुह्वतीं ददतीं कुमारीं हावयतीति हावः । सा चाद्यापि स्वयं रतेः प्रबोधं

1. I drops बहु. 2. I करणत्वा°. 3. S drops च. 4. S °ह्लसित.
5. The Abhinavabhārati (Vol. III, p. 156) reads प्रबोधो.

न मन्यते केवलं तत्संस्कारवल्तत्तथाविकारान् करोति यैर्दृष्टा तथा कल्पयति। यथा—

स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः।
गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः ॥ ७२५ ॥
[ सुभाषितावलौ (श्लो. २२३६)]

यदा तु रतिवासनाप्रबोधात्तां प्रबुद्धां रतिमभिमन्यते केवलं समुचितविभावोपग्रहविरहान्निर्विषयतया स्फुटीभावं न प्रतिपद्यते तदा तज्जनितबहुतराङ्गविकारात्मा हेला, हावस्य सम्बन्धिनी क्रिया प्रसरत्ता वेगवाहित्वमित्यर्थः, वेगेन हि गच्छन् हेलतीत्युच्यते लोके इति। एवं चोद्भिद्योद्भिद्य विश्राम्यन् हावः। स एव प्रसरणैकस्वभावो हेलेति। यथा—

'कुरङ्गीवाङ्गानि' (पृ. ३५०)। ७२६। इति।

अत्र ह्यन्तर्गतरतिप्रबोधमात्रमुक्तं न त्वभिलापशृङ्गार इति मन्तव्यम्। तदेतद्ब्राह्मणस्योपनयनमिव भविष्यत्पुरुषार्थसम्रपीठबन्धत्वेन योषितामामनन्ति।

१७८) लीलादयो दश स्वाभाविकाः ॥ ३५ ॥

विशिष्टविभावलाभे रतौ संविषयत्वेन (? सविशेषत्वेन) स्फुटीभूतायां तदुपबृंहणकृता देहविकारा लीलाविलासविच्छित्तिबिब्बोकविभ्रमकिलिकिञ्चितमोट्टायितकुट्टमितललितविहृतनामानः। एते च प्राप्तसंभोगत्वेऽप्राप्तसंभोगत्वे च भवन्ति। शोभादयश्च सप्त वक्ष्यमाणाः प्राप्तसंभोगतायामेव।

लीलादीँल्लक्षयति—

१७९) वाग्वेषचेष्टितैः प्रियस्यानुकृतिर्लीला ॥ ३६ ॥

---

1 I किमिव न हि. L किमिह न हि. 2. P, T, I drop न. 3. The Abhinavabhāratī (Vol. III, p. 158) reads सविशेषत्वेन. 4. S. L° त्रिभ्रमविब्बोक°. P, I कुट्टुमित.

प्रियगतानां वाग्वेषचेष्टानां प्रियबहुमानातिशयेन न तूद्भटक-रूपेणात्मनि योजनमनुकृतिर्लीला । यथा—

जं जं करेसि जं जं च जंपसे जह तुमं निअं[1]सेसि ।
तं तमणुसिक्खिरीए दि[2]अहो दिअहो न संवडइ ॥ ७२७ ॥
[सप्तशती ३७८; गाथासप्तशती ४.७८]

१८०) स्थानादीनां वैशिष्ट्यं विलासः ॥ ३७ ॥

स्थानमूर्ध्वता । आदिशब्दादुपवेशनगमनहस्तभ्रूनेत्रकर्मपरिग्रहः । तेषां वैशिष्ट्यं विलासः । यथा—

अत्रान्तरे किमपि वाग्विभवातिवृत्तं
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकारविशेषरम्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥ ७२८ ॥
[मालतीमाधव १.२९]

१८१) गर्वादल्पाकल्पन्यासः शोभाकृद् विच्छित्तिः ॥३८॥

सौभाग्यगर्वादनादरेण कृतो माल्याच्छादनभूषणविलेपनरूपस्याल्पस्याकल्पस्य न्यासः सौभाग्यमहिम्ना शोभाहेतुर्विच्छित्तिः । यथा—

सिहिपिच्छकण्णऊरा जाया वाहस्स गव्विरी भमइ ।
मुत्ताहलरइअपसाहणाण मज्झे सवत्तीणं ॥ ७२९ ॥
[सप्तशती १७३; गाथासप्तशती २.७३]

१८२) इष्टेऽप्यवज्ञा बिब्बोकः ॥ ३९ ॥

सौभाग्यगर्वादिष्टेऽपि वस्तुन्यनादरो बिब्बोकः । यथा—

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥ ७३० ॥
[कुमार० ८.४९]

---

1. P, T, L °यं°. 2. I दिअहो विअहो; the Gāthāsaptaśatī (p. 193) reads : दीहो दिअहो.

१८३) वागङ्गभूषणानां व्यत्यासो विभ्रमः ॥ ४० ॥

सौभाग्यगर्वाद् वचनादीनामन्यथा निवेशो व्यत्यासो विभ्रमः । वचनेऽन्यथा वक्तव्येऽन्यथा भाषणम् । हस्तेनादातव्ये पादेनादानम् । रशनायाः कण्ठे न्यासः । यथा—

चकार काचित् सितचन्दनाङ्के
काञ्चीकलापं स्तनभारपृष्ठे ।
प्रियं प्रति प्रेषितचित्तवृत्ति-
र्नितम्बबिम्बे च बबन्ध हारम् ॥ ७३१ ॥ [ ]

१८४) स्मितहसितरुदितभयरोषगर्वदुःखश्रमाभिलाषसङ्करः किलिकिञ्चितम् ॥ ४१ ॥

सौभाग्यगर्वात् स्मितादीनां सङ्करः किलिकिञ्चितम् । यथा—

रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे ।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदित-
स्मितक्रुद्धोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम् ॥ ७३२ ॥

[धनिकस्य, दशरूपकावलोके (प्र. २ सू. ३९)]

१८५) प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम् ॥४२॥

प्रियस्य कथायां दर्शने वा तद्भावभावनं तन्मयत्वम् । [1]ततो योद्भूता चेष्टा लीलादिका सा मदनाङ्गपर्यन्ताङ्गमोटनान्मोट्टायितम् । यथा—

स्मरदवथुनिमित्तं गूढमन्वेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः ।
[2]हरति विनतपृष्ठोदग्रपीनस्तनाग्रा
[3]नतवलयितबाहुर्जृम्भितैः साङ्गभङ्गैः ॥ ७३३ ॥

[धनिकस्य, दशरूपकावलोके (प्र. २, सू. ४०)]

---

+ In I सौभाग्य to विभ्रम: is written on the margin which is much soiled. 1. L drops from ततो to निमित्तं. 2. The DR (p. 55) reads भवति विततपृष्ठोदस्त°. 3. P तप°; DR (p. 55) तत°.

**१८६) अधरादिग्रहाद् दुःखेऽपि हर्षः कुट्टु(? ट्ट)मितम् ॥४३॥**

अधरस्तनकेशादीनां ग्रहणात्। प्रियतमेनेति शेषः। दुःखेऽपि हर्षः कुट्टु(? ट्ट)मितम्। यथा—

ईषन्मीलितलोललोचनयुगं व्यावर्तितभ्रूलतं
संदष्टाधरवेदनाप्रलपितं मा मेति मन्दाक्षरम्।
तन्वङ्ग्याः सुरतावसानसमये दृष्टं मया यन्मुखम्
स्वेदार्द्रीकृतपाण्डुगण्डपुलकं तत् केन विस्मार्यते ॥ ७२४ ॥

[ ]

**१८७) मसृणोऽङ्गन्यासो ललितम् ॥ ४४ ॥**

अङ्गानां हस्तपादभ्रूनेत्राधरादीनां मसृणः सुकुमारो विन्यासो ललितम्। यथा—

सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन।
विन्यस्यन्ती चरणकमले लीलया स्वैरपा(या ?)तै-
र्निःसंगीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥ ७२५ ॥

[धनिकस्य, दशरूपकावलोके प्र. २ सू. ४१]

**१८८) कर्तव्यवशादायाते एव हस्तादिकर्मणि यद् वैचित्र्यं स विलासः ॥ ४५ ॥**

यत्र तु बाह्यव्यापारयोग एव न कश्चिदस्ति नादातव्यबुद्धिरथ च सुकुमारकरादिव्यापारणं तल्ललितम्। अन्ये तु (42) 'लड विलासे' इति पाठं प्रमाणयन्तो विलासमेव सातिशयं ललितसंज्ञमाहुः [ ]।

**१८९) व्याजादेः प्राप्तकालस्याप्यवचनं विहृतम् ॥ ४६ ॥**

व्याजो मौग्ध्यादिप्रख्यापनाशयः। आदिग्रहणान्मौग्ध्यलज्जादिपरिग्रहः। ततो भाषणावसरेऽप्यभाषणं विहृतम्। यथा—

1. P खेदा°.

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥ ७३६ ॥
[कुमार० ७.१९]

केचित् (43) बाल्यकुमारयौवनसाधारणविहारविशेषं क्रीडितम्, क्रीडितमेव च प्रियतमविषयं केलिं चालङ्कारो आहुः [सरस्वतीकण्ठाभरण ५.१६७ कारिकावृत्ति, पृ. ५१९]। यथा—

मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥ ७३७ ॥
[कुमार० १.२९]

व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥ ७३८ ॥
[किरात० ८.१९]

**१९०) शोभादयः सप्तायत्नजाः ॥ ४७ ॥**

शोभाकान्तिदीप्तिमाधुर्यधैर्यौदार्यप्रागल्भ्यनामानः सप्तालङ्कारा अयत्नजाः ।

क्रमेण लक्षयति—

**१९१) रूपयौवनलावण्यैः पुंभोगोपबृंहितैर्मन्दमध्यतीव्राङ्गच्छाया शोभा कान्तिर्दीप्तिश्च ॥ ४८ ॥**

तान्येव रूपादीनि पुरुषेणोपभुज्यमानानि च्छायान्तरं श्रयन्तीति

---

**अनेनेति** । अलक्तकोपरक्तस्य हि चन्द्रमसि परभागलाभः । **अनवरत**-पादपतनप्रसादनैर्विना न पत्युर्झटिति यथेष्टानुवर्तिन्या भाव्यमिति **वोपदेशः** । शिरोविधृता च या चन्द्रकला तामपि परिभावयेति **सपत्नीलोकावजय** उक्तः ॥

॥ इति **आचार्यश्रीहेमचन्द्रविरचिते विवेके** सप्तमोऽध्यायः ॥

---

1. P, L चरणं. 2. I व्यपोहित. 3. E °क्तोप°. 4. E नुरुष्टिन्याव°.

सा च्छाया मन्दमध्यतीव्रत्वं क्रमेण संभोग[1]परिशीलनादाश्रयन्ती शोभा कान्तिर्दीप्तिश्च भवति[2] । शोभा यथा—

करकिसलयं धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।
स्थगयति मुहुर्पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षितुः ॥ ७३९ ॥
[ अमरु० ९० ]

कान्तिर्यथा—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभार[3]मंसं वहन्त्याः ।
भूय[4]स्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ७४० ॥
[ वेणी० १.३ ]

दीप्तिर्यथा—

आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किञ्चिन्मृष्टविशेषकं तनुतरैः स्वेदाम्बुनः शीकरैः ।
तन्व्या यत् सुरतान्तकान्तनयनं वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः ॥ ७४१ ॥
[ अमरु० ३ ]

## १९२) चेष्टामसृणत्वं माधुर्यम् ॥ ४९ ॥

ललितेषु व्रीडादिषु यथा मसृणत्वं चेष्टायास्तथा दीप्तेष्वपि क्रोधादिषु यत्तन्माधुर्यम् । यथा—

---

1. L परिभोगशी°.  2. S drops भवति.  3. I °केशमंसं.  4. S भूरि°

कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमत्या नंतिमति ।
न दृष्टेः शैथिल्यं मिलत इति चेतो दहति मे
निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥ ७४२ ॥
[अमरु० १४]

१९३) अचापलाविकत्थनत्वे धैर्यम् ॥ ५० ॥

चापलानुपहतत्वमात्मगुणानाख्यानं च धैर्यम् । यथा—

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥ ७४३ ॥
[मालतीमाधव २.२]

१९४) प्रश्रय औदार्यम् ॥ ५१ ॥

अमर्षेर्ष्याक्रोधाद्यवस्थास्वपि प्रश्रय औदार्यम् । यथा—

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
क्रोधश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥ ७४४ ॥
[रत्नावली २.२०]

१९५) प्रयोगे निःसाध्वसत्वं प्रागल्भ्यम् ॥ ५२ ॥

प्रयोगे कामकलादौ चातुःषष्टिके इत्यर्थः । यदाह—

---

1. I नंतिमतिः. L प्रतिवचनमतिः i. e. drops मत्यानति. 2. I मिलित. L मिल्लति. 3. S मां. 4. P, I, L drop च.

(44) अन्यदा भूषणं पुंसः शमो लज्जेव योषितः।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव+ ॥

[शिशुपाल० २.४४]

मनःक्षोभपूर्वकोऽङ्गसादः साध्वसं तदभावः प्रागल्भ्यम्। यथा—

'आशु लङ्घितवतीष्टकराग्रे' (पृ. २३४)। ७४५। इति।

अत्र शोभाकान्तिदीप्तयो बाह्यरूपादिगता एव विशेषा आवेगचापलामर्षत्रासानां स्वभाव एव। माधुर्याद्या धर्मा न चित्तवृत्तिस्वभावा इति नैतेषु भावशङ्कावकाशः। **शाक्याचार्यराहुलादयस्तु** (45) मौग्ध्यमदभाविकत्व[? *भावविकृत]परितपनादीनप्यलङ्कारानाचक्षते। तेऽस्माभिर्भरतमतानुसारिभिरुपेक्षिताः।

इति ॥ **आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ** नायकवर्णनः सप्तमोऽध्यायः समाप्तः ॥

+ In P this verse is written in the margin which is broken in parts.  * Vide Abhinavabhāratī (Vol. III, p. 164)

## ॥ अष्टमोऽध्यायः ॥

अथ प्रबन्धात्मककाव्यभेदानाह—

**१९६) काव्यं प्रेक्ष्यं श्रव्यं च ॥ १ ॥**

नानृषिः कविरिति कवृ[1] वर्णन (?) इति च दर्शनाद् वर्णनाच्च कविस्तस्य कर्म काव्यम्। एवं च[2] दर्शने सत्यपि वर्णनाया अभावादितिहासादीनां[3] न काव्यत्वमिति तल्लक्षणं न वक्ष्यते। तथा चाह **भट्टतातः**—

(46) नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम् ॥
स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।
दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः ॥

तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।
नोदिता कविता लोके यावज्जाता न वर्णना ॥ इति ॥

प्रेक्ष्यमभिनेयम्[4]। श्रव्यमनभिनेयम्[5]।

प्रेक्ष्यं विभजते—

**१९७) प्रेक्ष्यं पाठ्यं गेयं च ॥ २ ॥**

तत्र पाठ्यं भिनत्ति।

**१९८) पाठ्यं नाटकप्रकरणनाटिकासमवकारेहामृगडिम-व्यायोगोत्सृष्टिकाङ्कप्रहसनभाणवीथीसट्टकादि ॥ ३ ॥**

तथा च नाटकादीनि वीथ्यन्तानि वाक्यार्थाभिनयस्वभावानि भरतमुनिनोपदर्शितानि, सट्टकश्च कैश्चित्। यथा—

(47) प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव।
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम् ॥ १० ॥

**प्रख्यातेति।** प्रख्यातमितिहासाख्यानादिना वस्तु विषयो यस्य। तत्र हि लोकस्य कथापरिचयादादरातिशयो भवति। यद्वा प्रकर्षेण[6] ख्यातं वस्तु चेष्टितं

1. कवृ वर्णे—Siddhānta-Kaumudī (I. 380); कुवृङ् वर्णे Haima Dhātupāṭha (I. 767). 2. S drops च. 3. I अन्तर्भावादि°. 4. L drops नेयं. 5. I drops श्रव्यमनभिनेयं. 6. A, B °णाख्यातं.

नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चापि ।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम ॥

[ नाट्यशास्त्र १८·१०-११ ]

---

तथा विषयो मालवपञ्चालादिर्यस्मिन्[1] । चक्रवर्तिनोऽपि हि वत्सराजस्य कौशाम्बीव्यतिरिक्ते विषये कार्यान्तरोपपेक्षेण विना यच्चिरन्तरं निर्वर्णनं तद्वैरस्याय भवति । वस्तुविषययोः प्रख्यातिमुक्त्वा तृतीयां प्रख्यातिमाह— प्रख्यातोदात्तेति । उदात्त इति वीररसयोग्य उक्तः । तेन धीरललितधीरप्रशान्तधीरोद्धतधीरोदात्ताश्चत्वारोऽपि गृह्यन्ते । राजर्षिवंश्येत्यनेन प्रख्यातमपि यद् वस्तु ऋषितुल्यानां राज्ञां वंशे न[2] साधु नोचितं तथा प्रख्यातत्वेऽपि देवचरितं वरप्रभावादिबाहुल्येनोपायोपदेशायायोग्यमिति नैतदुभयं निबन्धनीयमिति फलतः प्रतिषेधो दर्शितः । राजान ऋषय इवेत्युपमितिसमासः । तद्वंशे साधु चरितं यस्मिन्निति बहुव्रीहिः । न च सर्वथा देवचरितं तत्र न वर्णनीयं किं तु दिव्यानामाश्रयत्वेनोपायत्वेन प्रकरीपताकानायकादिरूपेणोपेतमुपगमोऽङ्गीकरणं यत्र । तथा हि—**नागानन्दे** भगवत्याः[3] पूर्णकरुणाभरनिर्भरायाः साक्षात्करणे व्युत्पत्तिर्जायते । निरन्तरभक्तिभावितानामेवं नाम देवताः प्रसीदन्ति । तस्माद् देवताराधनपुरःसरमुपायानुष्ठानं कार्यमिति ।

ननु दिव्यनायकाश्रययुक्तकथाशरीरमपि नाटकं भवतीति कस्मान्न व्याख्यायते । व्याख्यायेत यद्येवंलक्षणेन नाटकेन कश्चिदर्थो व्युत्पाद्येत । न चैतदेवं, दिव्यानां दिव्यप्रभावैश्वर्ययोगाद् दुरुपपादेष्वप्यर्थेष्विच्छामात्रमेव प्रयत्नो नैव सिद्धौ[4] व्याहन्यते । तस्मात् तच्चरितं मर्त्यैर्विधातुमशक्यमिति नैवोपदेशयोग्यम् । तथा ह्युक्तम्—

(178) देवानां मानसी सिद्धिर्[5]गृहेषूपवनेषु च ।
[6]क्रियायत्नाभिनिष्पन्नाः सर्वे भावा हि मानुषाः ॥
तस्माद् देवकृतैर्भावैर्न[7] विस्पर्धेत मानुषः । इति[8]

[ नाट्यशास्त्र २·२२–२३ ]

तस्मादिष्टानिष्टदैवमानुषकर्मोपपादितशुभाशुभफलभाजां मर्त्यानामेव समुपभोगविपत्प्रतिविधानव्युत्पादकं चरितमाश्रित्य नाटकं निबन्धनीयमिति नृपतय एव नाटकेषु युज्यन्ते । नायिका तु दिव्याप्यविरोधिनी । यथोर्वशी । नायकचरितेनैव तद्वृत्तस्याक्षेपात् ।

प्रसिद्धमपि वस्तु न निष्फलं व्युत्पत्तये भवतीत्यत आह—**नानाविभूतिभिर्युतमिति**[8] । धर्मार्थकाममोक्षविभवैः फलभूतैर्विचित्ररूपैर्युक्तम् । तत्राप्यर्थकामौ[9]

---

1. E °दिसस्मरत् य°.　2. A, B, C वंशे साधु, probably वंशेऽसाधु.
3. A, B °नंदभवत्याः. 4. A, B सिद्धो. 5. The Nāṭyaśāstra reads सृष्टि°.
6. The Nāṭyaśāstra reads यत्नभावाभि°.　7. A, B °वै स्पर्धेत मानुष.
8. D drops इति. 9. C drops कामौ सर्वे

(48) यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद् बुधैर्ज्ञेयम् ॥
यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥

सर्वजनाभिलषणीयाविति तद्बाहुल्यं दर्शनीयमिति । ऋद्धिविलासादिभिरिति । ऋद्धिरर्थस्य राज्यादेः सम्पत्तिः । विलासेन कामो लक्ष्यते । आदिशब्दः प्रधानवाची । तत्प्रधानाभिः फलसम्पत्तिभिर्युक्तमित्यर्थः । तेन राज्ञा सर्वं राज्यं ब्राह्मणेभ्यो दत्त्वा वानप्रस्थं गृहीतमित्येवप्रायं फलं नोपनिबन्द्धव्यं धर्ममोक्षबहुलमिति । दृष्टसुखार्थी हि बाहुल्येन लोक इति तत्रास्य प्रतीतिर्विरसीभवेत् । गुणैरिति । अप्रधानभूतानि यानि चेष्टितानि हेयानि प्रतिनायकगतान्यपनयप्रधानानि तैर्युक्तम् । तेषां पूर्वपक्षस्थानीयानां प्रतिक्षेपेण सिद्धान्तकल्पस्य नायकचरितस्य निर्वाहाज्जनपदकोशादिसम्पत्तिर्ऋद्धिः । कौमुदीमहोत्सवादयो विलासाः, सन्धिविग्रहादयो गुणा इति चाणक्यपरिचयावेदनमात्रफलम् । वस्तुशब्देन राजर्षिवंश्यचरितशब्देन च सर्वस्याप्यर्थराशेः संग्रहात् । अवान्तरवस्तुसमाप्तौ विश्रान्तये ये विच्छेदा अङ्कास्तैः पञ्चार्धदशान्तैर्ये च निमित्तबलादप्रत्यक्षदृष्टानां चेष्टितानामावेदकाः प्रवेशकास्तैश्चाढ्य तन्नाटकं नाम रूपकम् ।

**आत्मशक्त्येति ।** इतिहासादिप्रसिद्धि निरस्यति । वास्त्विति । साध्यं फलम् । शरीरमिति । तदुपायम् । नायकमिति । साधयितारम् । चकारः सर्वसमुच्चये । द्वितीयस्त्वसमग्रसमुच्चये । एवकारः समुच्चयाभावे । उत्पत्तौ भवमौत्पत्तिकं निर्मितम् ।

तदयमर्थः—त्रितयमपि यत्र कविकृतं द्वयमेकं च । अन्यत्तु पूर्वोपनिबद्धं तत् सर्वं प्रकरणं भेदसप्तकमर्थ्यम् । वस्त्वादिकं काव्याभिधेयमात्मशक्त्या प्रकुरुते यत्र काव्ये तत् प्रकरणमिति बुधैर्ज्ञेयमिति सम्बन्धः ।

यत्र न सर्वमुत्पाद्यं भवति तत्र योऽनुत्पाद्योऽशः स कुत्रस्थो ग्राह्य इति दर्शयितुमाह—**यदनार्षमिति ।** पुराणादिव्यतिरिक्तबृहत्कथाद्युपनिबद्धं मूलदेवतच्चरितादि । आहार्यमिति । पूर्वकविकाव्याद् बाहरणीयं समुद्रदत्ततच्चेष्टितादि ।

1. P, I अत्र. 2. S वस्तुबीजप्र°. 3. A, B drop तदयमर्थः. 4. D यत्र विकृत 5 A drops यत्.

यन्नाटके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च ।
तत् प्रकरणेऽपि योज्यं सलक्षणं सर्वसंधिषु तु ॥

विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यन्नैकविधं तज्ज्ञेयं प्रकरणं नाम ॥

नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगः ।
बाह्यजनसंप्रयुक्तं तज्ज्ञेयं प्रकरणं नाम ॥

ननु च तत्रांशे कविकृतत्वाभावात् कथं प्रकरणवाचोयुक्तिरित्याह—उत्पन्ने पूर्वसिद्धे बीजं वस्तु च यत्र तादृशमपि तद्यदिति यस्मादभूतैर्बृहत्कथादौ काव्यान्तरे वा प्रसिद्धैर्गुणैर्युक्तं प्रकरोति तदिति तस्माद्धेतोरेतदपि प्रकरणम्। तेन बृहत्कथादि-सिद्धस्य मूलदेवादेरधिकावापं कविशक्तिर्यदा विधत्ते तदा प्रकरणम्। एवं पूर्वकवि-समुत्प्रेक्षितसमुद्रदत्तचेष्टितादिवर्णनेऽप्यधिकावापं विदधत् कविः प्रकरणं कुर्यादिति तात्पर्यम्।

नन्वस्येतिवृत्तस्य कथं योजनेत्याशङ्क्य पूर्वोक्तमेवातिदेशद्वारेण स्मारयितुमाह—**यन्नाटके** इति। 'नानाविभूतिभिर्युतमृद्धिविलासादिभिः' (पृ. ४३३, पङ्क्ति १) इत्यादिना यत् फलवत्त्वमुक्तं तद् वस्तुशरीरमित्यङ्कप्रवेशकाढ्यम्। वृत्तिभेदाश्चेति। 'नानारसभावचेष्टितैर्बहुधा' 'सुखदुःखोत्पत्तिकृतम्' (नाट्यशास्त्र १८·१२) इति। सलक्षणमिति। लक्षणमङ्कपरिमाणम्। अङ्कान्तरसन्धानहेतुषु च प्रवेशकेषु यत् प्रयोज्यमुक्तं 'दिवसावसानकार्यं यद्यङ्के नोपपद्यत[2]' (नाट्यशास्त्र १८·२६) इत्यादि तत् सर्वं प्रकरणेऽपि योज्यम्।

अतिदेशायातमतिप्रसङ्गं वारयत्यार्याद्वयेन-**विप्रे**त्यादि। अमात्योऽधिकृतः। सार्थवाहो दिगन्तरात् पण्यानामाहर्ता तद्देशक्रयविक्रयकृतो वणिजोऽन्य एव। नैकविधमित्यनेकरसयुक्तमित्यर्थः। नैकरसान्तरयुक्त इति। **त**दिति तदतिदेशमात्रमिति सूचितम्। प्रख्यातोदात्तेत्यतिप्रसक्तं निषेधयति। **नोदात्तेति**। तन्निषेधे चार्थान्नाटक-वैपरीत्यमायातम्। नाटके च देवो नायकत्वेन निषिद्ध इति प्रकरणे कर्तव्यत्वेनापाद्यत इत्यत आह—न दिव्यचरितमिति। तथा दिव्याश्रयमिति यदतिदेशाद्देवाना-मुपायत्वेन प्रयोज्यत्वं[3] प्रसक्तम्, तदप्यनेन निषिद्धम्। नाटके देवानामिवेहापि

1. A interpolates 'श्रुतिनारसभाव' between याति and देश. 2. A, B नोत्पद्यत. 3. A, B प्रयोज्यमाप्रसक्तं.

दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रकरणे तु ॥
[नाट्यशास्त्र १८·४५-५०]

(49) प्रकरणनाटकभेदादुत्पाद्यं वस्तु नायकं नृपतिम् ।
अन्तःपुरसंगीतककन्यामधिकृत्य कर्तव्या ॥

स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी ।
बहुनृत्तगीतवाद्या रतिसंभोगात्मिका चैव ॥

राज्ञः प्रवेशं शङ्कमानो निराकरोति—न राजसभोग इति । यदि वात्रौत्पत्तिकत्वेऽपि न राजोचितसंभोगोत्प्रेक्षा विप्रादिषु करणीयेत्यनेन शिक्षयति । अत एव राजनि य उचितोऽन्तःपुरजनः कञ्चुकिप्रभृतिरतद्यानिरिक्तो बाह्यजनोऽत्र चेटदासादिः प्रवेशकादौ कार्य इत्यर्थः ।

एतदेव दर्शयति—**दासविटेति** । कञ्चुकिस्थाने दासः, विदूषकस्थाने विटः, अमात्यस्थाने श्रेष्ठीत्यर्थः । वेश्यावाटो वेशस्तत्र या स्त्री तस्या उपचारो **वैशिके** (नाट्यशास्त्र, अध्याय २३) प्रसिद्धः स कारणं यस्य शृङ्गारस्य तेनोपेतम् । कुलस्त्रीविषयं चेष्टितं मन्दं यत्रेति ।

**प्रकरणेति** । बहुषु प्रकरणभेदेषु नाटकभेदेषु च स्त्रीप्राप्तिफलात् सभोगशृङ्गारप्रायात् कैशिकीप्रधानाच्च प्रकरणभेदान्नाटकभेदाच्च नाटिका ज्ञेयेति दूरेण सम्बन्धः । उत्पाद्यं वस्तु चरितं नायकं च नृपतिमन्तःपुरकन्यां सगीतकशालाकन्यां चाधिकृत्य प्राप्यत्वेनाभिसन्धाय कर्तव्या च । तेन स्त्रीप्राप्तिः संभोगशृङ्गारोऽभ्यन्तरे कैशिकी च वृत्तिः । तथा—अवस्थासन्ध्यङ्गार्थप्रकृतिपताकाप्रकरीपताकास्थानाङ्कविष्कम्भकप्रवेशकादीन्युभयभेदसाधारणानि नाटिकायां प्रयोज्यानि । यदपि किञ्चिदसाधारणं तदपि योज्यते । अतश्च 'उत्पाद्यं वस्तु' इति प्रकरणधर्मः । 'नायकं नृपतिम्' इति नाटकधर्मः । 'अन्तःपुरसंगीतककन्याम्' इति कन्यायोगे ईर्ष्याविप्रलम्भश्च नाटकधर्म एव ।

अथास्या विशेषलक्षणमाह—**स्त्रीप्रायेति** । स्त्रियः प्रायेण बाहुल्येन यत्र ।

1 बहुगीतनृत्त°. 2. A, B मदं.

राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता ।
नायकदेवी[1]दूतीसपरिजना नाटिका ज्ञेया ॥
[नाट्यशास्त्र १८·५८–६०]

समवकारस्तु—

(50) देवासुर[2]बीजकृतः प्रख्यातोदात्तनायकश्चैव ॥

चत्वारोऽङ्का यस्याम् । कस्याश्चिदवस्थायाः सरसे[3]ऽवस्थान्तरे समावापः कर्तव्य इति यावत् । सुष्ठु पूर्णतया विहितानि चत्वार्यपि कैशिक्यङ्गानि यत्र । एतेन स्त्रीप्रायेति ललितेति बहुनृत्तेति च कैशिकीवृत्तिबाहुल्यं दर्शयति । रतिपुरःसर· संभोगो राज्यप्राप्त्यादिलक्षण आत्मा प्रधानभूतं फलं यस्याम् । अत एवाह— **राजगतैरुपचारै**र्व्यवहारैर्युक्ता । अन्यां चेदुद्दिश्य तत्र व्यवहारस्तदा पूर्वनायिकागतै· क्रोधप्रसादनवञ्चनैरवश्यं भाव्यमिति दर्शयति—प्रसादनेति । आर्यानुरोधात् क्रोधस्य पश्चात् पाठ· ।

ननु यस्याः क्रोधो भवति सा न कदाचिदुक्तेत्याशङ्क्याह—नायकेति । नायकस्य येयं देवी आद्यनायिका तथाभिलषितनायिकान्तरविषया येयं दूती तत्कृतं सपरिजनं परिजनसमृद्धिर्यस्याम् ।

**देवासुरेति** । देवासुरस्य यद्बीजं फलसम्पादनोपायस्तेन कृतो विरचितः । देवासुरा अपि चाप्रख्याता **बृहत्कथादौ** श्रूयन्ते स्वयं वा केनचिदूह्यन्त इति तन्निरासार्थं प्रख्यातपदम् । यद्यपि देवाः पुरुषापेक्षया उद्धतास्तथापि स्वापेक्षया गाम्भीर्यप्रधानतया उदात्ता उच्यन्ते भगवत्त्रिपुररिपुप्रभृतय·, प्रशान्ता ब्रह्मादयः, उद्धता नृसिंहादयः । अर्थत्रयस्य तावत्येव समापना त्र्यङ्क इत्युक्तम् । कपटो वञ्चना मिथ्याकल्पितः सत्यानुकारी प्रपञ्च इत्यर्थः । स त्रिधा—यत्रानपराद्ध एव वञ्चकेन वञ्च्यते स एकः । यत्र तु वञ्चनीयोऽपि सापराधः स द्वितीयः । यत्र तु द्वयोरपि न कश्चिदभिसन्धिदोषः काकतालीयेन तु तुल्यफलाभिसन्धानवतोरप्येक उपचयेनापरस्त्वपचयेन युज्यते स दैवकृतस्तृतीयः ।

1 L देव°. 2. L drops from देवासुर to आरभटिवृत्तिसंपन्नः (p. 440, l. 1) i. e. about twenty lines of the verses. 3. सरसे स्थानान्तरे.

व्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात् त्रिशृङ्गारः ।
द्वादशनायकबहुलो ह्यष्टादशनालिकाप्रमाणश्च ॥ इति ।
[नाट्यशास्त्र १८·६३-६४]

(51) दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः ।
सुविहितवस्तुनिबद्धो विप्रत्ययकारणश्चैव ॥
उद्धतपुरुषप्रायः स्त्रीरोषप्रथितकाव्यबन्धश्च ।
संक्षोभविद्रवकृतः संस्फेटकृतस्तथा चैव ॥
स्त्रीभेदनापहरणावमर्दनप्राप्तवस्तुशृङ्गारः ।

चेतनकृतमन्यकृतमुभयकृत वा यदनर्थात्मकं वस्तु यतो विद्रवन्ति जना स विद्रव इति । तत्र चेतनं गजेन्द्रादि । अचेतनं जलवाय्वादि । उभयं नगरोपरोधादि । तस्य युद्धाभिदानादिसम्पाद्यत्वात् । शृङ्गारस्त्रिधा—धर्मार्थकाम-भेदात् । धर्मो यत्र हेतु· साध्यो वा नायिकालाभे स धर्मशृङ्गारः । एवमर्थ कामयोर्वान्त्यम् ।

अथ नायकयोग कार्यनिष्पत्तिकालविभागं चाह—द्वादशेति । द्वादश नायकबहुल इति प्रत्यङ्कमिति केचित् । अन्ये तु प्रत्यङ्क नायकप्रतिनायकौ तत्सहायौ चेति चतुर आहुः । समुदायापेक्षया हि द्वादशेति । बहुलग्रहणा-न्न्यूनाधिकत्वेऽप्यदोषः । अष्टादशेति । अष्टादशनालिकमेव तत्र कार्यं निबन्ध-नीयमित्यर्थः ।

**दिव्येति** । दिव्याना पुरुषाणा च यदाश्रयणं नायकतया तेन कृतः । दिव्यस्त्रीनिमित्तमुपगतं युद्धं यत्र । दिव्यानुप्रवेशात् समवकारवदसम्बद्धार्थता मा प्रसाङ्क्षीदित्याह—सुविहितेन संश्लिष्टेन वस्तुना निबद्धः विगतानि प्रत्ययकारणानि विश्वासहेतवो यत्र । मध्ये चात्र दिव्यानामपि प्रवेशो भवतीति दर्शयति ।

**उद्धतेति** । उद्धता उद्धृताः पुरुषाः प्रायेण यत्र । स्त्रीनिमित्तको रोषः । संक्षोभ आवेगः । विद्रवो व्याख्यातः । सस्फेटो विरोधिना विद्याविक्रम-सघर्षजो व्यासङ्गः । तथेत्युक्तसादृश्यार्थः । चः समुच्चये । एवशब्दोऽवधारणे । एतल्लक्षणयुक्त एवेत्यर्थः । स्त्रीनिमित्तं यानि भेदनापहरणावमर्दनानि यथायोगं स्त्रीविषयाण्यन्यविषयाणि वा तैः प्राप्तं वस्त्वधिष्ठानं प्रमदालक्षणं तस्य तादृशः शृङ्गारो यस्मिन । भेदसामदानादिना अवमर्दनं दण्डः ।

1. S °गतो. 2 I सस्फोट; S सांस्फुट°. 3 D drops यानि. 4. A, B भेदनाप्रहरणा

ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च ॥

यद् व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव ।
ईहामृगेऽपि तत् स्यात् केवलमत्र स्त्रिया योगः ॥
[ नाट्यशास्त्र १८·७८-८१ ]

(52) प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव ।
षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ॥

शृङ्गारहास्यवर्जं शेषैरन्यै रसैः समायुक्तः ।
दीप्तरसकाव्ययोनिर्नानाभावोपसंपन्नः ॥

निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः ।
युद्धनियुद्धाधर्षणसंस्फेटकृतश्च विज्ञेयः ॥

मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च ।
देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च ॥

**ईहा** चेष्टा **मृगस्येव** स्त्रीमात्रार्था यत्र । सुसमाहितकाव्यबन्ध इत्यनेन वीथ्यङ्गानि अत्र योज्यानीति दर्शयति । अङ्कपरिमाणं नायकसंख्यां वृत्तिरसविभागं च व्यायोगातिदेशेनाह—यदिति । कार्यशब्देनाङ्क उच्यते । तेन एक एवाङ्कः । नायकास्तु द्वादश समवकारातिदेशेन व्यायोगे तदभावात् । समवकारातिदेशेन सर्वसम्पत्तेर्गौरवं स्यात् ।

**प्रख्यातेति** । षड्रसा यस्मिन् तल्लक्षण षड्रसं तेन युक्तः । नाटकतुल्य सर्वमन्यत् केवलं सन्धीनां रसानां चासमग्रताम् । शृङ्गारहास्यवर्जं षड्रसत्वे उक्ते पर्यायेण शान्तस्य प्रयोगः स्यादित्याह—दीप्तरसेति । दीप्ता रसा वीररौद्रादयस्ते काव्ययोनिर्यत्र । नानाविधा भावा व्यभिचारिणः । आधर्षणं बलात्काररूपः पराभवः । माया शब्दरूपादीनामन्यथापादनमसतो वा प्रकाशनम् । **पुस्तं** श्लेष्यकिलिञ्जचर्मवस्त्रकाष्ठकृतानि रूपाणि ।

---

1. The Nāṭya-śāstra reads केवलममरस्त्रिया योगः । 2. I संस्फोट°.
3. D drops दर्शयति. 4. E पादेन सतां वाऽसतां प्रका°.

षोडशनायकबहुलः सात्त्वत्यारभटिवृत्तिसंपन्नः ।
कार्यो डिमः प्रयत्नान्नानाश्रयभावसंयुक्तः ॥

[नाट्यशास्त्र १८.८४-८८]

(53) व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः ।
अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ॥
बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे ।
न तु तत्प्रमाणयुक्तः कार्यस्त्वेकाङ्क एवायम् ॥
न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः ।
युद्धानियुद्धाधर्षणसंघर्षकृतश्च कर्तव्यः ॥

देवादयो बाहुल्येनात्र । बहुलग्रहणं व्यभिचारार्थम् । तेन न्यूनाधिका अपि नायकाः प्रयोज्याः । सात्त्वती चारभटी चेति (179) द्वन्द्वे 'अप्राणिपश्वादेः ।' (सिद्ध-हेमशब्दानुशासन ३।१।१३६) इत्येकवद्भावो (180) 'द्वन्द्वैकत्वाव्ययीभावौ' (हैमलिङ्गानुशासन, नपुंसकलिङ्ग -प्रकरण, श्लोक ९) इति नपुंसकलिङ्गता च । वृत्तिसमुदाये च वर्तमानेन वृत्तिशब्देन कर्मधारयः । तया सम्पन्नः । डिम्भो (? डिमो)डिम्बो विद्रव इति पर्यायास्तद्योगादयं डिमः । नानाश्रयभावसम्पन्न इति । नानेत्येकस्यान्योऽपरस्यान्य इति नानारूप आश्रयो येषां ते नानाश्रया भावास्तैः सम्पन्नः । बहूना नायकानां विभागेन हि भावा व्यवतिष्ठन्ते । अत एवेति वृत्तवैचित्र्यमत्रोपदिशन्ति ।

**व्यायोगस्त्विति** । व्यायोगः पुनर्डिमस्यैव शेषभूतो दिव्यनायकाभावात् केवलमत्रोदात्तस्य राजादेर्न नायकता, अपि त्वमात्यसेनापतिप्रभृतेर्दीप्तरसस्य । अत एव प्रख्यातनायकेत्यत्र उदात्तग्रहणं न कृतम् । शरीरमितिवृत्तम्, प्रख्यातो नायकः शरीरं च यत्र स तथा । अल्पश्च स्त्रीजनश्च तेन युक्तः । चेट्यादिना न तु नायिकादूत्यादिभिः कैशिकीहीनत्वात् । एकाहकृत इति एकदिवसनिर्वर्त्यं यत्कार्यं तत्र कृतः । यथा समवकार इति । द्वादशेत्यर्थः ।

तावदङ्कपरिमाणाशङ्कामतिदेशात् प्रत्यासत्त्या वा प्रसक्तां वारयितुमाह—

एकाङ्क एवेति एवकारेण एकाहचरितविषयत्वान्न्यायप्राप्तमेवाङ्गैकाङ्कत्वमित्याह । ननु प्रख्यातनायकशब्देन किमत्रगृहीतमित्यतिप्रसङ्गं शमयति—न चेति । चो भिन्नक्रमः । दिव्यैर्देवैर्नृपैर्ऋषिभिश्च नायकैर्न निबद्धोऽयं भवतीत्यर्थः ।

ननु कस्मादयं व्यायोग इत्याह—युद्धनियुद्धेति । व्यायामे युद्धनियुद्ध-

1. The Nāṭyaśāstra (GOS, Vol II, p. 444) and the Viveka down below read · सपन्नः. 2. I व्यायामस्तु. 3. L व्यावर्तते. 4. E °माने वृ°. 5. E °दिवस निर्वृत्तं. 6. E प्रसक्त्यां. 7. A, B वारयति.

एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ।
[नाट्यशास्त्र १८.९०-९३(अ)]

(54) वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥
प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुंभिः ॥
करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च ।
स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव ॥
नानाव्याकुलचेष्टः सात्त्वत्यारभटिकैशिकीहीनः ।
कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु ॥
[नाट्यशास्त्र १८.९३(ब)-९६]

(55) प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथा च संकीर्णम् ।
वक्ष्यामि तयोर्युक्त्या पृथक् पृथग् लक्षणविशेषम् ॥

प्राये युज्यन्ते पुरुषा यत्रेति व्यायोग इत्यर्थः । संघर्षः शौर्यविद्याकुलधनरूपादिकृता स्पर्धा[1] । दीप्तं काव्यमोजोगुणयुक्तं, दीप्ता रसा वीररौद्राद्याः, तदुभयं योनिः कारणमस्य ।

**प्रख्यातेति** । प्रख्याते भारतादियुद्धे विषये निमित्ते सति यत्र[2] करुणबहुलं चेष्टितं वर्ण्यते तत् प्रख्यातं स्त्रीपर्ववृत्तान्तवद्[3] भवतु । मा वा भूदित्यप्रख्यातग्रहणेनोक्तम् । तेनोभयोपादानस्य परस्परविरुद्धार्थत्वादकिञ्चित्करत्वं नाशङ्कनीयम् । दिव्यपुरुषैर्वियुक्त इति । दुःखात्मकत्वात् । शेषैरन्यैरि[4]ति । अर्थापत्तिफलम् । करुणो रसः प्रायो यत्रेति काव्यशरीरमुच्यते तत्र कृतः । निवृत्तयुद्धा उद्धतप्रहारा पुरुषा यस्मिन् । परिदेवितं दैवोपालम्भात्मनिन्दादिरूपमनुशोचनं यत्र[5] । निर्वेदितानि येषु श्रुतेषु निर्वेदो जायते तादृशि[6] भाषितानि यत्र । व्याकुलाश्चेष्टा भूमिनिपातविवर्तिताद्याः । सात्त्वत्यारभटिकैशिकीहीन इति । समाहारद्वन्द्वगर्भ[7]द्वन्द्वान्तरगर्भस्तृतीयासमासः । उत्क्रमणोन्मुखा[8] सृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचन्त्यः स्त्रियस्ताभिरङ्कित इति तथोक्तः ।

**प्रहसनमपीति** । अपिशब्दो भिन्नक्रमः । तथेति सामान्यलक्षणम् ।

1. E द्विरपर्धा. 2. E यत् तत्. 3. A, B स्त्रीपर्वत°; C, D, E श्रीपर्वत°; the reading in the text is adopted from the Abhinavabhārati (Vol. II, p. 445). 4. E adds पुरुषाः. 5. E drops यत्र. 6. C, E तादृशि भाषणानि. 7. A, B drop द्वन्द्वगर्भ; C, E समाहारद्वन्द्वगर्भ द्वन्द्वान्तर°. 8. A, B, C उत्क्रमणोन्मुखा; the Abhinavabhārati (Vol. II, p 446) reads उत्क्रमणीया.

भगवत्तापसविप्रैरन्यैरपि हासवादसंबद्धम् ।
कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् ॥
अविकृतभाषाचारं विशेषभावोपपन्नचरितमिदम् ।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥
वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः ।
अनिभृतवेषपरिच्छदचेष्टितकरणं च संकीर्णम् ॥

नाट्यशास्त्र १८·१०१, १०३-१०५]

(56) आत्मानुभूतशंसी परसंश्रयवर्णनाप्रयुक्तश्च ।
विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥
परवचनमात्मसंस्थैः प्रतिवचनैरुत्तरोत्तरग्रथितैः ।
आकाशपुरुषकथितैरङ्गविकारैरभिनयेच्च ॥

तदयमर्थः । द्विविधमपि प्रहसनरूपं हास्यरसप्रधानमित्यर्थः । लक्षणविशेषं विशेष लक्षणम् । भगवत्तापसविप्रा यतिवानप्रस्थगृहस्थाः । अन्ये शाक्यादयस्तैरुपलक्षितं हास्यप्रधानवचनसम्बद्ध शीलादिना कुत्सितैः पुरुषैः अत एव प्रहस्यमानैः सामर्थ्यात्तैरेव भगवदादिभिर्युक्तम् । तथापि च भाषाचारौ यत्र न विकृतावसत्याश्लीलरूपौ तथा विशेषेण भावैर्व्यभिचारिभिरुपपन्नानि चरितानि कथाखण्डानि यस्मिन् । नियतगति एकप्रकार यद्वस्तु तद्विषयः प्रहसनीयलक्षणोऽर्थो यत्र तच्छुद्धं प्रहसनम् । अत्र निर्वचनं—यतः परिहासप्रधानान्याभाषणान्यत्र बाहुल्येन भवन्ति, तेन यत्रैकस्यैव कस्यचिच्चरितं दुष्टत्वात प्राधान्येन प्रहस्यते तच्छुद्धमित्यर्थः । यत्र तु वेश्यादिभिर्योगोऽत्युल्बणं चाकल्पादि तदेकद्वारेणानेकवेश्यादिचरितेन हसनीयेन संकीर्णत्वात् संकीर्णम् ।

**आत्मानुभूतशंसीति** । एकेन पात्रेण हरणीयः सामाजिकहृदयं प्रापयितव्योऽर्थो यत्र स भाणः । एवमुखेनैव भण्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति स भाण । तत्र स प्रविष्टपात्रविशेष आत्मानुभूतं वा शंसति परगतं वा वर्णयति । तत्र च प्रयोगयुक्तिमाह—परवचनमिति । परसम्बन्धि वचनं स्वयमङ्गविकारैरभिनयेत् । आह—आकाशे यानि पुरुषकथितानि दृष्टानि यत्र ह्यन्ये तं न पश्यन्त्येकश्च पश्यत्याकर्णयति च तत्र तद्वचनं स एवानुवदन् सामाजिकान् बोधयति । यथा **रामाभ्युदये**—

1. I अधिकृत°. 2. The Nāṭyaśāstra reads 'चरितपदम्. 3. I अनियत°.
4. I परसशय°; L परशशय°. 5. A, B, C, D and Abhi. Bhā. (Vol. II, p. 448) पदानि. 6. E drops यत्र.

धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥
[नाट्यशास्त्र १८·१०८-११०]

(57) सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्तथा त्रयोदशभिः ।
वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा ॥
[नाट्यशास्त्र १८·११२]

तापस.—(आकाशे।) 'भोः ! बाद्धले (¹बाडव, अले) क्कवकाशे रामभद्र-स्तिष्ठति । किं ब्रवीषि । तस्या एव पथिकजनमनोहारिण्याः पुष्करिण्याः² परिसरे सीतया लक्ष्मणेन च सह न्यग्रोधस्च्छायायां सुखोपविष्टस्तिष्ठति' । ५८२ । इति । [रामाभ्युदये]

न केवलं परवचनमभिनयेत् । किं तु प्रतिवचनैः स्वोक्तैः सह एवोत्तरोत्तर-प्रार्थितैर्योजनाभिरुपलक्षितैः । नन्वु योऽसावेकोऽत्र प्रविशति स क इत्याह—धूर्तेति । नानाप्रकारावस्थाविशेषा लोकोपयोगि³व्यवहारात्मका आत्मा वाच्यं यस्य । अत एव बहुचेष्टः सततं कार्य इति । सकलसामान्यपृथग्जनोपयोग्यत्र लोकव्यवहारो वेश्याविटादिवृत्तान्तात्मा निरूप्यत इति । बाहुल्येन पृथग्जनव्युत्पत्त्युपयोगि-रूपकमिदम् । राजपुत्रादीनामपि शंभलीवृत्तान्तो ज्ञेय एवावञ्चनार्थमिति स प्रयोज्य⁴ इत्यर्थः ।

**सर्वरसेति** । सर्वे रसैः शृङ्गारादिभिर्लक्षणैश्च विभूषणादिभिः षट्त्रिंशता तत्साहचर्याद् गुणालङ्कारादिभिरपि सर्वैराढ्या । तदुपरि चाङ्गैस्त्रयोदशभिर्युक्ता 'तथा' शब्दादुक्तप्रकारव्यतिरिक्तवक्रोक्त्यन्तरसहस्रसंकुलापीत्यर्थः । एकाङ्केति । इतिवृत्त-संक्षेपमस्यां दर्शयति—एवहार्येति । आकाशपुरुषभाषितैरित्यर्थः । द्विहार्येति । उक्तिप्रयु(त्यु)क्तिवैचित्र्येणेत्यर्थः ।

पुमर्थोपयोगश्चामीषां प्रदर्श्यते । तथा हि—नाटके धर्मार्थकामानामन्यतमस्य गुणीभूतेतरार्थद्वयप्रवृत्तेराराधनं राज्ञां वृत्तं ना⁵ट्ये साक्षादिव पश्यन्त उपादेयतया प्रतिपद्यन्ते । तत्रापि धर्माराधने दान⁶तपोयागरूपमनुष्ठानं यशस्करं दृष्टफलमामुष्मिक-

1. The Abhinavabhārati (Vol. II, p, 550) reads: 'भो बाडव (? बाडव), अले किं भणीषि.'' 2. A, B drop पुष्करिण्याः. 3. A drops पयोगि. 4. The Abhi. Bhā. (Vol. II, p. 450) reads संप्रयोज्य. 5. A drops राज्ञां वृत्तं ना. 6. A drops दान.

(58) विष्कम्भकप्रवेशकरहितो यस्त्वेकभाषया भवति ।
अप्राकृतसंस्कृतया स सट्टको नाटिकाप्रतिमः ॥ इति ॥
[शृङ्गारप्रकाश, प्रकाश ११ (पृ. ४६६)]

फलं च व्युत्पाद्यते । अर्थाराधने तु शत्रून्छेदपुरःसरा यशोवतंसा लाभपालनसमेधनफलविनियोगपर्यन्ता कपटातिसन्धानबहुला सन्धिविग्रहात्मिका राजवृत्तिर्व्युत्पाद्यते। कामाराधने चानुपजातसंभोगासु च दिव्यासु कुलजासु कृतशौचासु च स्वाधीनपतिकादिष्वष्टासु परस्परावलोकनादिभिर्दिवा संभोगो रात्रौ वा सोपचार इत्याभ्यन्तरः कामोपभोगो राज्ञस्तासां च[1] राजनि व्युत्पाद्यते । तथा राज्ञामाभ्यन्तरोपभोगे महादेवीदेवीस्वामिनीस्थापिताभोगिनीशिल्पकारिकानाटकीयानर्तक्यनुचारिकापरिचारिकासंचारिकाप्रे[2]षणकारिकामहत्तराप्रतीहारीकुमारीस्थविरायुक्तिकासु यथोचिता राज्ञो वृत्तिस्तासां च यथास्वं राजनि वृत्तिः । तथा स्थापत्यकञ्चुकिवर्षधरोपस्थायिकनिर्मुण्डादीनामन्तर्भवनकक्षासञ्चारः । तथा युवराजसेनापतिमन्त्रिसचिवप्राड्विवाककुमाराधिकृतानां बाह्यसंचारिणां वृत्तम् । तथा विदूषकशकारचेटादिवृत्तं व्युत्पाद्यते । नायकप्रतिपक्षाणा च राज्ञामुक्तगुणविपर्ययादशुभोदयं वृत्त त्याज्यतया व्युत्पाद्यते ।

प्रकरणे तु सचिवसार्थवाहादीनां पूर्ववत् स्वोचिता त्रिवर्गप्राप्तिस्तदर्जने स्थैर्यधैर्यादि व्यापत्स्वमूढता, कुलस्त्रिया वृत्तं कुलस्त्रियाश्च भर्तरि वृत्तिर्वेश्यासु संभोगो वैशिकनायकलक्षणं विटस्य गुणा दूतकर्मणि योज्यविवेको दूतकर्मसमागमे देशकालौ नायिकाया रागापरागलिङ्गानि नायकयोरपरागकारणानि नायिकाहृदयग्रहणप्रयोगः । उत्तममध्यमाधमनायिकालक्षणयौवन(? यौवत)लाभाः । चतुरोत्तममध्यमा नायकाः सामदानभेददण्डोपेक्षाणामुपायाना प्रयोगविभाग इत्यादि प्रयोगतो व्युत्पाद्यते ।

नाटिकायां तु बिलासपराणां राज्ञां धर्मार्थाविरोधि रतिफलं वृत्तं नाटक इव व्युत्पाद्यते ।

समवकारे च देवासुरनिमित्तो युद्धादिसंभवो विद्रवस्तथा कपटः संक्षिप्तश्च शृङ्गारो हास्यादि सर्वमेव लौकिकीभिरुपपत्तिभिर्हीनं दिव्यप्रभावसाध्यं व्युत्पाद्यते। पूर्वापरानुसन्धानशून्यधियां प्रहसनकपटविद्रवादिरुचीनां पुँ[3]स्तावप्लुतलङ्घनछेद्यमायेन्द्रजालचित्रयुद्धादिबहुल्यारभटया परितोष उत्पाद्यते । तथा चाह—

(181) शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च ।
बाला मूर्वाः स्त्रियश्चैव हास्यशोकभयादिषु ॥

1. A, B drop च. 2. A, B drop प्रेषणकारिका. 3. The Nāṭyadarpaṇa (p. 111) reads · मायेन्द्रजालप्लुतलङ्घनोच्छेद्य–पुस्तावपातादिबहुल्याऽऽरभट्या.

आदिशब्दात् कोहलादिलक्षितास्तोटकादयो ग्राह्याः ।

गेयं विभजते—

**१९९) गेयं डोम्बिकाभाणप्रस्थानशिङ्गकभाणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठीश्रीगदितरागकाव्यादि ॥ ४ ॥**

पदार्थाभिनयस्वभावानि डोम्बिकादीनि गेयानि रूपकाणि चिरंतनैरुक्तानि । तद् यथा—

(59) छन्नानुरागगर्भाभिरुक्तिभिर्यत्र भूपतेः ।
आवर्ज्यते मनः सा तु मसृणा डोम्बिका मता ॥

तुष्यन्तीति गम्यते । इष्टदेवताकर्मप्रभावानुकीर्तनाच्च तद्भक्तानां प्रीतिः । यात्राजागरादिषु प्रेक्षाप्रवर्तनं च । ईहामृगडिमयोरप्येवमेव ।

व्यायोगे तु मन्त्रिसेनापतिप्रभृतीनां वृत्तं युद्धनियुद्धाधर्षणसंघर्षबहुलं व्युत्पाद्यते । उत्सृष्टिकाङ्के चोत्तमानां मध्यमानां च वैरस्यार्दितानां स्त्रीपरिदेवितबहुलं वृत्तं प्रेक्षकाणां चित्तस्थैर्यं विधातुं व्युत्पाद्यते । एवंविधव्यसनपतितानां चित्तस्थैर्यात् पुनरुन्नतिर्दृश्यत इति तत् प्रयोगदर्शनात् प्रतिपद्यमाना व्यसनेऽपि न विषीदन्ति ।

प्रहसने तु स्त्रीबालमूर्खाणां हास्यप्रयोगदर्शनेन नाट्ये प्ररोचना क्रियते । ततः क्रमेण नाट्ये प्रवृत्ताः शेषरूपकैर्धर्मार्थकामेषु व्युत्पाद्यन्ते । प्रसङ्गतश्च भगवत्तापसविप्रादीनां वृत्तच्युतानां कापुरुषाणां वृत्तं शुद्धं तथा वेश्याचेटनपुंसकविटधूर्तबन्धकीप्रभृतीनां प्रवर्तकाख्यस्य च कामिनो वृत्तं संकीर्णं लोकवार्तादम्भधूर्तविवादबहुलं त्याज्यतया व्युत्पाद्यते ।

भाणे च धूर्तविटवेश्याशंभलीनां परस्य वञ्चनपरं प्रेक्षकाणामवञ्चनीयत्वमवबोधादापादयितुं वर्ण्यते ।

वीथ्यां तु बहुविधा वक्रोक्तिविशेषा व्युत्पाद्यन्ते ।

सट्टके च नाटिकायामिव रतिफलं वृत्तं व्युत्पाद्यते । एवं नाटकादीनां स्वरूपं तत्फलं च दर्शितम् । तच्छरीरभूतसन्धिसन्ध्यङ्गादिलक्षणविस्तरस्तु भरतादेवावसेयः ।

**मसृणेति ।** त्रिविधो हि गेयकाव्यस्य प्रयोगः मसृण उद्धतो मिश्रश्च ।

1. I, S कोहलादि.

(60) नृसिंहसूकरादीनां वर्णनं जल्पयेद् यतः ।
नर्तकी तेन **भाणः** स्यादुद्धताङ्गप्रवर्तितः ॥

(61) गजादीनां गतिं तुल्यां कृत्वा प्रवसनं तथा ।
अल्पाविद्धं मसृणं तत् **प्रस्थानं** प्रचक्षते ॥

(62) सख्याः समक्षं पत्युर्यदुद्धतं वृत्तमुच्यते ।
मसृणं च क्वचिद् धूर्तचरितं **शिङ्गकस्तु** सः ॥

(63) बालक्रीडानियुद्धादि तथा सूकरसिंहजा ।
धवलादिकृता क्रीडा यत्र सा **भाणिका** मता ॥

(64) हास्यप्रायं **प्रेरणं** तु स्यात् प्रहेलिकयान्वितम् ।

(65) ऋतुवर्णनसंयुक्तं **रामाक्रीडं** तु भाष्यते ॥

(66) मण्डलेन तु यन्नृत्तं **हल्लीसकमिति** स्मृतम् ।
एकस्तत्र तु नेता स्याद् गोपस्त्रीणां यथा हरिः ॥

(67) अनेकनर्तकीयोज्यं चित्रताललयान्वितम् ।
आचतुःषष्टियुगलाद् **रासकं** मसृणोद्धतम् ॥

तथा हि—**डोम्बिकासु** नरपतिचाटुकप्राधान्येन प्रवृत्तासु सुकुमारमेव शुद्ध रूपम् । **भाणकेषु** नृसिंहादिचरितवर्णने उद्धतमेव । यत् पुनर्मसृणेऽप्युद्धतं प्रविशति तदु चितमेव । तत्राप्यल्पत्वबहुत्वकृतो भेदः । पूर्वः **प्रस्थान**प्रबन्धः । उत्तरः **शिङ्गटक**भेदः । उद्धते तु मसृणानुप्रवेशाद् **भाणिका**भेदः । अन्यदपि **प्रेरणरामाक्रीडरासकहल्लीसका**दिमल्पत्वबहुत्ववैचित्र्यकृतमिहैव प्रविष्टं वेदितव्यम् ।

ननु डोम्बिकाशिङ्गटकादौ अन्योन्यानुचितत्वं वाक्यानां ततश्चानन्वये कथं रञ्जकत्वमिति चेत्, न, देवतास्तुतेः स्त्रीपुंभावसमाश्रयस्य च शृङ्गारस्य सर्वत्रानुगमात् । तथा चाह—(182) 'देवस्तुत्याश्रयकृतं स्त्रीपुंभावसमाश्रयम् ।' इति । तत एव **चूडामणिडोम्बिकायां** प्रतिज्ञातम्—

1 I बालक्रीडा . 2. The Abhinavabhāratī (Vol. I, p. 181) reads ध्वजादिना कृता. 3. I द्धर्ते i e. both mātrā and anusvāra These seven verses (beginning with नृसिंह etc. and ending with मसृणोद्धतम्) are found in the Abhinavabhāratī (Vol. I, p. 181) and are introduced with the remark तदुक्तं चिरन्तनैः— 4. A, B डोम्बिकासु. 5. A, B कुमार°. 6. The Abhinavabhāratī (Vol. I, p. 181) reads . °चरितवर्णनमुद्धतमेव. 7. D drops from यो to डोम्बिकादौ, p. 447, l. 8.

हे द्वेवि डोम्बी णव्वमिसहिइ होमि हउं ।
चोरियमिहुणहं वम्महसारु कहेमि तउ ॥ ५८३ ॥  [  ]

चतुर्वर्गोपदेशस्य **राघवविजया**दिरागकाव्येषु दृष्टत्वात् । डोम्बिकादौ तु कामस्यैव प्रच्छन्नानुरागपरमरहस्योपदेशात् । 'यद्वामाभिनिवेशित्वम्' (पृ. १०८) इत्यनेन मन्मथसारत्वेनाभिधानात् । सिंहशूकरधवलादिवर्णनेनापि भाणकप्रेरणभाणिकादावप्रस्तुतप्रशंसार्थान्तरन्यासनिदर्शनादिना पुरुषार्थस्यैवोपदेशदर्शनात् ।

अथ पाठ्यस्य गेयस्य च रूपकस्य को विशेषः । अयमाख्यायते—पाठ्ये हि—अङ्गं गीतं चेत्युभयमप्रतिष्ठितम् । तथा हि करकरणचारीमण्डलादि यत् तत्राङ्गोपयोगि तत् स्वरूपेण लयादिव्यवस्थया चानियतमेव: यथारसं प्रयुज्यमानत्वेन विपर्यासात् । गेये तु गीतमङ्गं च द्वयमपि स्वप्रतिष्ठम् । तथा हि—यस्य यादृशं लययतिस्वरूपादिकं निरूपितं तन्न विपर्येति मन्त्रादिवत् । यद्यपि क्वचिद् वर्णाङ्गप्राधान्यं यथा प्रस्थानादौ, क्वचिद् वाद्यप्राधान्यं यथा भाणकादिषु भ्रमतालपरिक्रमणादौ, क्वचिद् गीयमानरूपकाभिधेयप्राधान्यं यथा शिङ्गटकादौ, क्वचिन्नृत्तप्राधान्य यथा डोम्बिलिकादिप्रयोगानन्तरं हुडुक्काराद्यवसरे । अत एव तत्र लोकभाषया **वल्लिमार्ग** इति प्रसिद्धिः । तथापि गीताश्रयत्वेन वाद्यादेः प्रयोग इति गेयमिति निर्दिष्टम् । रागकाव्येषु च गीतेनैव निर्वाहः । तथा हि—**राघवविजयस्य** विचित्रवर्णनीयत्वेऽपि ढक्करागेणैव निर्वाहः, मारीचवधस्य तु ककुभग्रामरागेणैवेति । किं च पाठ्ये साक्षात्कारकल्पानुव्यवसायसंप्रत्यु(?संप्रत्ययो)प्रयोगिनः पात्रं प्रति भाषानियमस्य नियतस्य छन्दोलङ्कारादेश्चाभिधानं दृश्यते । गीयमानं च नाभिनीयते असंगत्यापत्तेरपि तु यादृशा लयतालादिना यादृगर्थसूचनयोग्योऽभिनयः सात्त्विकादि· प्रधानरसानुसारितया प्रयोगयोग्यस्तदुचितार्थपरिपूरणं ध्रुवागीतेन क्रियते । गेये च सूदादेरिव वस्तुभूतरूपरसादिमध्यपातिविषयविशेषयोजनया कृता प्रीतिः साध्या । डोम्बिकादेर्न नटस्येवालौकिकरूपप्रादुर्भावनया ।

तथा हि—डोम्बिकादौ वर्णच्छटा वर्णादिप्रयोगे तावदभिनयकथैव नास्ति, किं तत्र विचार्यते, केवलनृत्तस्वभाव हि तत् । तदनन्तरं तु धारापरिक्रमपूर्वकलयप्रयोगावसरे—

पाआलअले सेसाहिणि हु जय जय लच्छिवत्थलमालिआ ॥ ५८४ ॥

इत्यादि यद् गीयते तत् कस्योक्तिरूपम् । यदि तावन्नर्तितुमागताया लौकिक्या

1 C वे  2. A, B, C क्रम.

डोम्बिकाप्रभृतेर्नर्तक्यास्तदा सैवेदानीमेवंभूतं वस्तुरूपं लौकिकं वचनमभिधत्ते । गायनादिसंक्रमितस्ववाक्यतयेति कः साक्षात्कारकल्पार्थः । साक्षात्कारकल्पत्वाध्यवसायगो[1]चरीकार्यत्वं च पाठ्यस्य प्रधानोंऽशः । तेन यथा लोके कश्चित् कंचिदन्योपदेशगानादिक्रमेण वस्तूद्बोधनकरणद्वारेण वा छन्दोनुप्रवेशितया वा कस्यचिन्मनस्यावर्जनातिशयं विधत्ते नृत्यन्नपि गायन्नपि, तद्वदेव डोम्बिकाकाव्यादौ द्रष्टव्यम् ।

'हेट्ठे वि डोम्बी[2]'

इत्यादावपि वचसि सैव डोम्बिका नरपतिपरितोषकार्थाभिधायिवचननिष्ठेन गीतेन वाद्येन नृत्येन च राजानमनुरञ्जयितुं गृहीतोद्यमा वर्कीत्वेन पूर्वस्थिता मध्ये काचिदीदृशी चौर्यकामुककेलिलालसमानसा, काचित् पुनरेवंविधा, कश्चिदेवंभूतश्चौर्यकामुकः, कोऽप्येवंभूतस्तत्र काचिदेवं प्रौढवृतीत्येवमादि राजपुत्रहृदयानुप्रवेशयोग्य तत्प्रसादनेन धनाद्यर्जनोपायमभिदधती तमेव राजपुत्रं परत्वेन त[3]थैव वा समुद्दिश्य अन्यदपि चेष्टितमभिधायान्ते डोम्बिकाकृत्यमेवोपसंहरति । **गुणमालायां—**

जाम्मि तारा अनुडिअ पुणु णव्वीसमि' ॥ ५८५ ॥ [ ]

इत्यादौ तत्र तु सा नृत्यन्ती डोम्बिका बहुतरोपरञ्जकगीतादिपटुपेटकपरिवृता त्वां प्रत्येवमहमुपश्लोकितवतीति तन्मध्यवर्तिगायनमुखसंक्रमितनिजवचना लौकिकेनैव रूपेण तद्गीयमानरूपकगतलयतालसाम्येन तान्नृत्यति । तद्गीयमानपदार्थस्य च सातिशयमावर्जनीये राजादौ हृदयानुप्रवेशिता दर्शयितुं लौकिकव्यवहारगतहस्तभ्रूकर्मरोमाञ्चाक्षिविकारतुल्ययोगक्षेमतयैवाङ्गविकारादिसंभवमप्याक्षिपति। एवं गीतेन रञ्जनं प्राधान्येन विधाय तदुपयोगिनं चाङ्गव्यापारं प्रदर्श्य नृत्तेन पुनश्चित्तग्रहणं कुर्वती नृत्तं प्रधानभावं गीतं च तदुपसर्जनभावं नयन्ती तत एव तदभिनयमनाद्रियमाणा तद्गीयमानाङ्गभावाक्षिप्ततत्समुचितभावमेवाङ्गविक्षेपं करोति लय[4]परिष्वक्वणादौ । तत्रैयत्यंशे लौकिकमात्रस्वभाव एव रामनटादिव्यवहारवत् काव्यप्रयोज्यप्रयोजकभावाशङ्का । तदनन्तरं च यथैव सा गीतनृत्तादि प्रायुङ्क्त तथैव तत्सदृशं नर्तकी प्रयुङ्क्ते । न तु डोम्बिकां साक्षात्कारकल्पेन दर्शयति तदीयाहार्यादिना स्वात्मरूपप्रच्छादनाद्यभावात् । तत एव न डोम्बिकां साक्षात्कारकल्पेन सा दर्शयति, अपि तु तथैव नृत्तं साभिनयं केवलं

1. A, B गोचरीकार्य. 2. A, B डोम्बि. 3. A, B तथैवा समु°. 4. C °परिष्कक्वणादौ. E °परिष्वकुणादौ.

(68) गोष्ठे यत्र विहरतश्चेष्टितमिह कैटभद्विषः किञ्चित् ।
रिष्टासुरप्रमथनप्रभृति तदिच्छन्ति **गोष्ठीति** ॥

(69) यस्मिन् कुलाङ्गना पत्युः सख्यग्रे वर्णयेद् गुणान् ।
उपालम्भं च कुरुते गेये **श्रीगदितं** तु तत् ॥

(70) लयान्तरप्रयोगेण रागैश्चापि विचित्रितम् ।
नानारसं सुनिर्वाह्यकथं **काव्यमिति** स्मृतम् ॥ इति ॥ [ ]

आदिग्रहणात् शम्पाच्छलितद्विपद्यादिपरिग्रहः । प्रपञ्चस्तु **ब्रह्मभरत-कोहलादिशास्त्रेभ्योऽवगन्तव्यः** ।

प्रेक्ष्यमुक्त्वा श्रव्यमाह—

**२००) श्रव्यं महाकाव्यमाख्यायिका कथा चम्पूरनिबद्धं च ॥५॥**

एतान् क्रमेण लक्षयति—

**२०१) पद्यं प्रायः संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्धभिन्नान्त्य-वृत्तसर्गाश्वाससंध्यवस्कन्धकबन्धं सत्सन्धि शब्दार्थ-वैचित्र्योपेतं महाकाव्यम् ॥ ६ ॥**

छन्दोविशेषरचितं प्रायः संस्कृतादिभाषानिबद्धैर्भिन्नान्त्यवृत्तैर्यथा-संख्यं सर्गादिभिर्निर्मितं सुश्लिष्टमुखप्रतिमुखगर्भविमर्शनिर्वहणसंधिसुन्दरं शब्दार्थवैचित्र्योपेतं महाकाव्यम् ।

मुखादयः संधयो **भरतोक्ता** इमे-

---

च प्रदर्शयतीति नालौकिकरूपान्तरप्रादुर्भावनेति । व्युत्पत्त्यभिसन्धानं च गेये नास्ति पाठ्ये तु तदेव प्रधानं **भरतमुनि**प्रभृतीनां तथैव मूलतः प्रवृत्तेरित्यलं बहुना अप्रस्तुतप्रपञ्चेनेति ।

**भिन्नान्त्यवृत्तैरिति** । उपक्रान्तवृत्तव्युदासेन सर्गादीनां वृत्तान्तरैरुपसंहारः कर्तव्य इत्यर्थः । यथा **कुमारसंभवे**—

---

1. The SP XI (p. 468) reads यत्तु. 2. I यत्र. 3. P, L रासै°.
4. I विवेचित. 5. The Kāvya defined here, it would seem, stands for the Rāgakāvya mentioned above in the Sūtra No. 4. 6. Bhāmaha, Daṇḍī, the SP (XI, p. 463) and the ND (p. 191) read शम्या. 7. I °कोलाहलादि. 8. P, L निर्वहण°.

(67) यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।
काव्ये शरीरानुगता तन्मुखं परिचक्षते[1] ॥

[ नाट्यशास्त्र १९.३९ ]

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं रतिवलयपदाङ्के चापमासज्य[2] कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥५८६॥

[ कुमार० २.६४ ]

यथा वा हरिप्रबोधे आर्यागीतिच्छन्दोबद्धाश्वासकान्ते पुष्पिताग्रा—
भगवति[3] शयिते विभावरीणां द्युतिमपहृत्य[4] यशोविभावरीणाम् ।
गतमशशिनया विभावरीणां सघनमहः समता विभावरीणाम् ॥ ५८७ ॥

[ हरिप्रबोधे ]

सन्धिबन्धेषु च नाराचनोटकादीनि विचित्राणि[5] छन्दांसि दृश्यन्ते ।

**यत्र बीजेति** । बीजस्य यत्र समुत्पत्तिः कविप्रयत्नतो निबन्धः । नानारूपोऽर्थः प्रयोजनं येषां ते नानार्थाः संभवन्तीति संभवः । नानार्थरसा संभवो यस्याः सा तथा । काव्ये नाटकादौ । तत्रैव सन्धीनां व्यक्ततयावभासात् । अत एव तत्रैवोदाहरिष्यते-शरीरानुगता इति । वृत्तानुगता-इति वृत्तव्यापिनी । तन्मुखम् । यथा **वेणीसंहारे** कुरुपाण्डवानामुभयेषां क्षेमप्रतिपादकं स्थापकस्य वचनं सहदेवः क्रुद्धस्य भीमसेनस्यानुकूल्येन शमनाय कुरुनिधनपरं व्याचचक्षे—

निर्वाणवैरदहनाः प्रशमादरीणाम् (पृ. २३१) ॥५८८॥ [ वेणी० प्रस्तावना श्लो ७ ] इति । अत्र प्रशमोऽत्र्मानमुदर्यानरोधात् । यथा शान्तो वायुः शान्तोऽग्निरवसित इत्यर्थः । नदेवमरीणामवसानेन दाह्याभावान्निर्वाणवैराग्नयः पाण्डुतनयाः नन्दन्तु सह माधवेन । कुरुराजसुतास्तु सभृत्या रुधिरप्रसाधितभुवः क्षतशरीराः स्वर्गस्था भवन्त्विति शत्रुक्षयपूर्वकस्य पाण्डवानां समृद्धिरूपस्य फलस्य बीजं कविप्रयत्नादुत्पन्नम् । नानार्थरससंभवा चास्योत्पत्तिः । नाटकानेकत्वेन[6] पात्रानेकत्वविवक्षया वा नानार्थता रसानाम् । तथा हि-अत्र

एष कुरुसन्धानमसृष्यमाणः पृथुललाटतटघटितभीषणभ्रुकुटिरापिबन्निव नः सर्वान् दृष्टिपातेन सहदेवानुयातः क्रुद्धो भीम इत एवाभिवर्तते ॥ ५८९ ॥

[ वेणी० प्रस्तावना ]

इति पारिपार्श्वकवचनात् सूचितक्रोधस्थायिभावानुभावो लाक्षागृहानलविषान्न-सभाप्रवेशैरित्यादिस्ववचनप्रकाशितस्वविभावो भीमसेनस्य रौद्रो रसः कुरुक्षय प्रयोजनो बीजेन प्रकाशितत्वाद् बीजोत्पत्तेरेव संभवन्निबद्धः । कुरूणां च कुलक्षय-

1. The NS reads . परिकीर्तितम्. 2 E °सज्य. 3. E विभवति. 4. E drops from द्युति to विभावरीणाम. 5. E चित्राणि, 6. A, B °कत्वेन पात्रानेकत्वविवक्षाया.

बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् ।
मुखन्यस्तस्य सर्वत्र तद्धि प्रतिमुखं स्मृतम् ॥

[नाट्यशास्त्र १९.४०]

निमित्तक करुणः पाण्डवसिद्धिप्रयोजनो बीजोत्पत्तेरेव संभवन्निबद्धः । यथा दुर्योधनः शोचन्नाह—

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतो हन्त दुःशासनश्च ।
तस्मिन् बाले प्रसभमरिणा प्रापिते तामवस्था
पार्श्वे पित्रोरपगतघृण. किं नु वक्ष्यामि गत्वा ॥ ५९० ॥

[वेणी० ४.१५]

तदेवं भीमसेनस्येव क्रोधात्मकं चेष्टितं शत्रुक्षयफलमित्युपादेयम् । दुर्योधनस्येव च दौरात्म्यभूयिष्ठं चेष्टितं शोकफलत्वात्त्याज्यमिति विधिनिषेधविषयव्युत्पत्तेर्नानार्थता पात्रानेकत्वाश्रया रसानाम् ।

नाटकानेकत्वाद् यथा —सागरिकाप्राप्त्यर्थो वत्सराजस्य शृङ्गारः बीजसमुत्पत्तिरिति । बीज समुत्पन्नमुक्तैर्विशेषणैर्विशिष्टमिष्यते । तथा हि बीजमेव काव्यशरीरव्यापि यतो मुखसन्धौ तस्योत्पत्तिः । प्रतिमुखे दृष्टनष्टमिव तस्योद्घाटनं गर्भे चोद्भेदस्तस्य अवमर्शे च गर्भनिर्भेदः । निर्वहणे च समानयनमिति काव्यशरीरव्यापिता ।

**बीजस्योद्घाटनमिति** । अयमर्थः-दृष्टनष्टमिव कृत्वा तावन्मुखे 'द्वीपादन्यस्मात्-' (रत्नावली, प्रस्तावना, श्लो. ६) इत्यादिना न्यस्त भूमाविव बीजम्, अमात्येन सागरिकाचेष्टितं वसन्तोत्सवकामदेवपूजादिना तिरोहितत्वान्नष्टमिव, न हि तन्नष्टमेव । सागरिकाचेष्टितस्य हि बीजस्येव तदाच्छादकमप्युत्सवादिरूपं भूमिवत प्रत्युत कार्यजननशक्त्युद्बोधकं, तस्य दृष्टनष्टतुल्यं कृत्वा न्यस्तस्यात एव कुङ्कुमबीजस्य यदुद्घाटन तत्कल्पं यत्रोद्घाटनं सर्वत्रैव कथाभागसमूहे स प्रतिमुखम् । प्रतिराभिमुख्ये । मुखस्याभिमुख्येन यतोऽत्र वृत्तिः । पराङ्मुखता हि दृष्टनष्टकल्पता । तथा हि **रत्नावल्याम्**—

'परपेसणदूसिदं पि सरीरं एदस्स दंसणेण अज्ज मे बहुमदं संपण्णं ' ॥ ५९१ ॥

(रत्नावली १.२३-२४)

1. I °स्योत्पाटन. 2. A drops स्याभिमुख्येन. 3. The Abhi. Bhā. (Vol. III, p. 25) reads: परप्पेसत्तण°. 4. A, B बहुगुरं.

उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥ [नाट्यशास्त्र १९.४१]

इत्यादिसागरिकोक्तेरनन्तरं सुसङ्गतारचितराजतत्समागमपर्यन्तं काव्यं द्वितीयाङ्कगतं प्रतिमुखसन्धिरुद्घाटितत्वात्वाद् बीजार्थस्य ।

**उद्भेदस्तस्येति** । प्राप्तिरप्राप्तिरन्वेषणमित्येवंभूताभिरवस्थाभिः पुनः पुनर्भवन्तीभिर्युक्तो गर्भसन्धिः । प्राप्तिसंभवाख्ययावस्थया युक्तत्वेन फलस्य गर्भीभावात् । तथा हि **रत्नावल्यां** द्वितीयाङ्के सुसङ्गता—

'सहि अदक्खिणा दाणिं तुमं[1] जा एवं भट्टिणा हत्थेण गहीदा अज्ज वि कोवं न मुंचसि[2]' ॥ ५९२ ॥ [रत्नावली २ १७–१८]

इति प्राप्तिरूप उद्भेदः । ततोऽत्र
सागरिका—(सभ्रूभङ्गम् ।) सुसंगदे इआणिं पि न विरमसि ॥ ५९३ ॥
[रत्नावली २.१७–१८)]

इति कुमारीभावसमुचितकृतककोपेनापि परिपूर्ण[3]रतिप्रकाशनादन्वेषणम् । ततो
'भो एसा खु अवरा देवी वासवदत्ता' ॥ ५९४ ॥ [रत्नावली २.१७–१८]

इति विदूषकोक्ते राजनि सचकितं सागरिकां मुञ्चति सागरिकासुसङ्गतयोश्च निष्क्रमाद् वासवदत्ताप्रवेशाच्चारभ्य तृतीयाङ्के प्रवेशके—

'साहु रे अमच्च वसंतय[4] साहु । अदिसइदो तह अमच्चजोअधराअणो इमाए संधि[5]विग्गहचिंताए' ॥ ५९५ ॥ [रत्नावली ३, प्रवेशक]

इति काञ्चनमालयोक्तं यावदप्राप्तिस्ततोऽस्याः

'अज्ज क्खु मए राअउलाओ पडिणिअत्तंतीए[6] चित्तसालिआदुआरे वसन्तअस्स सुसंगदाए सह आलावो सुदो' [रत्नावली ३ (पृ. १९०)] इति आरभ्य

ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमिति मे
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरम् ॥ ५९६ ॥
[रत्नावली ३.४]

1. C, D, E तुवं. 2 A, B मुंचदि. 3. A drops पूर्णर. 4. A, B वसन्तया.
5. B drops from संधि to मए (1 20). 6. A, B पडिअंतीए.

तद्वार्तान्वेषणाय गतः चिरयति वसन्तकः ।  [ रत्नावली ३.४–५ ]

इति राजोक्तियावदन्वेषणम् । ततश्च—

'ही ही ! भो कोसंबीरज्जलंभेणावि न तादिसो पिअवअस्सस्स परिदोसो [1]आसि, आदिसो मम सआसादो पियवयणं सुणिअ भविस्सदि त्ति' ॥ ५९७ ॥

[ रत्नावली ३.४–५ ]

इत्यादि विदूषकोक्तेन प्राप्तितोऽस्या समागमसङ्केतस्थानप्राप्तिं यावदन्वेषणम् । ततः—

प्रिये पश्य पश्य—

उदयोर्वीभृत एष त्वद्वदनापहृतकान्तिसर्वस्वः ।
पूत्कर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥ ५९८ ॥ [ रत्नावली ३.१२ ]

इति राजोक्तिपर्यन्तं परिपूर्णा प्राप्तिः । ततः—

दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥ ५९९ ॥

[ रत्नावली ३.१३, चरण ४ ]

इति वासवदत्तामुखोद्घाटनादनन्तरम्—

कथं देवी वासवदत्ता । वयस्य किमेतत् । विदूषकः—(सभयं) अम्हाणं जीविदसंसओ ॥ ६०० ॥ [ रत्नावली ३.१३–१४ ]

इत्यादिना अप्राप्तिः । अस्यां च

'दिट्ठिआ इमिणा चिरइदभट्टिणीवेसेण [2]अणभिण्णादा केणवि इदो चदुस्सालादो (?चित्तसालादो)णिक्कंतम्हि ॥ ६०१ ॥ [ रत्नावली ३.१५–१६ ]

इति सागरिकोक्त्या अन्वेषणम् । ततश्च [3]सागरिकया लतापाशे कृते

कहं एसा देवी वासवदत्ता [4]उब्बंधिय अत्ताणअं वावादेदि ॥ ६०२ ॥

[ रत्नावली ३.१५–१६ ]

इति विदूषकोक्ते राजनि च समुपेत्य कण्ठपाशमपनयति—

सागरिका—अज्जउत्त, [5]मुंच मुंच । पराहीणो क्खु अअं जणो ण पुण मरिदुं

1. A drops आसि आदिसो. 2. The Ratnāvali reads: केणवि इमादो चित्तसालादो णिक्कमती ण लक्खिदम्हि. 3. A drops सागरिकया लतापाशे कृते कहं ए°. 4. A, B, C, D °उब्बंधिय णअं. E उव्वं अत्ताणयं. 5. A, B drop one मुंच.

गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा ।
क्रोधव्यसनजो वाऽपि स विमर्शः प्रकीर्तितः ॥[1]
[ नाट्यशास्त्र १९.४२ ]

इदिसं अवसरं पावेदि । (पुनः कण्ठे पाशं दातुमिच्छति ।) राजा —(निर्वर्ण्य सहर्षम् ।) कथं प्रिया मे सागरिका ।

अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेनम् ।
चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥ ६०३ ॥ [ रत्नावली ३·१७ ]

इत्यादिना स्फुटमेव प्राप्तिरित्येवं गर्भः । अप्राप्त्यंशश्चात्रावश्यंभावी । अन्यथा हि संभावनात्मा प्राप्तिसंभव कथं, निश्चय एव हि स्यात् । विमर्शे त्वप्राप्तेरेव प्रधानता, प्राप्त्यंशस्य च न्यूनतेति विशेषः ।[2]

**गर्भनिर्भिन्नेति ।** बीजशब्देन बीजफलम् । अर्थशब्देन निवृत्तिरुच्यते । तेन गर्भान्निर्भिन्नं प्रदर्शितमुखं बहिर्निःसरणोन्मुखं यद्बीजफलं तस्य योऽर्थो निवृत्तिः पुनरन्नैव च प्रवेश इव यत्र स विमर्शसन्धिः ।

**स इति ।** तच्छब्देन यत्रेत्याक्षिप्तम् । सा च निवृत्तिः क्रोधेन वा निमित्तेन लोभेन वा व्यसनेन वा शापादिना वा । अपिशब्दाद् विघ्ननिमित्तान्तराणां प्रतिपदमशक्यनिर्देशानां संग्रहः । तत्र क्रोधाद् यथा[3] **रत्नावल्यां** तृतीयेऽङ्के क्रोधावेशेन वासवदत्तया कारानिक्षिप्तायां सागरिकायाम् । तथा हि तत्र चतुर्थेऽङ्के प्रवेशकः सागरिकाप्राप्तिसन्देहेन करुणरसात्मकः । अत्रैव सागरिकाप्राप्तिसन्देहं मन्यमान आह राजा—

अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहे प्रथमरागघने विलीय ।
मद्यः पतन् मदनमार्गणरन्ध्रमार्गै-
र्मन्ये मम प्रियतमा हृदयं प्रविष्टा ॥ ६०४ ॥ [ रत्नावली ४·२ ]

'योऽपि मे विश्वासस्थानं वसन्तकः सोऽपि देव्या संयतः । तत् कस्याग्रतो बाष्पमोक्षं करिष्ये' ॥ ६०५ ॥ [ रत्नावली ४.२–३ ] पुनरत्रैव—

'अप्पअं दे ण पारेमि आचक्खिदुं' इति विदूषकोक्ते 'राजा —(समाश्वस्य)

प्राणाः परित्यजत मा ननु सत्यथोऽय
हे दक्षिणा भवत मद्वचनं कुरुध्वम् ।
शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा
याता सुदूरमधुना गजगामिनी सा ॥ ६०६ ॥ [ रत्नावली ४·३ ]

1. The NS reads . विमर्श इति स्मृतः. 2 E भाव्यं. 3. E तथा: 4 A शेषः. 5. E गर्भान्नि°.

समानयनमर्थानां मुखाद्यानां सबीजिनाम् ।
नानाभावोत्तराणां यद् भवेन्निर्वहणं तु तत् ॥ इति ॥

[ नाट्यशास्त्र १९.४३ ]

शब्दवैचित्र्यं यथा — असंक्षिप्तग्रन्थत्वम्, अविषमबन्धत्वम्, अनति-

---

इति राज्ञः सागरिकाप्राप्तिर्नैराश्यरूपैव ।

'भो, मा अण्णहा संभावेहि । सा खु देवीए उज्जेणिं पेसिदा । अदो मए अप्पिअं ति भणिदं' ॥६०७॥ [ रत्नावली ४.३-४ ] इति विदूषकोक्त्या सन्देहमानीता । तथा हि तद्विसृष्टां रत्नमालां हृदये विन्यस्य पुनराह—

अहह !

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया ।
तुल्यावस्था सखी नेय तनुराश्वासयते मम ॥६०८॥ [ रत्नावली ४.४ ]

इतीन्द्रजालप्रयोगं यावद् विघ्ने वासवदत्ताक्रोधो निमित्तम् । एवं लोभादावुदाहार्यम् ।

**समानयनमर्थानामिति** । मुखाद्यानां चतुर्णां सन्धीनां येऽर्था प्रारम्भयत्नप्रत्याशा [[5]प्राप्त्याशा] नियताप्तिलक्षणास्तेषां सह बीजिभिर्बीजविकारैः कर्मणावस्थाचतुष्टयं भवद्भिरुत्पत्त्युद्घाटनोद्भेदगर्भनिर्भेदलक्षणैर्वर्तमानानां नानाविधं सुखदुःखात्मके रतिहासशोकक्रोधादिभिर्भावैरुत्तराणां चमत्कारास्पदत्वेन जातोत्कर्षाणां यत् समानयनं यस्मिन्नर्थराशौ समानीयन्ते फलनिष्पत्तौ योज्यन्ते तन्निर्वहणफलयोगावस्थया व्याप्तम् । तत्र यदा सुखप्राप्तेः फलत्वं तदा रतिहासोत्साहविस्मयस्थायिभावबाहुल्यं धृतिहर्षगर्वौत्सुक्यमदादिव्यभिचारिभावबाहुल्यं च प्रारम्भादीनाम् । दुःखहानेस्तु फलत्वे क्रोधशोकभयजुगुप्सास्थायिभावबाहुल्यम्, आलस्यौग्र्यव्यभिचारिभावबाहुल्यं च द्रष्टव्यम् । उदाहरणम्—**रत्नावल्या**मैन्द्रजालिकप्रवेशात् प्रभृत्यासमाप्तेरेषामवस्थासन्ध्यादीनां नायकप्रतिनायकतदमात्यतत्परिवारनायिकादिमुखेनापि नियोजनम् । न त्वेकमुखेनैवेति ।

**असंक्षिप्तग्रन्थत्वमिति** । अनेन ग्रन्थगौरवमाचक्षाणः कथारसविच्छेदशङ्किनां मनांस्यावर्जयति । **अविषमबन्धत्वमिति** । अनेन शब्दसन्दर्भवेदिनां मनो मुदमादधाति ।

---

1. I सजीविना 2. P निर्वहणं. L निर्वहण. 3. E °रूप्यैव. 4. A, B drop इति. 5. E रपि°. 6. A, B, C, D drop भाव. 7. C, E drop च 8. C, E drop from हाने to एषा. 9. A, D drop भाव. 10. E °सन्दर्भ°. 11. E मदो.

विस्तीर्णपरस्परसंबद्धसर्गादित्वम्, आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वम् वक्तव्यार्थप्रतिज्ञानतत्प्रयोजनोपन्यासकविप्रशंसादुर्जनसुजनस्वरूपवदादिवाक्यत्वम्

---

**अनतिविस्तीर्णपरस्परसम्बद्धसर्गादित्वमिति** । अनेन ग्रन्थविस्तरभीरूणा चित्तमाकर्षति । सर्गादीना परस्परमेकवाक्यतया महावाक्यात्मकस्य प्रबन्धस्योपकारितां च दर्शयति ।

**आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वमिति** । तत्र आशीर्यथा **हरविलासे—**

ओमित्येतत्पर ब्रह्म श्रुतीनां मुखमक्षरम् ।
प्रसीदतु सता स्वान्तेष्वेकं त्रिपुरघीमयम् ॥ ६०९ ॥ [हरविलास]

नमस्कारो यथा **रघुवंशे—**

'वागर्थाविव' (पृ. २०) ॥ ६१० ॥ [रघु० १·१]

इत्यादि । वस्तुनिर्देशो यथा **हयग्रीववधे**

आसीद्दैत्यो हयग्रीवः (पृ. ३१) ॥ ६११ ॥ इत्यादि ।

**वक्तव्यार्थे**त्यादि । वक्तव्यार्थप्रतिज्ञानं यथा **सेतुबन्धे—**

तं तिअसबन्दिमोक्खं समत्तलोअस्स हिअअसल्लुद्धरणं ।
सुणह अणुरायइण्धं सीयादुक्खक्खयं दसमुहस्स वहं ॥ ६१२ ॥
[सेतुबन्ध १·१२]

**प्रयोजनोपन्यासो** यथा तत्रैव—

परिवड्ढइ विन्नाणं संभाविज्जइ जसो विढप्पंति गुणा ।
सुव्वइ सुउरिसचरिअं किं तं जेण न हरन्ति कव्वालावा ॥ ६१३ ॥
[सेतुबन्ध १·१०]

**कविप्रशंसा** यथा **रावणविजये—**

सयलं चेत्र निबधं दोहि पएहि कलुसं पसण्णं च ठिअं ।
जाणंति कइंण कई सुद्धसहावेहिं लोअणेहि च हिअअं ॥ ६१४ ॥
[रावणविजये]

दुर्जनसुजनस्वरूपं यथा **हरविलासे—**

---

1. I वक्तव्यार्थंनत्प्रतिज्ञान°. 2 सुजनदुर्जन°. 3. A, B सुहं. 4. A, B, C, D °वट्टइ. 5 All Mss read सुव्वइ सुपुरिमा; the reading सुव्वइ सुउरिस is taken from NS ed. of सेतुबन्ध. 6. E सुपुरिससच्चरिअं. 7. A, B, C, D कित्त. 8 The Setubandha reads : कव्वालावा.

दुष्करचित्रादिसर्गत्वम्, स्वाभिप्रायस्वनामेष्टनाममङ्गलाङ्कितसमाप्तित्वमिति।

अर्थवैचित्र्यं यथा—चतुर्वर्गफलोपायत्वम्, चतुरोदात्तनायकत्वम्, रसभावनिरन्तरत्वम्, विधिनिषेधव्युत्पादकत्वम्, सुसूत्रसंविधानकत्वम्,

---

इतस्ततो भषन् भूरि न पतेत् पिशुनः शुनः।
अवदाततया किं च न भेदो हंसतः सतः॥ ६१५॥ [हरविलासे]

**दुष्करचित्रादिसर्गत्वमिति।** आदिग्रहणेन यमकश्लेषादयो गृह्यन्ते। ते च **किरातार्जुनीया**दौ दृश्यन्त एव।

**स्वाभिप्रा**येत्यादि। तेष्वभिप्रायाङ्कता यथा—धैर्यं **मायुराजस्य,** उत्साहः **सर्वसेनस्य,** अनुराग[1] **प्रवरसेनस्ये**ति। स्वनामाङ्कता यथा—**राजशेखरस्य हरविलासे।** इष्टनामाङ्कता यथा—लक्ष्म्यङ्कता **किराते भारवेः,** श्र्यङ्का **शिशुपालवधे माघस्य।** मङ्गलाङ्का यथा—अभ्युदयः **कृष्णचरिते**[2]**,** जय **उदाहरणे**[3]**,** आनन्दः **पञ्चशिखशूद्रककथायाम्**[4] इति।

**चतुर्वर्गफलोपायत्वमिति।** अनेन चत्वारो वर्गा धर्मार्थकाममोक्षाः त एव व्यस्ताः समस्ता वा फलं तस्योपायतया महाकाव्यं ज्ञापयन् मुक्तकादिभ्यो भेदमाचष्टे।

**चतुरोदात्तनायकत्व**मिति। अनेन कथाशरीरव्यापिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमभिदधान आश्रयविभूत्योरप्युत्कर्षमभिदधाति।

**रसभावनिरन्तरत्व**मिति। अनेन रसग्रहणेनापि तत्कारणभूताना भावानां परिग्रहे पृथग्भावग्रहणेन रसभावानां परस्परं कार्यकारणभावमभिदधद् रसेभ्यो भावा भावेभ्यो रसा रसेभ्यश्च रसा इति नैरन्तर्यस्य रसभावसाध्यत्वेन भोजनस्येवैकरसस्य प्रबन्धस्यापि वैरस्यमपाकरोति।

**विधिनिषेधव्युत्पादकत्व**मिति। अनेन गुणवतो नायकस्योत्कर्षप्रकाशनेन दोषवतश्चोच्छेदप्रदर्शनेन जिगीषुणा गुणवतैव भाव्यं न दोषवतेति व्युत्पादयति।

**सुसूत्रसंविधानकत्व**मिति। प्रोक्तलक्षणाः पदार्थास्तथा निबन्धनीया यथा प्रबन्धस्य शोभायै भवन्तीति कवीन् शिक्षयति।

---

1. A, B क्षपन्. 2. C, E °चरितेन. 3. C उदाहरणेन. 4. A, B, C, D °शूद्रकथायां. 5. C, E भाराय. 6. E drops या.

नगराश्रमशैलसैन्यावासार्णवादिवर्णनम्, ऋतुरात्रिदिवार्कास्तमयचन्द्रोदयादिवर्णनम्, नायकनायिकाकुमारवाहनादिवर्णनम्, मन्त्रदूतप्रयाणसंग्रामा-

---

**नगराश्रमे**त्यादिना देशप्रशंसामुपदिशति। नगरवर्णनं यथा **हरिविजय-रावणविजय-शिशुपालवध-कुमारसंभवादौ**। आश्रमवर्णनं यथा **रघुवंश-किरातार्जुनीयादौ**। शैलवर्णनं **किरातार्जुनीयादौ**। **सैन्या-वासवर्णनं माघे**। अर्णववर्णनं **सेतुबन्धादौ**।

**ऋत्वि**त्यादिना कालावस्थोपवर्णनं लक्षयति। तत्र ऋतुवर्णने शरद्वसन्तग्रीष्मवर्षादिवर्णनानि **सेतुबन्ध-हरिविजय-रघुवंश-हरिवंशादौ**। रात्रिवर्णन **किरातार्जुनीय-कुमारसंभव-शिशुपालवध-हयग्रीववधादौ**। दिवसवर्णनं प्रभातपूर्वाह्णमध्याह्नापराह्णवर्णनानि **शिशुपालवध-किरातार्जुनीयादौ**। अर्कास्तमयवर्णनं **कुमारसंभव-हरिविजय-रावणविजय-सेतुबन्धादौ**। चन्द्रोदयवर्णनं **कुमारसंभव-किरातार्जुनीय-शिशुपालवध-सेतुबन्धा**दाविति।

**नायके**त्यादिना पात्रविशेषाभिनन्दनं सूचयति। तत्र नायकवर्णन **हरिविजय-रावणविजय-जानकीहरण-रघुवंशादौ**। नायिकावर्णन **कुवलयाश्वचरित-कुमारसंभव-जानकीहरण-सुभद्राहरणादौ**। कुमारवर्णनं **रघुवंशादौ**। वाहनवर्णनेत्यादिना हस्त्यश्वगरुत्मत्पुष्पकादिवर्णनानि **हरिविजय-रावणविजया**दौ।

**मन्त्रे**त्यादिना अर्थप्रधानचेष्टानामुपदेशाच्चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशकृन्महाकाव्यं भवतीत्यभिधत्ते। तत्र **मन्त्रः पञ्चाङ्गः** प्रतिपादितः। स यथा **किरातार्जुनीय-शिशुपालवध-भट्टिकाव्य-हयग्रीववधादौ**। दूतस्त्रिधा —निसृष्टार्थः, परिमितार्थः, शासनहरश्च। निसृष्टार्थो यथा—**उद्योगपर्वणि** वासुदेवः, **हरिविजये** वा सात्यकिः[1]। परिमितार्थो यथा—**रामायणे**ऽङ्गदः। शासनहरो यथा—**कादम्बर्यां** केयूरक इति। प्रयाणं त्रिधा—स्वशक्त्युपचये परव्यसने, अभिमतार्थसिद्धये च। तत्र स्वशक्त्युपचये यथा—रघो **रघुवंशे**। परव्यसने यथा—जरासन्धव्यसनिनः शिशुपालस्योच्छेदाय वासुदेवस्य **शिशुपालवधे**। अभिमतार्थस्वसिद्धये यथा—विष्णोः पारिजातहरणाय **हरिविजये**, यथा वा—दिव्यास्त्रलाभायार्जुनस्य **किरातार्जुनीये** इति। **संग्राम**स्त्रिधा—समः, विषमः, समविषम इति। तत्र समः—द्वन्द्वयुद्धे चतुरङ्गयुद्धे च।

---

1. The SP XI (p. 475) reads : °वर्णनेन. 2. E has ह for क. 3. A. B, C सत्यकिः. The SP XI (p. 475) reads · सत्यकः. 4. The SP XI (p. 475) reads अभिमतार्थसिद्धये

भ्युदयादिवर्णनम्, वनविहारजलक्रीडामधुपानमानापगमरतोत्सवादिवर्णनमिति।

उभयवैचित्र्यं यथा — रसानुरूपसंदर्भत्वम्, अर्थानुरूपछन्दस्त्वम्,

---

द्वन्द्वयुद्धं यथा—रामरावणयोः। चतुरङ्गयुद्धं यथा कुरुपाण्डवानाम्। विषमो यथा—रामस्य खरदूषणत्रिशिरोभिः[1] सह।

चतुर्दशसहस्राणि चतुर्दश च राक्षसाः।
हतान्येकेन रामेण मानुषेण पदातिना ॥ ६१६ ॥ इति। [ ]

समविषमो यथा—महेश्वरार्जुनयोः **किरातार्जुनीये**, रघुमघोनोर्वा **रघुवंश** इति। अभ्युदयस्त्रिधा—अरिविजयः, स्त्रीलाभः, पुत्रोत्पत्तिः। तत्रारिविजयो द्विधा—शत्रूच्छेदेन, तदुपनत्या च। स पूर्वो **रावणवधादौ**, द्वितीयो **हरिविजयादौ**। स्त्रीलाभो यथा इन्दुमतीस्वयंवरे। पुत्रलाभो दिलीपस्य **रघुवंश** इति।

**वनविहारे**त्यादिना [र]सोद्दीपनविभावस्य संभोगशृङ्गारस्योपदेशात्। मन्त्रदूतप्रयाणसंग्रामाभ्युदयादिभिस्तानर्थानधिगम्य तैस्तैर्विलासविशेषैः कामसेवया तदुपयोगः कर्तव्य इति शिक्षयति। तत्र **वनविहारो** द्विधा—मृगयादिः, पुष्पावचायादिश्च। तत्राद्यो यथा—दशरथस्य **रघुवंशे**। द्वितीयो यथा—यदूनां **शिशुपालवधे**, अप्सरसां वा **किरातार्जुनीय** इति। जलक्रीडा द्विधा—एकस्य वा बह्वीभिः स्वयोषाभिर्बहूनां वा बह्वीभिर्यथास्वमङ्गनाभिः। तत्राद्या यथा—कार्तवीर्यस्य नर्मदायाम्, कुशस्य वा सरय्वाम्। द्वितीया यथा—अप्सरसां सिद्धसिन्धौ, यदूनां वा रैवतकह्रद इति। मधुपानं द्विधा—गोष्ठीगृहे, वासभवने च। तत्राद्यं **हरिविजये शिशुपालवधे** च। द्वितीयं **किरातार्जुनीये कुमारसंभवे** च। मानापगमो द्विधा—प्रायत्निकः, नैमित्तिकश्च। प्रायत्निको **हरिविजये** सत्यभामायाः। नैमित्तिको रामाह्लादनिशाचरीणां **सेतुबन्धे**। रतोत्सवोऽपि द्विधा—सामान्यतः, विशेषतश्च। सामान्यतः **किरातार्जुनीये शिशुपालवधे** च।[2] विशेषतः **कुमारसंभवे जानकीहरणे** च।

**रसानुरूपसन्दर्भत्वमिति**। अनेन रतिप्रकर्षे कोमलः, उत्साहप्रकर्षे प्रौढः, क्रोधप्रकर्षे कठोरः, शोकप्रकर्षे मृदुः, विस्मयप्रकर्षे तु स्फुटः शब्दसन्दर्भो विरचनीय इत्युपदिशन्—

---

1. The SP XI (p. 475) reads : °त्रिशिरोभिः। स तु. 2. A drops शिशुपालवधे च। विशेषतः.

समस्तलोकरञ्जकत्वम्, सदलङ्कारवाक्यत्वम्, देशकालपात्रचेष्टाकथान्तरानुषञ्जनम्, मार्गद्वयानुवर्तनं चेति ।

---

(183) नैकमोजः प्रसादो वा रसभावविदः कवेः । ( शिशुपाल० २.८३ ) इति ख्यापयति ।

**अर्थानुरूपच्छन्दस्त्वमिति** । अनेन शृङ्गारे द्रुतविलम्बितादयः, वीरे वसन्ततिलकादयः, करुणे वैतालीयादयः, रौद्रे स्रग्धरादयः, सर्वत्र शार्दूलविक्रीडितादयो निबन्धनीया इत्युपदिशति ।

**समस्तलोकरञ्जकत्वमिति** । अनेनालौकिकतां परिहरन् प्रीतिनिबन्धनस्य प्रबन्धस्य लोके प्रतिष्ठाँ प्रयासवैयर्थ्यमपाकरोति ।

**सदलङ्कारवाक्यत्वमिति** । अनेन यद्यप्युपात्तलक्षणानां गुणानामलङ्काराणां च स्वरूपसांकर्येणैव काव्यशोभाकरत्वं तथाप्यलङ्कारवत्त्वैवैनं भारं भूयसा उद्वोढुमलमित्येतदुपर्युपदेशेनोपपादयति ।

**देशेत्यादिना** परिपूर्णाङ्गेऽपि संविधानके देशकालाविरोधेन तद्वर्णना दिक् निर्दिशति । तत्र देशान्तरानुषञ्जनं यथा—

मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥ ६१७ ॥
[ शिशुपाल० ४.१० ]

कालान्तरानुषञ्जनं यथा—

सपदि हरिसखैर्वधूनिदेशाद् ध्वनितमनोरमवल्लकीमृदङ्गैः ।
युगपदनुगुणस्य संनिधानं वियति वने च यथायथं वितेने ॥ ६१८ ॥
[ किरात० १०.१८ ]

पात्रान्तरानुषञ्जनं यथा—

करिष्यसे यत्र सुदुष्कराणि प्रसत्तये गोत्रभिदस्तपांसि ।
शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम् ॥ ६१९ ॥
[ किरात० ३.२९ ]

चेष्टान्तरानुषञ्जनं यथा—

मदस्रुतिश्यामितगण्डलेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिवाक्षिपन्तः ॥ ६२० ॥
[ किरात० १६.२ ]

---

1 The SP XI (p 472) reads : कीर्तिप्रीति°. 2. A, B drop प्रबन्धस्य. 3. The SP XI (p. 472) adds कवेः. 4. The SP XI (p. 472) reads : °सौन्दर्येण. 5. E निदर्शयति. 6 E °कैर्मृ°. 7. The Kirāta reads : युगपद्तुगणस्य. 8. E drops च. 9. C drops चारुशिलोच्चयं. 10. C सामवक्षणान्ने°. 11. E विक्रान्ति°. 12. E °त्या°.

तत्र संस्कृतभाषानिबद्धसर्गबन्धं **हयग्रीववधादि,** प्राकृतभाषानिबद्धाश्वासकबन्धं **सेतुबन्धादि,** अपभ्रंशभाषानिबद्धसन्धिबन्धं **अब्धिमथनादि,** ग्राम्यापभ्रंशभाषानिबद्धावस्कन्धकबन्धं **भीमकाव्यादि।** प्रायोग्रहणात् संस्कृतभाषयाऽप्याश्वासकबन्धो **हरिप्रबोधादौ** न दुष्यति। प्रायोग्रहणादेव **रावणविजयहरिविजयसेतुबन्धेष्वादितः** समाप्ति-

---

कथान्तरानुषञ्जनं यथा—

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद् भविष्यति।
शृणु येन गत[1]: स कर्मणा शलभत्वं हरलोचनार्चिषाम्॥ ६२१॥

[कुमार० ४·४०]

**मार्गद्वयानुवर्तन**मिति। अनेन महाकवीनां समयमुपलक्षयति। तत्र—

(184) गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम्।
निराकरण[2]मित्येष मार्गः प्रकृतिसुन्दरः॥

(185) वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि।
तज्जयान्नायकोत्कर्षकथनं च धिनोति नः[3]॥ इति॥

[काव्यादर्श १·२१-२२]

अथ किमेतानि नगरार्णववर्णनादीनि समुच्चयप्रयोज्यानि, उत विकल्पप्रयोज्यानि। समुच्चयप्रयोज्यानीति चेत्, **किरातार्जुनीयादौ** नगरार्णवार्कोदयविवाहकुमाराभ्युदयादीनामभणनम्। अथ विकल्पेन यथेष्टकल्पनायामलक्षणत्वप्रसङ्गः, तन्न, अङ्गकल्पनस्योभयथापीष्टत्वात्। यदा कथाशरीरस्य परिपूर्णाङ्गसंभवस्तदा समुच्चयेन। यदा त्वन्यथा तदा विकल्पेनेति। तत्रापि केषाञ्चिदेवाङ्गानां विकल्पोऽपरेषां नियमेन प्रयोगः। यानि पुरुषार्थस्यार्थकामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते। यथा—'मन्त्रदूतप्रयाणा[4]दिनायकाभ्युदयादयः' (काव्यादर्श १·१७) यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः। तानि च यदि कथाशरीरे न स्युस्तदा कथान्तराद्य[5]नुषञ्जनेनापि कर्तव्यानीति प्रचक्षते।

---

1. C, E गति. 2. C निराकरमि°. 3. A, B ते. 4. The SP XI (p. 479) presents this very reading; Daṇḍī, however reads °प्रयाणाजि.
5 A, B, C, D कथान्तरानु°.

पर्यन्तमेकमेव छन्दो भवतीति । गलितकानि तु तत्र कैरपि विदग्धमानिभिः क्षिप्तानीति तद्विदो भाषन्ते ।

**२०२) नायकाख्यातस्ववृत्ता भाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताख्यायिका ॥ ७ ॥**

धीरप्रशान्तस्य गाम्भीर्यगुणोत्कर्षात् स्वयं स्वगुणोपवर्णनं न संभवतीत्यर्थाद् यस्यां धीरोद्धतादिना नायकेन स्वकीयं वृत्तं सदाचाररूपं चेष्टितं कन्यापहारसंग्रामसमागमाभ्युदयभूषितं मित्रादिप्वाख्यायते, अनागतार्थशंसीनि च वक्त्रापरवक्त्रार्यादीनि यत्र बध्यन्ते, यत्र चावान्तरप्रकरण-

---

**वृत्तमिति** । वृत्तशब्द सदाचार एव वर्तते । अत एव **मनु**राह

(186) न विद्यया केवलया तपसा वापि पात्रता ।
यस्य वृत्तमिमे चोभे तद्धि पात्र प्रकीर्तितम् ॥+

इति तदाह **सदाचाररूपमिति । वक्त्रेति । वक्त्रशब्देन** वक्त्रप्रकरण लक्ष्यते । तद् यथा— (187) 'अनुष्टुभि नाद्यात् स्नौ तुर्याद्यो वक्त्रम' (छन्दोऽनुशासन ३.३३) इत्यादि । (188) 'नारल्गा नजज्रा अपरवक्त्रम्' (छन्दोऽनुशासन ३.१५) (189) 'चुगौ षष्ठो जो न्लौ वा पूर्वेऽर्धे परे षष्ठो लार्या गाथा' (छन्दोऽनुशासन ४.१) इत्येवं **छन्दोऽनुशासने** लक्षितानि । वक्त्र यथा **हर्षचरिते—**

निजवर्षाहितस्नेहा बहुभक्तजनान्विताः ।
सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः ॥ ६२२ ॥

[हर्षचरित ३-१ (पृ. ८३)]

**अपरवक्त्रं** यथा—

तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते ।
अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥ ६२३ ॥

[हर्षचरित १-२१ (पृ. १८)]

**आर्या** यथा—

सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे ।
विपुलेऽपि पृथुप्रतिभो दन्त इव गणाधिपस्य मुखे ॥ ६२४ ॥

[हर्षचरित ४-२ (पृ. ११९)]

---

1. I स्वकीयवृत्तं. 2. S मित्रादि व्या. + This verse is, however, not found in the Manusmṛti It is found in Yājñavalkyasmṛti (I. 200)

समासाकुच्छ्वासा बध्यन्ते सा संस्कृतभाषानिबद्धा, 'अपादः पदसंतानो गद्यं' (काव्यादर्श १.२३) तेन युक्ता। युक्तग्रहणादन्तरान्तरा प्रविरलपद्यनिबन्धेऽप्यदुष्टा आख्यायिका। यथा **हर्षचरितादिः**।

**२०३) धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ॥८॥**

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः,[1] तस्य तु वृत्तमन्येन कविना वा[2] यत्र वर्ण्यते, या च काचिद् गद्यमयी यथा **कादम्बरी**, काचित् पद्यमयी यथा **लीलावती**, या च सर्वभाषा काचित् संस्कृतेन काचित् प्राकृतेन काचिन्मागध्या काचिच्छूरसेन्या काचित् पिशाच्या काचिदपभ्रंशेन बध्यते सा कथा।

प्रबन्धमध्ये परबोधनार्थं[3] नलाद्युपाख्यानमिवोपाख्यानमभिनयन् पठन् गायन् यदेको ग्रन्थिकः कथयति तद् **गोविन्दवदाख्यानम्**।

तिरश्चामतिरश्चां वा चेष्टाभिर्यत्र कार्यमकार्यं वा निश्चीयते तत् **पञ्चतन्त्रादिवत्**, **धूर्तविटकुट्टनीमतमयूरमार्जारिकादिवच्च**[4] निदर्शनम्।

---

**उपाख्यान**मिति। यदाह--

(190) **नलसावित्रीषोडशराजोपाख्यान**वत् प्रबन्धान्तः।
अन्यप्रबोधनार्थं यदुपाख्यातं[5] ह्युपाख्यानम् ॥

**आख्यान**मिति। तथा चाह--

(191) आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन्।
ग्रन्थिक एकः कथयति **गोविन्द**वदवहिते सदसि ॥

**निदर्शनमिति**। तथा[6] च--

(192) निश्चीयते तिरश्चामतिरश्चां वापि यत्र चेष्टाभिः।
कार्यमकार्यं वा तन्निदर्शनं **पञ्चतन्त्रादिः** ॥

---

1. P नायकस्य and drops तस्य. 2. I सा. 3. S परप्रबो°. 4. S, मार्जारादिकवच्च. 5. The SP (p 469) reads यदुपाख्याति तदुपाख्यानम्. 6 E यथा च.

प्रधानमधिकृत्य यत्र द्वयोर्विवादः सार्धप्राकृतरचिता **चेटकादिवत्** प्रवह्लिका[1]।

प्रेतमहाराष्ट्रभाषया क्षुद्रकथा **गोरोचना—अनङ्गवत्यादिवन्**मन्थल्लिका[2]। यस्यां पुरोहितामात्यतापसादीनां प्रारब्धानिर्वाहे उपहासः सापि मन्थल्लिका।

यस्यां पूर्वं वस्तु न लक्ष्यते पश्चात्तु प्रकाश्यते सा **मत्स्यहसितादिवन्**मणिकुल्या[3]।

एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्त[4]वर्णनप्रधाना **शूद्रकादिवत्** परिकथा।

---

(193) **धूर्तविटकुट्टनी[5]मतमयूरमार्जारिकादि** यल्लोके।
कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि॥

**प्रवह्लिकेति**। तथा[6] च—

(194) यत्र द्वयोर्विवादः प्रधानमधिकृत्य जायते सदसि।
साऽर्धप्राकृतरचिता[7] प्रवाह्लिका **चेटक**प्रभृतिः॥

**मन्थल्लिकेति**। तथा च—

(195) क्षुद्रकथा[8] मन्थल्ली प्रेतमहाराष्ट्रभाषया भवति।
**गोरोचनेव** कार्या **साऽनङ्गवतीव** वा कविभिः॥

**सापीति**। तथा च—

(196) यस्यामुपहासः स्यात् पुरोहितामात्यतापसादीनाम्।
प्रारब्धानिर्वाहे सापि हि मन्थल्लिका भवति॥

**मणिकुल्येति**। तथा च—

(197) मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु।
पश्चात् प्रकाशते सा मणिकुल्या **मत्स्यहसितादिः**॥

**परिकथेति**। तथा च—

(198) पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः।
श्रूयन्ते **शूद्रकवज्जिगीषुभिः** परिकथा सा तु॥

---

1. L प्रवह्लिका. 2. L मथल्लिका. 3. L मानुकुल्या. 4. S drops वृत्तान्त. 5. E °कुट्टिनी°. 6. E यथा. 7. E °रचना°. 8. The SP XI (p. 469) reads · क्षुद्रकथा मन्थुल्ली येह महाराष्ट्रभाषया भवति।

मध्यादुपान्तो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्या वर्ण्यते सा **इन्दुमत्यादिवत्** खण्डकथा । समस्तफलान्तेतिवृत्तवर्णना **समरादित्या-दिवत्** सकलकथा । एकतरचरिताश्रयेण प्रसिद्धकथान्तरोपनिबन्ध उपकथा । लम्भाङ्किताद्भुतार्था **नरवाहनदत्तादिचरितवद्** बृहत्कथा । एते च कथा-प्रभेदा एवेति न पृथग् लक्षिताः ।

**२०४) गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः ॥ ९ ॥**

संस्कृताभ्यां गद्यपद्याभ्यां रचिता, अभिप्रायेण यान्यङ्कनानि स्वनाम्ना परनाम्ना वा कविः करोति तैर्युक्ता उच्छ्वासनिबद्धा चम्पूः । यथा **वासवदत्ता दमयन्ती** वा ।

**२०५) अनिबद्धं मुक्तकादि ॥ १० ॥**

मुक्तकसंदानितकविशेषककलापककुलकपर्याकोशप्रभृत्यनिबद्धम् ।

---

**खण्डकथेति** । तथा च—

(199) ग्रन्थान्तरप्रसिद्ध यस्यामितिवृत्तमुच्यते विबुधैः ।
मध्यादुपान्ततो वा सा खण्डकथा यथे**न्दुमती** ॥

**सकलकथेति** । चरितमित्यर्थः ।

**उपकथेति** । तथा च –

(200) यत्राश्रित्य कथान्तरमँतिप्रसिद्धं निबध्यते कविभिः ।
चरितं विचित्रमन्यत् सोपकथा **चित्रलेखादिः** ॥

**बृहत्कथेति** । तथा च—

(202) लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया ।
नरवाहनदत्तादेश्चरितमिव **बृहत्कथा** भवति ॥

॥ इति **आचार्यश्रीहेमचन्द्र**विरचिते **विवेके**ऽष्टमोऽध्यायः ॥

---

1 I समरादित्यवत. 2. E 'मिति'.

एषां लक्षणमाह—

**२०६) एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि ॥ ११ ॥**

एकेन च्छन्दसा वाक्यार्थसमाप्तौ मुक्तकं यथा—**अमरुकस्य शृङ्गार**शते रसस्यन्दिनो मुक्तकाः । द्वाभ्यां सन्दानितकम् । त्रिभिर्विशेषकम् । चतुर्भिः कलापकम् । एतानि च विशेषानभिधानात् सर्वभाषाभिर्भवन्ति ।

छन्दोभिरिति वर्तते । मुक्तकानामेकप्रघट्टकोपनिबन्धः पर्या । अवान्तरवाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः पर्या । सा कोशेषु प्रचुरं दृश्यते ।

**२०७) पञ्चादिभिश्चतुर्दशान्तैः कुलकम् ॥ १२ ॥**

छन्दोभिरिति वर्तते । मुक्तकानामेकप्रघट्टकोपनिबन्धः पर्या । अवान्तरवाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः पर्या । सा कोशेषु प्रचुरं दृश्यते ।

**२०८) स्वपरकृतसूक्तिसमुच्चयः कोशः ॥ १३ ॥**

यथा **सप्तशतकादिः** । एकप्रघट्टके एककविकृतः सूक्तिसमुदायो **वृन्दावनमेघदूतादिः** संघातः । विप्रकीर्णवृत्तान्तानामेकत्र सन्धानं **यदुवंशदिलीपवंशादिवत्** संहिता । एवमनन्तोऽनिबद्धगणः । स आदिग्रहणेन गृह्यते ।

इह च सत्सन्धित्वं शब्दार्थवैचित्र्ययोगश्च महाकाव्यवदाख्यायिकाकथाचम्पूष्वपि द्रष्टव्यः ॥

---

इति—**आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तावष्टमोऽध्यायः** समाप्तः ॥

---

1 S मुक्तं यथा. 2. I °नामेव. × P, L and I regard it as a Sūtra because it is preceded by a छ 3. L drops यथा and त. 4. S दि°.

# अकाराद्यनुक्रमेण–अलङ्कारचूडामणिगतानां विवेकगतानां चोदाहरणानामनुक्रमणिका ।



---

१. अस्यामनुक्रमणिकायां (अ.) अलङ्कारचूडामणिं (वि.) च विवेकं सूचयति ।

२. प्रथमा सङ्ख्या श्लोकाङ्कं सूचयति, अपरा पृष्ठाङ्कम् ।

---

## प्रमाणत्वेनोदाहृतानां संदर्भाणामकाराद्यनुक्रमणी*



* अरब्ब्यङ्क सदर्भसंख्यां सूचयति, नागर्यङ्क पृष्ठसंख्याम्। शेषं पूर्ववत्।

# प्राकृतपद्य-गद्यावतरणानां संस्कृतच्छाया ।

अइ दिअर (अ.) ५७२, ३६८. [सप्तशतक ५७१; गातासप्तशती ६.७०]

अयि देवर किं न प्रेक्षसे आकाशं किं मुधा प्रलोकसे ।
जायाया बाहुमूले अर्धचन्द्राणां परिपाटीम् ॥

(सागरिका :) अज्जउत्त मुंच, मुंच । (वि.) ६०३,४५३-४५४.

[रत्नावली ३·१६-१७]

(सागरिका :) आर्यपुत्र, मुञ्च मुञ्च, पराधीनः खल्वयं जनो न पुनः मर्तुमीदृशमवसरं प्राप्नोति ।

अज्ज क्खु मए राअउलाओ (वि.) ५९६, ४५२. [रत्नावली ३, प्रवेशक]

अद्य खलु मया राजकुलात् प्रतिनिवर्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसङ्गतया महालाप श्रुत ।

अज्ज वि हरी (वि.) १५९, ९९. [अभिनवभारत्यां (१, पृ. २७९) उद्धृता]

अद्यापि हरिश्चमत्कृतो भवति कथंकथमपि न मन्दरेण दलितानि ।
चन्द्रकलाकन्दलसच्छायानि लक्ष्म्या अङ्गानि ॥

अत्ता एत्थ (अ.) १४, ५३. [ध्वन्यालोके (१, पृ. ७१) उद्धृता]

श्वश्रू· अत्र निषीदति(शेते) अत्राहं, दिवसकं प्रलोकस्व ।
मा पथिक रात्र्यन्धक शय्यायामावयोर्निषत्स्यसि ॥

अण्णत्थ वच्च (अ.) ८५, ८५. [ध्वन्यालोके (३, पृ ३५२) उद्धृता]

अन्यत्र व्रज बालक स्नान्तीं कस्माद् मा प्रलोकसे ।
एतद् भो जायाभीरुकाणां तीर्थमेव न भवति ॥

अण्णं लडहत्तणयं (अ) ५७३, ३६८. [काव्यप्रकाशे (१०·४५०) उद्धृता]

अन्यद् लटभत्वं अन्यैव कापि वर्तनच्छाया ।
श्यामा सामान्यप्रजापतेः रेखैव न भवति ॥

अप्पिअं दे ण पारेमि (वि.) ६०६,४५४. [रत्नावली ४·२-३]

अप्रियं ते न पारयामि आख्यातुम् ।

[विदूषकः—(सभयम्)] अम्हाण जीविदसंसओ । (वि.) ६००, ४५३.

[रत्नावली ३·१५-१६]

[विदूषकः—(सभयम्)] अस्माकं जीवितसंशयः ।

अहय उज्जुअ (अ.) १७६, १५५. [गाथासप्तशती २.२७; सप्तशतक १२७]

अहकं(अह) ऋजुकरूपा तस्यापि उन्मन्थराणि प्रेमाणि ।
सखिकाजनः अनिपुणः, अल, किं पादरागेण ॥

अहिणवमणहर° (अ.) २२७, २०७. [सरस्वतीकण्ठाभरणे (१.२६·३७) उद्धृता]
अभिनवमनोहरविरचितवलयविभूषा विभाति नववधूका ।
कुन्दलतेव समुत्फुल्लगुच्छपरिलीयमानभ्रमरगणा ॥

आगममणिसुदमहिम० (वि.) ५३२, ३२७ [देवीशतक ७९]
आगमा मनसि श्रुतमहिमा शमः साम्यदाः कृताः पर यस्य ।
किल सापि भगवती तोषमयमुज्ज्वलभावसहस्रम् ॥
[अस्मिन् पद्ये संस्कृतापभ्रंशश्लेषः । संस्कृतभाषार्थः प्राकृतापभ्रंशभाषार्थश्च टीकायां (पृ. ३२७) स्पष्टीकृतः ।]

आसाइय० (अ.) १६, ५४. [सप्तशतक ९५८; सरस्वतीकण्ठाभरणे (४, पृ. ५४९) उद्धृता]
आसादितमज्ञातेन यावत् तावता बधान धृतिम् ।
उपरम वृषभेदानीं रक्ष्यते गृहपतिक्षेत्रम् ॥

ईसाकलुसस्सवि (वि.) १४५, ७६. [ध्वन्यालोके (२, पृ. २७१) उद्धृता]
ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः ।
अद्य सदृशत्वं प्राप्य अङ्ग एव न माति ॥

उच्चिणसु (अ.) २०, ५५. [सप्तशतक ९५९]
उच्चिनुष्व पतितकुसुमं मा धुनीहि शेफालिकां हालिकस्नुषे ।
एषोऽवसानविरसः श्वशुरेण श्रुतो वलयशब्दः ॥

उप्पहजायाए (वि.) ५८७, ३६०. [ध्वन्यालोके (३, पृ. ४९३) उद्धृता]
उत्पथजातायाः अशोभिन्याः (अशोभनशीलायाः) फलकुसुमपत्ररहितायाः ।
बदर्या वृतिं ददत् पामर भो भो हसिष्यसे ॥

एक्कत्तो रुअइ (वि.) १८७, १६८ [ध्वन्यालोके (३, पृ. ३८३) उद्धृता]
एकतो रोदिति प्रिया अन्यतः समरतूर्यनिर्घोषः ।
स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम् ॥

एंतो वि ण सच्चविओ (अ.) ५७६, ३६९. [सरस्वतीकण्ठाभरणे (३, पृ. ३७२) उद्धृता]
आयन्नपि न सत्यापितो (= दृष्टो) यस्याः प्रसरत्पल्लवारुणरागः ।
मज्जनताम्रयोर्मदनस्तथा मदताम्रयोर्लोचनयोरमर्षः ॥

एद्दहमित्तत्थणिया (अ.) ५२, ६५. [शृङ्गारप्रकाशे (७, पृ. २४५) उद्धृता]
एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतदवस्थां प्राप्ता एतावन्मात्रैर्दिवसैः ॥

एमेअ जणो (वि.) ३४२, २१८. [ध्वन्यालोके (३, पृ. २९३) उद्धृता]
एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम् ।
परमार्थविचारे पुनश्चन्द्रश्चन्द्र एव वराकः ॥

कस्स व न होइ (अ.) २५, ५७. [सप्तशतक ८८६]

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्॥

कहं एसा देवी वासवदत्ता (वि.) ६०२, ४५३. [रत्नावली ३·१५–१६]

कथमेषा देवी वासवदत्ता उद्वध्यात्मानं व्यापादयति।

कायं खायइ (अ.) २५६, २१५ [सरस्वतीकण्ठाभरणे (१·२३·३०) उद्धृता]

काकं खादति क्षुधितः कूरं क्षिपति निर्भरं रुष्टः।
शुनकं गृह्णाति कण्ठे निषेधति (=भेषयति) च नप्तारं स्थविरः॥

काराविऊण खउरं (अ.) ३८२, २६४. [सरस्वतीकण्ठाभरणे (१·४८·५५) उद्धृता]

कारयित्वा क्षौरं ग्राममुख्यः मज्जित्वा जिमित्वा।
नक्षत्रं तिथिवारौ ज्यौतिषिकं पृष्ट्वा चलितः॥

का विसमा (अ.) ६५४, ३९५. [सप्तशतक ९७५]

का विषमा दैवगतिः किं लष्ट (=सुन्दरं) यद् जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः॥

कुलबालियाए (अ.) ६९६, ४१३. [सप्तशतक ८७१]

कुलबालिकायाः प्रेक्षध्वं यौवनलावण्यविभ्रमविलासाः।
प्रवसन्तीव प्रोषिते आयन्तीव गृहमायति॥

गाढालिंगण' (अ.) ७५, ८० [सप्तशतक ९३४]

गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।
मनस्विनीनां मानः पीडनभीत इव हृदयात्॥

गुरुयणपरवस (अ.) ३४, ६१ [सप्तशतक ८५१]

गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम्।
अद्य प्रवासं व्रजसि व्रज स्वयमेव शृणोषि (=श्रोष्यसि) करणीयम्॥

चन्दमऊएहिं (अ.) ५५५, ३५५. [ध्वन्यालोके (२, पृ. २५९) उद्धृता]

चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता।
हंसैः शरच्छोभा काव्यकथा सज्जनैः क्रियते गुरुकी॥

चमढियमाणसकञ्चण (वि.) १५०, ७९. [ध्वन्यालोके (२, पृ. २३८) उद्धृता]

मर्दितमानसकाञ्चनपङ्कजनिर्मथितपरिमलौ यस्य।
अखण्डितदानप्रसरौ बाहुपरिघौ एव गजेन्द्राः॥

चूयङ्कुरावयंसं (अ.) ७४, ७९. [हरिविजये; ध्वन्यालोके (पृ. २९८) उद्धृता।]

चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम्।
असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्म्या मुखम्॥

जं जं करेसि (अ.) ७२७, ४२५. [गाथासप्तशती ४.७८; सप्तशतक ३७८]

यद् यत् करोषि यद् यच्च जल्पसि यथा त्वं निवससि ।
तत्तदनुशिक्षणशीलाया दिवसो दिवसो न संपतति ॥

जं भणह तं (अ.) ६६१, ३९६. [सप्तशतक ८९७]

यद् भणथ तत् सख्य आम करिष्यामि तत् तथा सर्वम् ।
यदि तरथ (=शक्नुथ) रोद्धुं मे धैर्यं संमुखागते तस्मिन् ॥

जस्स रणंतेउरए (अ.) ५४२, ३५२ [काव्यप्रकाशे (१०.४२२) उद्धृता]

यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥

जाएज्ज वणुद्देसे (वि.) १४९, ७८. [गाथासप्तशती ३.३०, सप्तशतक २३०]

जायेय वनोद्देशे कुब्ज एव पादपः शटितपत्र. ।
मा मानुषे लोके त्यागैकरसो दरिद्रश्च ॥

जामि ता राअ ! तुडिअ अणुणव्वीसगि । (वि.) ५८५,४४८.

यामि तावद् राजन् ! प्रसङ्गे अनुज्ञास्यसि ।

जो तीए अहर (अ.) ६३५, ३८९. [गाथासप्तशती २.६, सप्तशतक १०६]

यस्तस्या अधररागो गत्रिमुद्वासित. (गत्रावुद्वासितः) प्रियतमेन ।
स एव दृश्यते प्रात सपत्नीनयनेपु संक्रान्त ॥

ढंढुल्लितु मरीहसि (अ.) ५०९, ३४३; ५१७, ३४४ [काव्यप्रकाशे (१०.४०७) उद्धृता]

१) गवेषयन् मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमेन सम भ्रमर भ्राम्यन न प्राप्स्यसि ॥

२) मालतीकुसुमसदृश ,, ,, ,, ,,

णहमुहपसाहिअंगो (अ.) २४, ५६. [सप्तशतक ९३७]

नखमुखप्रसाधिताङ्गो निद्राघूर्णलोचनो न तथा ।
यथा निर्व्रणाधरः श्यामलाङ्ग दुनोषि मम हृदयम् ॥

णोल्लेइ अणोल्लमणा (अ.) ३१, ६०. [सप्तशतक ८७५]

नुदत्यनार्द्रमना अत्ता (श्वश्रू) मां गृहभरे सकले ।
क्षणमात्र यदि सन्ध्यायां भवति न वा भवति विश्रामः ॥

तं ताण सिरि (अ.) ७०, ७४. [विषमबाणलीलायाम्; ध्वन्यालोके (पृ. २६५) उद्धृता]

तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणा निवेशितं कुसुमबाणेन ॥

त ताण हयच्छायं (वि.) १७०, १४५. [सेतुबन्ध २.४५]

तत् तेषां हतच्छायं निश्चललोचनशिखं प्रोषितप्रतापम् ।
आलेख्यप्रदीपानामिव निजकं प्रकृतिचटुलत्वमपि विगलितम् ॥

तं तिअसबंदिमोक्खं (वि.) ६१२, ४५६. [सेतुबन्ध १·१२]

तं त्रिदशबन्दिमोक्षं समस्तलोकस्य हृदयशल्योद्धरणम् ।
शृणुतानुरागचिह्नं सीतादुःखक्षयं दशमुखस्य वधम् ॥

ताला जायंति गुणा (अ.) २३७, २०९.
[विषमबाणलीलायाम्; ध्वन्यालोके (पृ. १७०) उद्धृता]

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ [सप्तशतक ९८९]

तुह वल्लहस्स गोसम्मि (अ.) ७६, ८० [सप्तशतक ९९०; काव्यप्रकाशे (४·८३) उद्धृता]

तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥

दिट्ठिआ इमिणा (वि.) ६०१, ४५३. [रत्नावली ३·१५–१६]

दिष्टयानेन विरचितभट्टिनीवेशेनानभिज्ञाता केनापि इतश्चतुःशालातो (? इतश्चित्र-शालातो) निष्क्रान्तास्मि ।

दे आ पसिअ (अ.) २२, ५५. [सप्तशतक ९६८; शृङ्गारप्रकाशे (७, पृ. २४८) उद्धृता]

अयि आ· प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्तनमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥

धवलोसि जइ (अ.) ६१०, ३७७ [सप्तशतक ६६७; गाथासप्तशती ७·६५]

धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम् ।
रागभृतेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥

धीराण रमइ (अ.) ७२, ७५. [ध्वन्यालोके (२, पृ. २६२) उद्धृता]

धीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्संगे ।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥

नियदइय (अ.) १९, ५५. [सप्तशतक ९५७]

निजदयितादर्शनोत्क्षिप्त पथिकान्येन व्रज पथा ।
गृहपतिदुहिता दुर्लङ्घ्यवागुरेह हतग्रामे ॥

निग्गडदुरारोहं (अ.) ६७०, ४००. [सप्तशतक ४६८ गाथासप्तशती ५·६८]

निर्गण्डदुरारोहां मा पुत्रक पाटलां समारोह ।
आरूढनिपतिता केऽनया न कृता इह ग्रामे ॥

निहुयरमणम्मि (अ.) १८७, १६१. [सप्तशतक ९८७]

निभृतरमणे लोचनपथे पतिते गुरुणा मध्ये ।
सकलपरिहारहृदया वनगमनमेव काङ्क्षति वधूः ॥

पणयकुवियाण (अ.) १०५, ११२. [गाथासप्तशती १·२७; सप्तशतक २७]

प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः ।
निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः ॥

पत्तनिअम्ब° (अ.) २४३, २१२ [गाथासप्तशती ६·५५; सप्तशतक ५५६]
प्राप्तनितम्बस्पर्शाः स्नानोत्तीर्णायाः श्यामलाङ्ग्याः ।
चिकुरा रुदन्ति जलबिन्दुभिर्बन्धस्येव भयेन ॥

पंथिय न एत्थ (अ.) ५९, ६७. [सप्तशतक ८७९]
पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधर (पक्षे पयोधरा) प्रेक्ष्य यदि वससि तद् वस ॥

परपेसणदूसिदं (वि) ५९१, ४५१ [रत्नावली १·२३-२४]
परप्रेषणदूषितमपि शरीरमेतस्य दर्शनेनाद्य मे बहुमतं संपन्नम् ।

परिवड्ढइ विण्णाण (वि) ६१३, ४५६. [सेतुबन्ध १·१०]
परिवर्धते विज्ञानं संभाव्यते यशो अर्ज्यन्ते गुणाः ।
श्रूयते सुपुरुषचरितं किं तद् येन न हरन्ति कथालापाः ॥

पाआलअले सेसाहि° (वि.) ५८४, ४४७.
पातालतले शेषाहिनिभृतक ! जयलक्ष्मीवक्षःस्थलमर्दक !

पिअमुहससंकदंसण° (वि) १७०, १४४.
प्रियमुखशशाङ्कदर्शनचलितं रतिसागरं प्रियाहृदयम् ।
गुरुसङ्क्रमरुद्धस्वेदप्रमुखप्रसरमपि खलु न तिष्ठति ॥
[अस्या गाथाया: सागरपक्षवक्तव्यता विवेकादवगन्तव्या ।]

पोढमहिलाण जं (अ.) ६५५, ३५५. [सरस्वतीकण्ठाभरणे (३·२३, ५६) उद्धृता]
प्रौढमहिलाना यत् सुष्ठु शिक्षितं तद् रते सुखयति ।
यद्यदशिक्षितं नववधूना तत्तद् धृतिं ददाति ॥

फुल्लुक्कर (अ.) २९०, २२७. [कर्पूरमञ्जरी १·१९]
पुष्पोत्करं कलमौदनसमं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृशास्ते किमपि मुग्धविचकिलप्रसूनपुञ्जाः ॥

बहलतमा हयराई (अ.) १५, ५३ [गाथासप्तशती ४·३५; सप्तशतक ३३५]
बहलतमा हतरात्रिरद्य प्रोषितः पतिर्गृहं शून्यम् ।
तथा जागृहि प्रतिवेशिन् न यथा वयं मुष्यामहे ॥

भम धम्मिअ (अ) १३, ४७ [गाथासप्तशती २·७५; सप्तशतक १७५]
भ्रम धार्मिक विश्वस्तः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥

भो एसा खु (वि.) ५९४, ४५२. [रत्नावली २·१७-१८]
भो एषा खल्वपरा देवी वासवदत्ता ।

भो, मा अण्णहा संभावेहि । ६०७, ४५७ [रत्नावली ४·३-४]
भो मा अन्यथा संभावय । सा खलु देव्योज्जयिनीं प्रेषिता । अतो मया अप्रियमिति भणितम् ।

महिलासहस्स° (अ.) १७८, १५५. [गाथासप्तशती २·८२; सप्तशतक १८२]

महिलासहस्रभृते तव हृदये सुभग सा अमान्ती ।
अनुदिनमनन्यकर्मा ऽङ्गं तनुकमपि तनयति ॥

महुएहिं (अ.) १७, ५४. [सप्तशतक ८७७; वज्जालग्ग ४९१]

मधूकैः किंवा पथिक यदि हरसि निवसन नितम्बात् ।
कथयामि कस्यारण्ये ग्रामो दूरेऽहमेकाकिनी ॥

मा पंथं (अ.) ८२, ८४. [वज्जालग्ग ४९१; सप्तशतक ९६१]

मा पन्थानं रुधः मम अपेहि बालक (=अप्रौढ) अहो असि अह्रीकः ।
वयं परतन्त्राः शून्यगृहं रक्षितव्यमस्माकम् ॥

रइकेलिहिय° (अ.) ९२, ८७. [गाथासप्तशती ५·५५; सप्तशतक ४५५]

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

लीलादाढग्गुव्वूढ° (वि.) १५१, ८१. [मधुमथनविजये, लोचने (पृ. ३४६) उद्धृता]

लीलादंष्ट्राग्रोद्व्यूढसकलमहीमण्डलस्यैवाद्य ।
कस्मात् मृणालाभरणमपि तव गुरूयतेऽङ्गे ॥

वच्च मह च्चिय (अ.) २३, ५६. [सप्तशतक ९४४]

व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जायन्ताम् ॥

वण्णवसिअ व्व (वि.) ५६२, ३९० [सप्तशतक ४७८; गाथासप्तशती ५·७८]

वन्योषितेव आस्से सत्यमेव स त्वया न सत्यापितः (= दृष्ट.) ।
न खलु भवन्ति तस्मिन्दृष्टे स्वस्थावस्थान्यङ्गानि ॥

वाणियय हत्थिदंता (अ.) ३७, ६३; ६६०, ३९६.
[सप्तशतक ९.५१, ध्वन्यालोके (पृ. २९९) उद्धृता]

वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयः ।
यावद् विलुलितालकमुखी गृहे परिष्वष्कते स्नुषा ॥

वाणीरकुडङ्गुड्डीण° (अ.) १७२, १५२. [सप्तशतक ८७४; ध्वन्यालोके (पृ. ८२) उद्धृता]

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

विअसंतरअक्खउरं (वि.) ५५०, ३६१. [सेतुबन्ध ६·११]

विकसद्रजःकर्बुरं मकरन्दरसाध्मातमुखरमधुकरम् ।
ऋतुना द्रुमाणां दीयते ह्रियते न पुनरात्मनैव कुसुमम् ॥

विवरीयरए लच्छी (वि.) १३८, ५२. [सप्तशतक ८१६]

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥

सग्गं अपारिआयं (अ.) ५६४, ३६५. [सेतुबन्ध ४.२०]

स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथस्योरः ।
स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥

सज्जेइ सुरहिमासो (वि.) १४१, ७२. [ध्वन्यालोके (पृ. २५५, ५.२८) उद्धृता]

सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यसहान ।
अभिनवसहकारमुखाग्रनवपल्लवपत्रलानननङ्गस्य शरान ॥

सणिअं वच्च किसोयरि (अ.) २१,५५. [शृङ्गारप्रकाशे (प्र. ७, पृ २४८) उद्धृता]

शनैः व्रज कृशोदरि ! पदे प्रयत्नेन स्थापय महीपृष्ठे ।
भङ्क्ष्यसि विस्तृतस्तनि ! विधिना दुःखेन निर्मापिता (= निर्मिता) ॥

सयलं चेव निबंधं (वि.) ६१४, ४५६.

[रावणविजये, शृङ्गारप्रकाशे (११; पृ ८७३) उद्धृता]

सकलमेव निबन्धं द्वाभ्या पदाभ्यां कलुषं प्रसन्नं च स्थितम् ।
जानन्ति कवीना कवयः शुद्धस्वभावाभ्यां लोचनाभ्यामिव हृदयम् ॥

सरस मउअसहावं (वि.) १३९, ६९.

सरसं मृदुकस्वभावं विमलगुणं मित्रसङ्गमोल्लसितम् ।
कमलं नष्टच्छायं कुर्वन् दोषाकर ! नमस्ते ॥

सह दिअहनिसाहिं (वि.) ५४८, ३७८ [कर्पूरमञ्जरी २ ९.]

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति ।
तव सुभग वियोगे तस्या उद्वेगशीलायाः सह च तनुलतया दुर्बला जीविताशा ॥

सहि अदक्खिण्णा (वि ) ५९२, ४५२. [रत्नावली २-१७-१८]

सखि, अदाक्षिण्येदानीं त्वं यैवं भर्त्रा हस्तेन गृहीतायापि कोपं न मुञ्चसि ।

सालोए च्चिय (अ.) ७११, ४१८ [गाथासप्तशती २-३०; सप्तशतक १३०]

सालोके एव सूर्ये गृहिणी गृहस्वामिकस्य गृहीत्वा ।
अनिच्छतश्च चरणौ धावति हसन्ती हसतः ॥

साह(हे)ती सहि (अ.) ३६, ६२. [सप्तशतक ८६०]

कथयन्ती सखि सुभगं क्षणे क्षणे दूनाऽसि मम कृते ।
सद्भावस्नेहकरणीयसदृशं तावद् विरचितं त्वया ॥

साहु रे अमच्च वसंतय (वि.) ५९५, ४५२. [रत्नावली ३, प्रवेशक]

साधु रे अमात्य वसन्तक, साधु । अतिशयितो तथा (? त्वया) अमात्ययौगन्धरायणो-ऽनया सन्धिविग्रहचिन्तया ।

सिहिपिच्छकण्णऊरा (अ.) ७२९, ४२५. [गाथासप्तशती २-७३; सप्तशतक १७३]

शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्ववती भ्रमति ।
मुक्ताफलरचितप्रसाधनाना मध्ये सपत्नीनाम् ॥

मुव्वइ समागमिस्सइ (अ.) ३२, ६१. [सप्तशतक ९६२; काव्यप्रकाशे (३·१९) उद्धृता]
श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत् सखि सज्जय करणीयम् ॥

सुसंगदे इआणिं (वि.) ५९३, ४५२. [रत्नावली २·१७–१८]
सुसङ्गते इदानीमपि न विरमसि ।

सो नत्थि एत्थ (अ.) ६६५, ३९८. [सप्तशतक ९९७; काव्यप्रकाशे (१०·५६९) उद्धृता]
सो नास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम् ।
तरुणानां हृदयलुण्टाकीं परिष्वष्कमाणां निवारयति ॥

सोह व्व लक्खणमुहं (अ.) ५२१, ३४६. [सेतुबन्ध १·४८]
शोभेव लक्ष्मणमुखं वनमालेव विकट हरिपतेरुरः ।
कीर्तिरिव पवनतनयमाज्ञेव बलान्यस्य अवलगति दृष्टिः ॥

हंसाण सरेहिं (अ.) ५५८, ३५७. [सप्तशतक ९५३; काव्यप्रकाशे (१०·५२७) उद्धृता]
हंसानां सरोभिः श्रीः सार्यतेऽथ सरसा हंसैः ।
अन्योन्यमेवैते आत्मानं केवलं गुरुकयन्ति (=गुरुकुर्वन्ति) ॥

हिअअट्ठियमन्नुं (वि.) १४३, ७५. [ध्वन्यालोके (२, पृ. २६७) उद्धृता]
हृदयस्थितमन्युं खलु अरुष्टमुखीमपि मां प्रसादयन् ।
अपराद्धस्यापि न खलु ते बहुज्ञ रोषितुं शक्यम् ॥

ही ही ! भो कोसंबीरज्जलंभेणावि (वि.) ५९७, ४५३. [रत्नावली ३·४–५]
ही ही भोः, कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोष आसीद् यादृशो मम सकाशादद्य प्रियवचनं श्रुत्वा भविष्यतीति ।

हुमि अवहत्थिअरेहो (वि.) १५२, ८२. [विषमबाणलीलायाम्; लोचने (३, पृ. ३४६) उद्धृता]
भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि तव समकं प्रतीहि भक्तिं न विस्मरामि ॥

हेट्ठे वि डोंबी (वि.) पृ. ४४८, पङ्क्ति ७.
अधस्तादपि (=पश्चादपि) डोम्बि !

हेट्ठे वि डोंबी ! णव्वमिसहिइ (वि.) ५८३, ४४७.
अधस्तातदपि (=पश्चादपि) डोम्बि ! ज्ञास्यसे, भवामि अहम् (? ज्ञाये सख्या ?) ।
चौर्यमिथुनस्य मन्मथसारं कथयामि तव (=तुभ्यम्) ॥

होइ न गुणाणुराओ (अ.) ५४८, ३५३. [लोचने (१, पृ. १२३) उद्धृता]
भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् ।
किल प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥

# अकारादिक्रमेण सूत्राणामनुक्रमणी*



---

* एतच्चिह्नान्तर्गता संख्या सर्वाग्रेण सूत्राङ्कं सूचयति । तत्परं प्रथमा संख्या अध्यायाङ्कं, द्वितीया सूत्राङ्कं, तृतीया च पृष्ठाङ्कम् ।

४५) धृतिस्मृतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्यावहित्थशङ्काचापलालस्य-हर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्मादमोहचिन्तामर्षत्रासापस्मारनिर्वेदावेगवि-तर्कासूयामृतयः स्थित्युदयप्रशमसन्धिशबलत्वधर्माणस्त्रयस्त्रिंशद् व्यभिचारिणः। २, १९, १२६

३९) नयादिविभावः स्थैर्याद्यनुभावो धृत्यादिव्यभिचार्युत्साहो धर्मदानयुद्धभेदो वीरः। २, १४, ११७

नानार्थस्य मुख्यस्य शब्दस्य संसर्गादिभिरमुख्यस्य च मुख्यार्थबाधादिभि-र्नियमिते व्यापारे वस्त्वलङ्कारयोर्वस्तुनश्च व्यञ्जकत्वे शब्दशक्तिमूलः पदवाक्ययोः। १, २३, ६३

९२) नानुकरणे। ३, ८, २७३

२०२) नायकाख्यातस्ववृत्ता भाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ता-ख्यायिका। ६, ७, ४६२

५५) निद्रोद्भवं सुप्तमुत्स्वप्नायितादिकृत्। २, २९, १३२

८८) निरर्थकासाधुत्वे पदस्य। ३, ४, १९९

८०) निरिन्द्रियेषु तिर्यगादिषु चारोपाद् रसभावाभासौ। २, ५४, १४७

७२) निर्घातादेस्त्रासोऽङ्गसंक्षेपादिकृत्। २, ४६, १३८

२०७) पद्यादिभिश्चतुर्देशान्तैः कुलकम्। ८, १२, ४६६

२०१) पद्यं प्राय. संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्धभिन्नान्त्यवृत्तसर्गाश्वाससंध्य-वस्कन्धकबन्धं सत्सन्धि शब्दार्थवैचित्र्योपेतं महाकाव्यम्। ८, ६, ४४९

१५३) पराधिक्षेपाद्यसहनं तेजः। ७, १०, ४१०

७७) परोत्कर्षादेरसूयावज्ञादिकृत्। २, ५१, १४२

१७१) परोढा परस्त्री कन्या च। ७, २८, ४१७

१३४) पर्यायविनिमयौ परिवृत्तिः। ६, २२, ३८९

१९८) पाठ्यं नाटकप्रकरणनाटिकासमवकारेहामृगडिमव्यायोगोत्सृष्टिकाङ्कप्रहसन-भाणवीथीसट्टकादि। ८, ३, ४३२

१४१) पृष्टेऽपृष्टे वा अन्यापोहपरोक्तिः परिसंख्या। ६, २९, ३९५

११९) प्रकृताप्रकृतानां धर्मैक्यं दीपकम्। ६, ७, ३५५

१३३) प्रकृताप्रकृताभ्यां प्रकृतापलापोऽपह्नुतिः। ६, २१, ३८७

३२) प्रणयेर्ष्याभ्यां मानः। २, ७, ११२

प्रतिभास्य हेतुः। १, ४, ५

१९५) प्रयोगे निःसाध्वसत्वं प्रागल्भ्यम्। ७, ५२, ४३०

१९८) प्रश्रय औदार्यम्। ७, ५१, ४३०

६९) प्रहारादेर्मोहो भ्रमणादिकृत्। २, ४३, १३७

१८५) प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम्। ७, ४२, ४२६

६१) प्रियागमनादेर्हर्षो रोमाञ्चादिकृत् । २, ३५, १३४
१९७) प्रेक्ष्यं पाठ्यं गेयं च । ८, २, ४३२
१७७) भावहावहेलास्त्रयोऽङ्गजा अल्पबहुभूयोविकारात्मकाः । ७, ३४, ४२१
११२) भिन्नाकृतेः शब्दस्यैकार्थतेव पुनरुक्ताभासः । ५, ९, ३३८
५२) मद्योपयोगान्मदः स्वापहास्यास्मरणादिकृत् । २, २६, १३१
मन्त्रादेरौपाधिकी । १, ६, ६
१८७) मसृणोऽङ्गन्यासो ललितम् । ७, ४४, ४२७
९५) माधुर्यौजःप्रसादास्त्रयो गुणाः । ४, १, २७४
मुख्यगौणलक्ष्यव्यङ्ग्यार्थभेदात् मुख्यगौणलक्षकव्यञ्जकाः शब्दाः ।
१, १५, ४२
मुख्याद्यतिरिक्तः प्रतीयमानो व्यङ्ग्यो ध्वनिः । १, १९, ४६
मुख्याद्यास्तच्छक्तयः । १, २०, ५८
मुख्यार्थबाधे निमित्ते प्रयोजने च भेदाभेदाभ्यामारोपितो गौणः ।
१, १७, ४४
मुख्यार्थसंबद्धस्तत्त्वेन लक्ष्यमाणो लक्ष्यः । १, १८, ४५
१८८) मृदुशृङ्गारचेष्टा ललितम् । ७, ५, ४०८
१४२) यथोत्तरं पूर्वस्य हेतुत्वे कारणमाला । ६, ३०, ३९६
१३९) योग्यतया योगः समम् । ६, २७, ३९२
४४) रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः ।
२, १८, १२४
रसस्योत्कर्षापकर्षहेतू गुणदोषौ, भक्त्या शब्दार्थयोः । १, १२, ३४
रसादिश्च । १, २५, ८२
८५) रसादेः स्वशब्दोक्तिः क्वचित् सञ्चारिवर्जं दोषः । ३, १, १५९
५९) रागादेश्चापलं वाक्पारुष्यादिकृत् । २, ३३, १३४
१९१) रूपयौवनलावण्यैः पुंभोगोपबृंहितैर्मन्दमध्यतीव्राङ्गच्छाया शोभा कान्ति-दीप्तिश्च । ७, ४८, ४२८
७४) रोगादेर्निर्वेदो रुदितादिकृत् । २, ४८, १३९
५७) लज्जादेरवहित्थमन्यथाकथनादिकृत् । २, ३१, १३३
१७८) लीलादयो दश स्वाभाविकाः । ७, ३५, ४२४
लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिः । १, ८, ७
१०३) वक्तृवाच्यप्रबन्धौचित्याद् वर्णादीनामन्यथात्वमपि । ४, ९, २९२
वक्त्रादिवैशिष्ट्यादर्थस्यापि व्यञ्जकत्वम् । १, २१, ५८
९३) वक्त्राद्यौचित्ये च । ३, ९, २७३

१६६) वयःकौशलाभ्यां मुग्धा मध्या प्रौढेति सा त्रेधा । ७, २३, ४१३
वस्त्वलङ्कारयोस्तद्व्यञ्जकत्वेऽर्थशक्तिमूलः प्रबन्धेऽपि । १, २४, ७२
१२९) वाक्यस्यानेकार्थता श्लेषः । ६, १७, ३८२
१८३) वागङ्गभूषणानां व्यत्यासो विभ्रमः । ७, ४०, ४२६
१७९) वाग्वेषचेष्टितैः प्रियस्यानुकृतिर्लीला । ७, ३६, ४२४
१०१) विकासहेतुः प्रसादः सर्वत्र । ४, ७, २९१
३४) विकृतवेषादिविभावो नासास्पन्दनाद्यनुभावो निद्रादिव्यभिचारी हासो हास्यः । २, ९, ११३
४०) विकृतस्वरश्रवणादिविभावं करकम्पाद्यनुभावं शङ्कादिव्यभिचारि भयं भयानकः । २, १५, ११८
१५०) विघ्नेऽप्यचलनं स्थैर्यम् । ७, ७, ४०८
६२) विद्यादेर्गर्वोऽसूयादिकृत् । २, ३६, १३५
१५७) विनयोपशमवान् धीरशान्तः । ७, १४, ४१०
१३७) विपर्ययो भ्रान्तिः । ६, २५, ३९१
८७) विभावानुभावक्लेशव्यक्तिपुनःपुनर्दीप्त्यकाण्डप्रथाच्छेदाङ्गातिविस्तराङ्ग्यननुसंधानानङ्गाभिधानप्रकृतिव्यत्ययाश्च । ३, ३, १६९
२६) विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः । २, १, ८८
५३) विरहादेर्मनस्तापो व्याधिर्मुखशोषादिकृत् । २, २७, १३१
१२३) विवक्षितस्य निषेध इवोपमानस्याक्षेपश्चाक्षेपः । ६, ११, ३७१
१२२) विशेषविवक्षया भेदाभेदयोगायोगव्यत्ययोऽतिशयोक्तिः । ६, १०, ३६८
१३१) विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्यां समर्थनमर्थान्तरन्यासः । ६, १९, ३८४
८९) विसन्धिन्यूनाधिकोक्तास्थानस्थपदपतत्प्रकर्षसमाप्तपुनरात्तविसर्गहतवृत्तसंकीर्णगर्भितभग्नप्रक्रमानन्वितत्वानि वाक्यस्य । ३, ५, २०१
४३) वैराग्यादिविभावो यमाद्यनुभावो धृत्यादिव्यभिचारी शमः शान्तः । २, १७, १२०
१६०) व्यक्तापराधो धृष्टः । ७, १७, ४१२
८२) व्यङ्ग्यस्य प्राधान्ये काव्यमुत्तमम् । २, ५६, १५०
१२१) व्यङ्ग्यस्योक्तिः पर्यायोक्तम् । ६, ९, ३६७
व्यङ्ग्यः शब्दार्थशक्तिमूलः । १, २२, ६३
१०४) व्यञ्जनस्यावृत्तिरनुप्रासः । ५, १, २९५
१६३) व्यसनी पापकृल्लुब्धः स्तब्धो धीरोद्धतः प्रतिनायकः । ७, २०, ४१३
१८९) व्याजादेः प्राप्तकालस्याप्यवचनं विहृतम् । ७, ४६, ४२७
७८) व्याध्यभिघाताभ्यां मृतिर्हिक्काकार्श्यादिकृत् । २, ५२, १४३

२९) सुखमयधृत्यादिव्यभिचारी रोमाञ्चाद्यनुभावः संभोगः। २, ४, १०९

१६९) सोत्प्रासवक्रोक्त्या सबाष्पया वाक्पारुष्येण क्रोधिन्यो मध्या धीराद्याः।
७, २६, ४१५

११४) सोपमानोपमेयधर्मोपमावाचकानामुपादाने पूर्णा वाक्ये वृत्तौ च।
६, २, ३४१

७९) स्तम्भस्वेदरोमाञ्चस्वरभेदकम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः।
२, ५३, १४४

१२८) स्तुतिनिन्दयोरन्यपरता व्याजस्तुतिः। ६, १६, ३८१

१३२) स्तुत्यै संशयोक्तिः ससन्देहः। ६, २०, ३८५

२८) स्त्रीपुंसमाल्यादिविभावा जुगुप्सालस्यौग्र्यवर्जव्यभिचारिका रतिः संभोग-
विप्रलम्भात्मा शृङ्गारः। २, ३, १०६

१८०) स्थानादीनां वैशिष्ट्यं विलासः। ७, ३७, ४२५

१८४) स्मितहसितरुदितभयरोपगर्वदुःखश्रमाभिलाषसङ्करः किलिकिञ्चितम्।
७, ४१, ४२६

२०८) स्वपरकृतसूक्तिसमुच्चयः कोशः। ८, १३, ४६६

१५२) स्वपरेषु दानाभ्युपपत्तिसंभाषणान्यौदार्यम्। ७, ९, ४०९

१२७) स्वभावाख्यानं जातिः। ६, १५, ३७९

१६६) स्वयमूढा शीलादिमती स्वा। ७, २२, ४१३

१०८) स्वरव्यञ्जनस्थानगत्याकारनियमच्युतगूढादि चित्रम्। ५, ४, ३०७

१७३) स्वाधीनपतिका प्रोषितभर्तृका खण्डिता कलहान्तरिता वासकसज्जा विरहो-
त्कण्ठिता विप्रलब्धाभिसारिका चेति स्वस्त्रीणामष्टाववस्थाः। ७, ३०, ४१८

१४३) स्वातन्त्र्याङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः संकरः। ६, ३१, ३९८

१५१) हर्षादिविकारानुपलम्भकृद् गाम्भीर्यम्। ७, ८, ४०९

११३) हृद्यं साधर्म्यमुपमा। ६, १, ३३९

१३५) हेतोः साध्यावगमोऽनुमानम्। ६, २३, ३९०

१४०) हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः।
६, २८, ३९२

## ग्रन्थकारेण निर्दिष्टानां ग्रन्थानां ग्रन्थकृतां चाकाराद्यनुक्रमणी



[१] संख्या पृष्ठाङ्कं सूचयति.

# संपादकद्वयेन निर्दिष्टानां ग्रन्थानां ग्रन्थकृतां चाकाराद्यनुक्रमणी



+ संख्या पृष्ठाङ्कं सूचयति ।

# पारिभाषिकाणामन्येषां च विशिष्टानां शब्दानां विशिष्टस्थल-सूचिका अकाराद्यनुक्रमणी



+ संख्या पृष्ठाङ्कं सूचयति ।

# ॥ परिशिष्टम्–१ ॥

# ॥ टिप्पणम् ॥

[सालङ्कारचूडामणिकस्य काव्यानुशासनस्येदं टिप्पण P संज्ञितताडपत्रादर्शादुद्धृत्यात्रास्माभिः संपादितम् । अज्ञानकर्तृकमेतत्ताडपत्रोपान्तेषु केनापि विदुषा लिखितं स्यात ।]

## प्रथमोऽध्यायः

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| १ | ३ | **समुचित** | अधिकृत ॥ |
| १ | ७ | **जिनोपज्ञा** | जिनस्योपज्ञेति क्लीबत्व स्यादिति उपजानंतीति कः । जिना उपज्ञातार आदिकर्तारो यस्याः ॥ |
| १ | ७ | **अनेन** | पदेन ॥ |
| १ | ८ | **उपादेयतां** | ग्राह्यताम् ॥ |
| १ | ९ | **भाषाद्रव्य** | शब्दारम्भकाणि श्रोत्रग्राह्याणि द्रव्याणि भाषाद्रव्याणीत्युच्यन्ते ॥ |
| १ | ९ | **योगप्रणिधानम्** | योगा मनोवाक्कायाः तेषां प्रणिधानमैकाग्र्यम् ॥ |
| १ | १० | **अनाहार्य**° | अनारोप्यमाधुर्याणि ॥ |
| १ | १० | **नामिकादीनि** | नाम प्रयोजनमस्य नामिकम् । आदिशब्दादाख्यातिकम् ॥ |
| १ | ११ | **गुणमात्रवचना** | पर्यायमात्रवादिनो यथाऽयं स्वच्छो गुण· अयं स्वादु गुणोऽयं तु दुर्गुण इत्यादि । न हि क्वापि द्रव्यमंतरेण पर्याया· प्राप्यन्ते तत्तु पदोपादानम् ॥ |
| २ | ३ | **गीतादि** | गीतमपि मधुरादि गुणयुक्तं स्यात ॥ |
| २ | ७ | **अर्धमागधी** | अर्धं मागध्याः सा चासौ भावान ॥ |
| २ | ९ | **शबराः** | भिल्लाः ॥ |
| ३ | २ | **प्रेक्षावत्** | प्रेक्षावतां प्रज्ञावतां प्रवृत्तेरङ्गभूतम् ॥ |
| ३ | ८–९ | °**काव्यानुशासनयोः** | य एव शब्दानुशासनस्य कर्ता स एव काव्यानुशासनस्यापि इति भावः ॥ |
| ३ | ४ | **प्रायोगिकम्** | संस्कृतप्राकृतादिभाषाव्युत्पत्तिहेतु सूत्रादिकम् ॥ |
| ३ | ९ | **अन्यैः** | आचार्यैः ॥ |
| ३ | १२ | **कान्तातुल्यतया** | अनेन प्रभुसंमितमित्रसंमितौ निरस्तौ ॥ |
| ३ | १४ | °**उल्लेख**° | उल्लेख उन्मीलनम् ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ३ | १५ | तदनुप्राणना | तस्याः प्रतिभायाः अनुप्राणन अनुजीवन तेन आजीवती या वर्णना तस्यां निपुणः ॥ |
| ३ | १६ | तस्य | कवेः ॥ |
| ३ | १८ | निरस्तवेद्यान्तरा | निरस्तं वेद्यांतरं ज्ञेयान्तरं यस्यां तस्याम् ॥ |
| ३ | १८ | इदम् | आनन्दरूपम् ॥ |
| ४ | ३ | संमितेभ्यः | तुल्येभ्यः ॥ |
| ४ | ४ | गुणभावे | गौणत्वे ॥ |
| ४ | ४ | रसप्राधान्ये | काव्ये हि शब्दार्थौ गौणौ रस ग… प्रधानवृत्तिः ॥ |
| ५ | ४ | विलक्षणं | विपरीतम् ॥ |
| ५ | २ | तत्त्वेन… | अर्थे प्राधान्येन युक्तं आख्यान (पुराणादि… वदन्ति ॥ |
| ५ | २ | एतयोः | एतयोर्द्वयो. शब्दार्थयोर्गुणत्वे गौणभा… व्यापारस्य रसव्यापारस्य प्राधान्ये ॥ |
| ५ | ४ | धनमनैकांतिकं | काव्याद्धन स्याद्वा न वा ततोऽर्थकृते इत… प्रयोजनं निरस्तम् ॥ |
| ५ | ४ | व्यवहारकौशलं | व्यवहार…नीतिशास्त्रादिभ्योपि स्यात् व्यव… हारविदे अनर्थनिवारणं प्रकारान्तरे . ॥ |
| ६ | ४ | मात्रात् | अवधारणवाचिमात्रशब्दः ॥ |
| ६ | १० | मन्त्रादि | आदिशब्दात्क…॥ |
| ६ | ११–१२ | क्षयोपशम | नहि क्षयोपशममंतरेण कृतमपि मन्त्रादि… फलति ॥ |
| ६ | १४ | दृष्टोपाधि | उपाधिर्मन्त्रादिका ॥ |
| ६ | १५ | तौ | व्युत्पत्त्यभ्यासौ ॥ |
| ६ | १६ | प्रतिभो | प्रतिभाया उपकारिणौ ॥ |
| ७ | [illegible] | इतिहासागम | इतिहासः पुरावृत्तं ॥ |
| ७ | ४ | योगादिग्रन्थेषु | आदिशब्दाद् गजतुरगादिशास्त्रेषु ॥ |
| १३ | [illegible] | जानन्ति | विदंक् ज्ञाने इति ज्ञानार्थः विदप विचारणे इति विचारार्थः ॥ |
| १४ | ३–४ | निपतित | निपतनं निपतितं क्लीबे क्तः । |
| १४ | ६ | लक्षयति | कथयति ॥ |
| १४ | ७ | अनिर्बंधो | अप्रथनम् ॥ |
| १४ | [illegible] | जातिद्रव्य | जातिसामान्यम् ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| १६ | १ | प्रख्यतया | समतया ॥ |
| २१ | १ | मालत्या वसन्ते | सत्यपि मालती वसंते न वर्ण्यते ॥ |
| २१ | २ | द्रव्यस्य यथा | सतोप्यनिबंधः ॥ |
| २१ | ४ | गुणस्य यथा | सतोऽप्यनिबन्धः ॥ |
| २२ | १–२ | क्रियाया यथा | सत्याऽप्यनिबंधः ॥ |
| २४ | १ | द्रव्यस्य यथा | [अ]ऽसतोपि निबंध ॥ |
| २४ | १ | मुष्टिग्राह्यत्वस्य | मुष्टिग्राह्यं सूचिभेद्यं च तमो वर्णनीयमित्यर्थः ॥ |
| २६ | १ | समुद्रेषु एव | नान्यत्र वर्णनीया. ॥ |
| २६ | १ | ताम्रपर्ण्यामेव | मौक्तिकानि गजकुंभेऽपि वर्ण्यन्ते परमिदं नयपेक्षयावधारणम् ॥ |
| २९ | ४ | कृष्णनीलयोः | वर्ण्यो. ॥ |
| ३४ | ३ | निर्वर्ण्य | दृष्ट्वा ॥ |
| ३४ | ४ | लज्जानम्रमुखी | लज्जानम्र इति क्रियाद्वयापेक्षया आलोक्यस्य एककर्तृकत्वम् उक्तं लज्जमाना नम्रमुखीत्यर्थः ॥ |
| ३४ | ९ | रसस्योत्कर्ष | रसस्यैव गुणदोषौ ॥ |
| ३४ | ९ | भक्त्या | उपचारेण ॥ |
| ३४ | ११ | गुणाः | रसे एव गुणा रसाभावे न गुणा इति गुणस्यान्वयव्यतिरेकौ स्वयमभ्यूह्यौ ॥ |
| ३४ | १२ | कष्टत्वादयः | इमे हि अर्थस्य दोषाः ॥ |
| ३४ | १३ | अश्लीलत्वादयः | शब्दार्थयोरश्लीलत्वादयः दोषा न गुणा भवेयुः ॥ |
| ३४ | १७ | अङ्गाश्रिता | येत्वंगिनि रसे भवन्ति ते गुणाः येत्वङ्गयोः शब्दार्थयोराश्रितास्तेऽलङ्काराः ॥ |
| ३५ | २ | अनुपकारिणः | बाधकत्वादिना ॥ |
| ३५ | ३ | वाच्य | अर्थ ॥ |
| ३५ | ३ | वाचक | शब्द ॥ |
| ३५ | ३ | °पर्यवसिता | न तु रसपर्यवसिता ॥ |
| ३५ | ५ | तत्परत्वे | तस्य रसस्य परत्वम् उपकारकत्वम् ॥ |
| ३६ | १ | चलापाङ्गां | दुष्यन्तः शकुन्तलायां नाटके वक्ति ॥ |
| ३६ | २ | रहस्याख्यायीव | साधु रहस्यमाख्याति साधौ णिन् ॥ |
| ३७ | १ | रसपरत्वेन | शृंगाररसपरत्वेन ॥ |
| ३८ | २ | लीलावधूत | लीलयावधूता पद्मा लक्ष्मीर्यया पक्षे लीलयावधूतं पद्मं कमलं यया सा ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ३८ | ५ | **सागरिका** | नाम स्त्री, रत्नावल्या नामांतरमिदम् ॥ |
| ३८ | ७ | **गुणीकृतो** | गौणीकृत· ॥ |
| ३८ | ७ | **अपरिजिघटिषया** | वत्सराजसागरिकयो—रपरि—॥ |
| ३८ | ९ | **उद्दामोत्कलिकां** | उत्कृष्टा कलिका पक्षे रणरणकम् ॥ |
| ३८ | ९ | **जृम्भां** | विकासम् ॥ |
| ३८ | १० | **श्वसनो** | अस...॥ |
| ३८ | ११ | **समदनाम्** | वृक्षः काम· च ॥ |
| ३८ | १२ | **प्रमुखीभावदशायां** | संमुखीभावदशायाम् ॥ |
| ३८ | १६ | **यथा—** | भर्तृहरिवच· [? भल्लटवच ] ॥ |
| ३९ | ९–१० | **निर्वेदस्यांगताम्** | उपकारकताम् ॥ |
| ३९ | १५ | **व्यतिरेक** | व्यतिरेकनामाऽलंकार ॥ |
| ३९ | १४ | **यथा** | बालरामायणे सीतास्वयंवरे जनक आह ॥ |
| ४० | २ | **धर्मवीरं** | रसं प्रति ॥ |
| ४० | २ | **अनुभावतां** | कार्यताम् ॥ |
| ४० | ३ | **अभिजनः** | कुलम् ॥ |
| ४० | ५ | **धर्मवीर** | धर्मवीरो हि स उच्यते यो गुणान् अगुणांश्च याथानथ्येन वक्ति। अत्र तु क्व नु पुनर्गिनि भणता दोषः आच्छादितः ॥ |
| ४० | | **कोपात्** | विक्रमादित्यस्यामात्येनोक्तम् ॥ |
| ४१ | ४ | **ताडेन** | आघातेन ॥ |
| ४१ | १० | **न ते भीरु** | अन्यो हि धनीयो भवति स धन न एकत्र स्थापयति ॥ |
| ४१ | १२ | **अनुप्राणकं** | अनुजीवकम् ॥ |
| ४२ | १ | **सरस्यांगत्वेन** | उपकारकत्वेन ॥ |
| ४२ | ६ | **मुख्यो** | मुखस्य तुल्यः शाखादेर्यः ॥ |
| ४२ | १३ | **वाचक इति** | वाचक इति मुख्यस्यैव नामांतरम् ॥ |
| ४३ | १ | **प्रकृतानुपयोगात्** | प्रारब्धे शास्त्रे उपकाररहितत्वात् ॥ |
| ४५ | १ | **उपचरितं** | उपचारे......इति पर्यायांतरम् ॥ |
| ४५ | ३ | **भेदस्य** | बीजं [इति शेष·] ॥ |
| ४५ | ८ | **संबंधे** | संबंधनाम्नि ॥ |
| ४५ | १५ | **तत्त्वेन** | अभेदेन ॥ |
| ४६ | २ | **प्रयोगाद्येषां** | पावनत्वरौद्रत्वादीनाम् ॥ |
| ४६ | ४ | **अनुबन्ध्य इति** | विनाश्यः ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ४६ | ७ | **विशेष्यं** | व्यक्तिम् ॥ |
| ४६ | ७ | **अभिधा** | मुख्यशब्दव्यापार ॥ |
| ४६ | ७ | **विशेषणे** | जातौ ॥ |
| ४७ | ७ | **गोलाणइकच्छ** | गोदावरीनदीकच्छनिकुंजवासिना ॥ |
| ५३ | २ | **अत्ता एत्थ** | अत्ता श्वश्रूरत्र शय्यायां शेते ॥ |
| ५३ | २ | **दिअसयं** | अहनि ॥ |
| ५३ | १० | **सयज्झय** | हे प्रातिवेशिक ॥ |
| ५४ | [illegible] | **अणाएण** | अज्ञातेन अन्यायेन वा ॥ |
| [illegible] | [illegible] | **दिहिं** | धृतिम् ॥ |
| [illegible] | ६ | **ओरमसु** | निवर्तस्व ॥ |
| [illegible] | ६ | **गहवईच्छित्तं** | गृहपतिक्षेत्रम् ॥ |
| [illegible] | ११ | **महुएहिं** | मधूकैः ॥ |
| [illegible] | २ | **नियदइय** | निजदयितादर्शनाक्षिप्त ॥ |
| [illegible] | [illegible] | **विधिनिषेधयो** | व्रज इति विधिः । नानेन पथा इति निषेधः ॥ |
| [illegible] | ६ | **°विकत्थनः** | वर्णनशील ॥ |
| [illegible] | १६ | **व(? वि)त्थयत्थणि** | हे विस्तृतस्तनि ॥ |
| [illegible] | [illegible] | **दे** | समुखीकरणं ॥ |
| [illegible] | २० | **पसीअ** | प्रसीद ॥ |
| [illegible] | ४ | **नीसास** | निःश्वासरोदितव्याल ॥ |
| [illegible] | ५ | **दक्खिणणहयस्स** | दक्षिणहतस्य ॥ |
| [illegible] | [illegible] | **°व्यलीक** | अपराधः ॥ |
| [illegible] | ११ | **णहमुह** | नखमुखैर्नखक्षतैः प्रमाधिताग । यथेष्ट परस्त्रियं संभुज्य समागत प्रियतमं विलोक्य कापि नायिका एवमाह ॥ |
| [illegible] | १२ | **निव्वणाहरो** | निर्व्रणाधर ॥ |
| [illegible] | २ | **उपभोगोद्भेदेन** | संभोगप्रकाशनेन ॥ |
| [illegible] | ३ | **तद्बलसमुत्थस्तु** | तस्य वाच्यार्थस्य बलं तद्बलं तस्मात समुत्थ ॥ |
| [illegible] | १० | **सभमर°** | हे सभ्रमरपद्माघ्रायिनि हे वारितप्रतिकूले ॥ |
| [illegible] | १४ | **तद्विषयः** | व्यङ्ग्यार्थवाचकः ॥ |
| [illegible] | ३ | **समयापेक्षा** | संकेतापेक्षा ॥ |
| [illegible] | ४ | **मुख्यार्थबाधादि°** | आदिशब्दान्निमित्तप्रयोजनपरिग्रहः, मुख्यार्थबाधादिसहकारिणी अपेक्षा यस्याः ॥ |
| [illegible] | ५ | **तच्छक्त्युपजनित°** | ताश्च मुख्यागौणीलक्षणाः च ताः शक्तयः च ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ५८ | ८ | वाक्यविषयौ एव | . . . . . . .विचार्यमाणत्वात वाक्यं हि शब्दसमुदायः ॥ |
| ५८ | [illegible] | वक्त्रादि | पूर्वं हि अर्थो व्यञ्जय एवोक्तः सांप्रतम अर्थस्यापि व्यञ्जकत्वमाह ॥ |
| ५८ | १० | प्रतिपाद्य | बोध्य ॥ |
| ५८ | ११ | मुख्यामुख्य | अमुख्येत्युक्ते गौणलक्षणयोर्ग्रहणम् ॥ |
| ५९ | २ | जरठच्छेदा | जरठः कठिनश्छेदो यासां ता. ॥ |
| ५९ | [illegible] | बांधवजनस्य | मल्लक्षणस्य ॥ |
| ५९ | १३ | पाञ्चालतनयां | द्रौपदीम् ॥ |
| ५९ | १५ | गुरुः | युधिष्ठिरः ॥ |
| ५९ | १५ | मयि | भीमे ॥ |
| ६० | ४ | उद्देशः | प्रदेशः ॥ |
| ६० | १० | कुञ्जोत्कर्ष | कुञ्जोत्कर्षेण अङ्कुरितो रमणीविभ्रमो येन ॥ |
| ६० | १४ | अन्यासक्तेः | नैकट्यादित्यर्थे ॥ |
| ६० | १७ | णोल्लेइ | नोदयति ॥ |
| ६० | १७ | अणोल्लमणा | अनार्द्रमना कठोरचित्त ॥ |
| ६१ | ४ | किं ति | किमिति ॥ |
| ६३ | १० | अभिधा | मुख्या ॥ |
| ६४ | २ | अनवच्छेदे | अनवबोधे ॥ |
| ६४ | २ | दाशरथौ | दशरथापत्ये रामे न तु परशुरामादौ ॥ |
| ६४ | ८ | ग्रहविशेष | न तु विदुषि नरकासुरे च ॥ |
| ६४ | १० | भार्गवकार्तवीर्ययोः | परशुरामार्जुनयो ॥ |
| ६४ | ११ | अश्वे | न तु लवणे ॥ |
| ६४ | १३ | युष्मदर्थे | देवशब्दः प्रतीयते ॥ |
| ६५ | १ | रतिव्यत्यये | विपरीतरते ॥ |
| ६५ | २ | प्रसादसाम्मुख्ये | प्रस्तावात् प्रसादरूपे पालने तन्मुख परा भवतु इत्यर्थः ॥ |
| ६५ | ४ | राजनि | महेश्वरशब्दो नियम्यते ॥ |
| ६५ | ५ | सुहृदि | सुहृदर्थे मित्रशब्दः क्लीबव्यक्तिमान् सूर्ये पुलिङ्गव्यक्तिमान् ॥ |
| ६५ | ८ | काव्यमार्गे | किंतु वेदमार्गे उपयोगिनी ॥ |
| ६५ | ९ | समरे न | अपि तु मथ्नाम्येव ॥ |
| ६५ | १३ | पडहमित्तत्थणिया | कुम्भस्तनी ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ६५ | १३ | **पइहमिसेहिं** | प्रहतिप्रमाणाभ्याम ॥ |
| ६५ | १३ | **अच्छिवत्तेहिं** | अक्षिपत्राभ्याम ॥ |
| ६५ | १४ | **पयावत्थं** | ऊर्ध्वांगुली ॥ |
| ६५ | १४ | **पत्तियमित्तेहिं** | पञ्चभिरंगुलीभिः ॥ |
| ६५ | १५ | **अपदेशो यथा** | अपदेशः स्वगतं इति अनेन पदेन सूचितः ॥ |
| ६५ | १६ | **इतः** | मत्तः प्रज्ञापने ॥ |
| ६५ | १६ | **नेतः** | मत्तः ॥ |
| ६५ | १८ | **स्वयं** | आत्मनि ॥ |
| ६५ | १९ | **निर्देशो यथा** | निर्देशः परगतः ॥ |
| ६५ | २० | **कोऽपि** | कोऽपि इति-पदेन निर्देशः सूचितः ॥ |
| ६५ | २१ | **माम्** | वत्सराजम् ॥ |
| ६५ | २१ | **आख्यातवत्यः** | सख्यः ॥ |
| ६६ | २ | **अनंगशासनम** | रुद्रम् ॥ |
| ६६ | ३ | **वीक्षितेन** | वीक्षणेन ॥ |
| ६६ | ६ | **आकीर्णे** | जनाकुले स्थाने ॥ |
| ६६ | ७ | **अवेत्य** | ज्ञात्वा ॥ |
| ६६ | ७ | **लीलापद्मं न्यमीलयत्** | सन्ध्याया संकेत इत्यर्थः ॥ |
| ६६ | १३ | **अभिधायां** | मुख्यशब्दव्यापारो मुख्या इत्यर्थः ॥ |
| ६६ | १६ | **संकेत** | नहि पावित्र्यं गंगाशब्द संकेतितं ॥ |
| ६६ | १७ | **लक्ष्यं** | गंगा [तट] लक्षणम् ॥ |
| ६६ | १८ | **तत्र शब्दः ..** | यथा हि तटे गंगात्वं आरोप्यमाणं सो गंगायां मुख्यभूतो जलप्रवाहादि. शब्द स स्खलद्गतिर्नात्र तथा ॥ |
| ६६ | १९ | **लक्ष्यं** | गङ्गातटादि ॥ |
| ६६ | २२ | **विषयप्रयोजनयोः** | गङ्गापावित्र्ययोः ॥ |
| ६६ | २३ | **अर्थाधिगतिः** | अर्थाधिगतिर्नैयायिकादीनां, प्राकट्यं भट्टमते, संवित्तिः प्रभाकरमते ॥ |
| ६७ | २ | **एकान्त** | एकान्तं निर्व्यञ्जन पक्षे निश्चय ॥ |
| ६७ | १४ | **अशनिः** | वज्रम् ॥ |
| ६७ | १५ | **अनुदारः** | अनुगता दारा यस्य ॥ |
| ६८ | २ | **विटङ्कित** | दूरोन्नत ॥ |
| ६८ | ५ | **प्रोलसद्धारः** | प्रोल्लसन्तो हारा यस्मिन, प्रोल्लसन्त्यो धारा यस्य ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ६८ | ५ | कालागुरु | वन्, पक्षे तेन ॥ |
| ६८ | १० | चंद्रा | सुवर्ण ॥ |
| ६८ | १० | श्यामा | अप्रसूता भवेत् श्यामा ॥ |
| ६९ | ३ | विरोधालंकारो | यदि हि विरोधालंकारो स्यात् तदा हर्म्य गामिन्य इत्यादीनि कुर्यात् ॥ |
| ६९ | १२ | निशा | अत्र निशाशब्दो लक्षणया सम्यग्दृष्टौ वर्तते ॥ |
| ६९ | १३ | यस्यां | लक्षणया मिथ्यादृष्टौ ॥ |
| ७० | २ | उपदेश्यं | शिष्यम् ॥ |
| ७० | ८ | अवधानं | जागरणम् ॥ |
| ७१ | ८ | त्रिकनिर्देशात् | अस्मि इति निर्देशात् ॥ |
| ७२ | | शूरकृतविद्यसेवकानां | असंभाव्यपराक्रमेण दुर्घटकार्यकारी शूरः, कृत्वा परं धाराधिरोहं नीता विद्या तत्त्वावबोधहेतुर्येन सेवा द्विधा आकारंगितादिभिः प्रभुमनोविज्ञान अकृत्यादेशाद्यगणन च ॥ |
| ७२ | ४ | वस्त्वलंकार | अत्र चतुर्भंगी। वस्तु वस्तु व्यनक्ति १<br>वस्तु अलंकारं व्यनक्ति २<br>अलकारो वस्तु व्यनक्ति ३<br>अलकारोऽलंकारं व्यनक्ति ४ |
| ७४ | २ | तं | वस्तु कर्तृ ॥ |
| ७४ | ६ | विवाहरे | श्रीसहोदर यद्रत्नममृतलक्षण तस्याहरणे यत्र कस्मं तत्कामेन रामाधरपानलम्पटं कृतम् । |
| ७४ | | कुसुमबाणेण | तद् हृदय यत्तेभ्योऽसुरेभ्योपि अकम्प कठोर कुसुमबाणेनापि निर्भेदितम् ॥ |
| ७६ | ५ | पदं | वस्तु कर्मभूतम् ॥ |
| ७७ | ४ | सरित्सात | सरिदायत्त ॥ |
| ७९ | २ | छण | उत्सवप्रसरे महार्घ्यो मनोहर सुरामोदो यत्र मधुमासस्याममपि मुखमपि ईदृशं म पौरम् सन् किंकरिष्यतीति न ज्ञायते ॥ |
| ८० | ५ | एवंभूतं | |
| ८० | ६ | समोसरइ | समवसरति ॥ |
| ८० | ८ | गोसम्मि | प्रातः ॥ |
| ८० | १४ | अंबुकुम्भैः | जलघटैः ॥ |
| ८१ | २ | आक्षेपो | अलङ्कारः ॥ |
| ८१ | ६ | नह्निशेष | गुण. ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ८१ | ३ | **गृध्रगोमायु** | नाम्नि प्रबंधे ॥ |
| ८१ | ४ | **°संकुले** | कंकालबहुले भीमे सर्वप्राणिभयकरे । उत्तरार्धम् ॥ |
| ८१ | ५ | **उपागतः** | प्रियो वा यदि द्वेष्यः प्राणिना गतिरीदृशी । उत्तरार्धम् ॥ |
| ८१ | ७ | **प्रभवतो** | समर्थस्य ॥ |
| ८१ | ९ | **मुहूर्तोऽयं** | मृत्योरप्यत्र मुहूर्ते विघ्नो भवतीति ॥ |
| ८१ | १३ | **°व्यावर्तन°** | पश्चाद्वाल्नम् ॥ |
| ८१ | १६ | **वस्तुनः** | प्रबन्धे ॥ |
| ८१ | १७ | **भेदत्रयम** | प्रबन्धे वस्तुनो वस्तुव्यञ्जकत्वमुदाहृतम् ॥ |
| ८४ | २ | **अहिरीओ** | अह्रीकः ॥ |
| ८४ | ३ | **अणिरिक्काओ** | परतंत्रा ॥ |
| ८४ | ३ | **णो** | अस्माकम् ॥ |
| ८४ | ८ | **तालैः** | मेघदूते ॥ |
| ८४ | ४ | **यां** | कांचनवासयष्टिम् ॥ |
| ८५ | ५ | **तूहं चिय** | तीर्थमेव ॥ |
| ८५ | ११ | **एकपदे** | युगपत् ॥ |
| ८५ | १२ | **निरातपत्ररम्यैः** | निरातपत्राण्यपि रम्याणि जलदेनैव तत्कार्यकरणत्वात् अथवा निश्चितान्यातपत्राणि भूमिस्फोटकानि तैर्वा रम्याणि ॥ |
| ८६ | १० | **उपांशु** | रहस्यम् ॥ |
| ८६ | १०-११ | **अनुजिघृक्षा** | अनुग्रहीतुमिच्छा ॥ |
| ८७ | २ | **नियंसण°** | रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ॥ |

## द्वितीयोऽध्यायः

| | | | |
|---|---|---|---|
| ८८ | ६ | **आलम्बनो°** | शृंगाररसस्येमे ॥ |
| ८८ | ९ | **कारण°** | विभाव° ॥ |
| ८८ | ९ | **कार्य°** | अनुभाव° ॥ |
| ८८ | १० | **सहचारि°** | व्यभिचारि |
| ८८ | १० | **शब्दव्यपदेश्यैः** | विभावादीनां कारणकार्यसहचारिशब्दव्यपदेश्यत्वं स्थायिभावानुमापकत्वेनैव न तु तात्त्विकं स्वयमेवाग्रे निषेधयिष्यत्याचार्यः । |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ८८ | १२ | **वासना** | संस्कारः ॥ |
| ८८ | १४ | **चर्व्यमाणतैकप्राणो** | चर्व्यमाणतैव एक प्राण यस्य सः ॥ |
| १०३ | १ | **तद्विनाशेऽपि** | कुलालाभावे घटसंभव इव ॥ |
| १०३ | २ | **नापि ज्ञाप्यः** | यथा दीपस्य घटो ज्ञाप्यः ॥ |
| १०३ | [illegible] | **सिद्धस्य** | पूर्वनिष्पन्नस्य रसस्याभावात् न हि घट इव पूर्वं निष्पन्नः सन् रसः पश्चाद्दीपेनेव विभावादिना ज्ञाप्यते ॥ |
| [illegible] | [illegible] | **दूषणम्** | न क्वचिद्दृष्टमिति वाक्यम् ॥ |
| [illegible] | [illegible] | **व्याघ्रादयो विभावाः** | व्यस्तत्वं व्यभिचरद् दर्शयति । यदि केवल विभावा एव रसस्य अभिव्यंजका प्रतिपाद्यन्ते तर्हि व्याघ्रादयो भयानकरसस्य विभावा वीराद्भुतरौद्ररसानां अभिव्यंजका न स्युस्ततो विभावानुभावव्यभिचारिणां समस्तानामेव रसव्यञ्जकत्वशक्तिर्न तु व्यस्तानाम् ॥ |
| १०४ | [illegible] | **आपाते** | आरंभेऽपि ॥ |
| [illegible] | [illegible] | **विभावानाम** | अत्र विभावानामेव केवलाना ग्रहणं कृत इति भावः ॥ |
| [illegible] | १४ | **उत्सुकम्** | प्रेयसि दूरस्थे चक्षुरुन्मुक्त ज्ञानम् ॥ |
| [illegible] | १ | **व्यभिचारिणाम्** | केवलानामेव ग्रहणम् ॥ |
| [illegible] | [illegible] | **तद्विपरीत** | शृंगारविपरीत. ॥ |
| [illegible] | [illegible] | **तन्निमित्तम** | शृंगारनिमित्तम् ॥ |
| [illegible] | [illegible] | **अर्थप्रधानो** | दृश्यंते हि राजानः शृंगारपुष्टिकृतो अर्थरसकृते समरसंरम्भं विदधाना रौद्रं रस भजंते ॥ |
| [illegible] | [illegible] | **तद्विभाव** | तस्य भयानकरसस्य विभावा. तद् विभावा । |
| [illegible] | [illegible] | **त्रिवर्गात्मकप्रवृत्ति** | त्रिवर्गात्मकप्रवृत्तौ शृंगारवीराद्भुतरूपरसत्रय प्रवृत्तौ ये धर्मास्तद्विपरीता निवृत्तिः संसाराद्विरमण तस्य ये धर्मास्तदात्मकः तत् द्वन्द्वसमासः ॥ |
| [illegible] | १० | **परस्परासंकीर्णाः** | परस्परं अमिलिता. ॥ |
| [illegible] | ११ | **आर्द्रतास्थायिकः** | आर्द्रता स्थायी भावो यस्य ॥ |
| [illegible] | [illegible] | **रतौ** | अन्तर्भवति ॥ |
| [illegible] | [illegible] | **धर्मवीरे** | वीररसप्रथमभेदेऽन्तर्भवति ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| १०६ | १३ | एवं | भये ॥ |
| १०६ | १४ | गर्धस्थायिकस्य | गर्ध· अभिलाष· स्थायी भावो यस्य ॥ |
| १०७ | १ | स्त्रीपुंसौ | आलंबन॰ ॥ |
| १०७ | १ | माल्यर्तु॰ | उद्दीपन॰ ॥ |
| १०७ | ३ | वर्जितव्यभिचारिका (॰रिणी) | एतद्वर्जितैर्व्यभिचारिभि. व्यभिचारिणि ॥ |
| १०७ | ४ | समग्रविषयग्राम॰ | समस्तविषयगमहसंपूर्णयोः ॥ |
| १०७ | ४ | संप्रयोग॰ | सुरत॰ ॥ |
| १०७ | ५ | सुखोत्तरा | सुखप्रधाना ॥ |
| १०७ | ६ | आस्थाबन्धात्मिका | अय मम मम इय एवरूपा आस्था ॥ |
| १०७ | ८ | ॰विषया | रतिः ॥ |
| १०८ | ३ | न...गोत्वस्येव शाबलेयबाहुलेयौ | यथा हि ग्रामकैदेशे ग्राम उपचर्यते तथा संभोगे शृंगारैकदेशेऽपि शृंगारशब्द उपचर्यते न हि इमौ गोत्वस्येव शाबलबाहुलेयौ शृंगारस्य द्वौ भेदौ किंतु एतयोर्द्वयोर्मिलितयोरेव शृंगाररसो जायते न हि केवले संभोगे विप्रलम्भे वा शृंगार इत्यर्थः ॥ |
| १०८ | ३ | गोत्वस्येव | व्यतिरेकदृष्टांत. ॥ |
| १०८ | ६ | तथा हि | संभोगे विप्रलम्भ विप्रलम्भेपि संभोग, रति. शृङ्गारस्य उभयात्मकत्व व्यनक्ति ॥ |
| १०८ | ७ | निराशत्वे | संभोगाशारहितत्वे ॥ |
| १०८ | ८ | वामत्वात् | विपरीतत्वात ॥ |
| १०८ | ९ | मुनिः | भरतः ॥ |
| १०९ | २ | कण्ठग्रहम् | यथा भवति ॥ |
| १०९ | ४ | वस्तुतः | तत्त्वत· ॥ |
| १०९ | ५ | स च | संभोग. ॥ |
| ११० | ९ | विशेषेण प्रलभ्यते | वक्ष्यते ॥ |
| ११० | १० | निद्रासुप्त॰ | किञ्चित् स्वपनं निद्रा सुप्त निर्भरं स्वापनम् ॥ |
| ११० | ११ | मरण॰ | मरणस्य प्रागवस्था मरण मृतस्य हि शृंगाराभावात् ॥ |
| १११ | ११ | उच्छिरसः | उद्धतशिखरस्य ॥ |
| १११ | १७ | गुरुसेतुभिः | मातापितृरूपसेतुभिः ॥ |
| ११२ | १ | लिखितप्रख्यैः | लिखितसदृशैः ॥ |
| ११२ | १ | उन्मुखाः | समुखाः ॥ |

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| ११२ | १० | **ससंभ्रमविस्मृत** | संभ्रमेण भयेन विस्मृत विस्मरणं प्रस्तावादु- गगायास्तेन सह वर्तते सः ॥ |
| ११२ | १२ | **तया** | पार्वत्या ॥ |
| ११२ | २२ | **माणइत्ताण** | मानवतोः ॥ |
| ११२ | २३ | **निच्चलनिरुद्ध** | निश्चलो निरुद्धनिःश्वासं यथा भवत्येवं दत्तौ कर्णौ याभ्याम् ॥ |
| ११३ | ८ | **तद्दत्तक्षम्पानतां** | तेन मधुरिपुणा याः दत्ता अपास्ताभिनंता ॥ |
| ११३ | १० | **गद्गद** | अव्यक्तं निम्नीभवद् ॥ |
| ११३ | ११ | **येन** | गीतेन ॥ |
| ११३ | १८ | **कलितोऽहं** | ज्ञातोह भवत्या पुरापीति संटंकः ॥ |
| ११४ | २ | **असत्प्रलापः** | असत् शब्दो द्वयोरपि योज्य ॥ |
| ११४ | ३ | **दृष्टिव्याकोश** | दृष्ट्योर्व्याकोशो विकास आकुञ्चन संकोच ॥ |
| ११४ | ५ | **आत्मस्थः परस्थः** | आत्मीया चेष्टां दृष्ट्वा यत हस्यते स आत्मस्थ पर हसंतं दृष्ट्वा परचेष्टया वा यत हस्यते स परस्थः ॥ |
| ११४ | ११ | **सौष्ठवान्वितैः** | मुष्टोभवि· सौष्ठव अविकृतैः ॥ |
| ११४ | १२ | **अलक्षितद्विजं** | अदृष्टदन्तम् ॥ |
| ११४ | १६ | **अंसक** | स्कन्ध ॥ |
| ११५ | ४ | **जिह्म** | वक्र ॥ |
| ११५ | ११ | **कुटिल** | विषमः ॥ |
| ११५ | ११ | **गजेन्द्राजिनम्** | गजेन्द्रचर्म ॥ |
| ११५ | १८ | **असितसिचय** | श्यामवस्त्र ॥ |
| ११५ | १८ | **उत्क्षिपन्** | उत्पादयन ॥ |
| ११६ | ४ | **तानव** | कार्श्य ॥ |
| ११६ | १५ | **अभिजन** | कुल ॥ |
| ११६ | १८ | **आवेगः** | सम्भ्रम. ॥ |
| ११७ | ४ | **प्रभाव** | प्रतिनायकवर्तीनि सर्वत्र योज्यम् ॥ |
| ११७ | ५ | **वैशारद्य** | सामाद्युपायनियोजने दक्षत्वम् ॥ |
| ११८ | १ | **अनिष्ट्वा** | यागम् अकृत्वा ॥ |
| ११८ | ८ | **विवेकः** | रौद्रवीररसयोर्भेद. ॥ |
| ११९ | २ | **मृदून्** | न पुन· कठोरचेष्टितानि पूत्करणादीनि ॥ |
| ११९ | ११ | **उद्भ्रान्त** | वमन ॥ |
| ११९ | १२ | **नासामुखविकूणनाच्छादन** | नासामुखयोः विकूणनं नासामुखयोः एव आच्छादनम् ॥ |

